क्र्यै० । प्लुष्यति[1] प्लुष्णाति प्लुष्यते वा प्लुक्षिः अग्निः, जठरं च । कर्त्ता कर्म च । शुष शोषणे दै० । शुष्यतेऽनेनेति शुक्षिः तेजः । करणम् । कुष निष्कर्षे क्र्यै० । कुष्णाति कुष्यते वा कुक्षिः उदरम् । कर्त्ता कर्म च ॥

## अशेर्नित्[2] ॥ १२ ॥ ( पं० उ० ३।१५० )

अशेर्धातोः क्सिप्रत्ययो भवति[3] निच्च । अश भोजने क्र्यै०, अशू व्याप्तौ सौ० । अश्नाति अश्नुते वाऽनेन[4] रूपमिति अक्षि लोचनम् । कर्त्ता करणं च[5] ॥

## नियो मिः ॥ १३ ॥ ( पं० उ० ४।४५ )

नियो धातोर्मिप्रत्ययो भवति । णीञ् प्रापणे भ्वा० । नयतीति नेमिः चक्रप्रान्तः । कर्त्ता ॥

## अर्तेरूच[6] ॥ १४ ॥ ( पं० उ० ४।४६ )

अर्त्तेर्धातोर्मिप्रत्ययो भवति ऊ इत्ययमादेशश्च[7] । ऋ गतौ भ्वा० जु० । ऋच्छति इयर्त्ति अर्यते वा ऊर्मिः तरङ्गः । कर्त्ता कर्म च ॥

## अशेरश च[8] ॥ १५ ॥ ( पं० उ० ४।४७)

---

१. 'प्लुष्यति' नास्ति क. ।

२. 'निच्च' इति क. । युक्तोऽयं पाठः । चादनिच्च । तेनोभयथा आद्युदात्तोन्तोदात्तश्च सिद्ध्यति ।

३. 'भवति' नास्ति ग. घ. ।

४. 'अनेन' नास्ति ग. घ. ।

५. 'करणं च' नास्ति ग. घ. । 'करणं च' इत्यावश्यकम् । तथा चोक्तं महाभाष्ये—'अश्नोतेरयमौणादिकः करणसाधनः क्सिप्रत्ययः । अश्नुतेऽनेनेत्यक्षिः । महा० ३।२।११५ ।

६. 'रुच्च' इति घ. । 'रूच्च' इति ङ. । 'रूर्च' इति ज. । 'उच्च' इति पाठे तपरकरणाद् हलि च (८।२।७७) इति दीर्घत्वं न स्यात् । 'ऊच्च' इति पाठे तपरकार्याभावात् तपरकरणमनर्थकं स्यात् । केचिदूर्णोतेरपि 'ऊर्मि' शब्दं साधयन्ति । तदाह देवराजः—'ऊर्णोतेर्णलोपश्च' इति मिप्रत्यय इति केचित् । 'अर्त्तेरुच्च' इति मिप्रत्यय इति कमलनयनः । (पृ० ४४) इति ।

७. 'आदेशो भवति' इति क. ।

८. 'रश्च' इति ङ. । एके वृत्तिकाराः 'अश्नोतेरश्च' इत्येवमधीयते सूत्रम् । देवराजस्तु 'रश्मयः' पदव्याख्याने दशपादीपाठमेव स्वीचकार (पृ० ३४) ।

अशेर्धातोर्मिप्रत्ययो भवति रश इत्ययमादेशः[1]। अशू व्याप्तौ सौ०, अश भोजने क्र्यै०। अश्नुते अश्नातीति वा रश्मिः मयूखः[2]। कर्त्ता॥

**भुवः क्मिन्[3] ॥ १६ ॥ ( पं० उ० ४।४८ )**

भुवो क्मिन्[4] प्रत्ययो भवति। भू सत्तायाम् भ्वा०। भवन्त्यस्यां भावा[5] इति भूमिः क्षितिः। अधिकरणम्॥

**दल्मिः ॥ १७ ॥ ( पं० उ० ४।४६ )**

अयं निपात्यते क्मिन्प्रत्यये[6]। दल विदारणे भ्वा० चु०। इडागमाभावश्च निपात्यते। दल्यतेऽनेन दलयति वा[7] दल्मिः आयुधम्। करणं कर्त्ता च॥

**वीज्याज्वरिभ्यो निः ॥१८॥ (पं० उ० ४।५०)**

एभ्यो धातुभ्यो निप्रत्ययो[9] भवति। वी गतिप्रजनकान्त्यसनखादनेषु[10] अ०। वीयत इति वेणिः केशबन्धः। कर्म। बाहुलकाण्णत्वम्[11]। ज्या वयोहानौ क्र्यै०। जिनातीति ज्यानिः हानिः[12]। कर्त्ता। ज्वर रोगे भ्वा०। ज्वरति ज्वरणं वा[13] जूर्णिः[14] रोगः। कर्त्ता भावश्च॥

---

१. '०मादेशश्च' इति क.। २. 'मयूरः' इति ग. घ.।

३. 'कित्' इति ग. घ.। क्मिन् इत्येव पाठः साधीयान् भूमिशब्दस्य वेदेषु सर्वत्राद्युदात्तत्वदर्शनात्। ४. 'मिप्रत्ययो' इति ग. घ.।

५. 'भावा' नास्ति क.। ६. 'मिप्रत्यये' इति ग. घ.।

७. 'अयं निपात्यते क्मिन्प्रत्यये। दल विशरणे। अस्येडभावो निपात्यते। दल्यतेऽनेनेति दलयतीति वा' इति क.। ८. इतोऽग्रे 'हा' इत्यधिकम् ङ.।

९. इह अग्रे च ग. घ. कोशयोः 'निः प्रत्ययो' पाठः।

१०. 'वी गतिप्रजनादौ' इति ग. घ.। '० कान्त्यावसनखादनेषु' इति क. कोशेऽपपाठः। ११. 'बाहुलकत्वाण्णत्वम्' इति क.। 'च' इत्यधिकम् ग. घ.।

१२. 'हानिः' नास्ति ग. घ.। १३. 'वा' नास्ति क.।

१४. नारायणस्तु सूत्रे 'ज्वरि' धातोः स्थाने त्वरिं पठित्वा 'तूर्णि' शब्दं साधयति। तदयुक्तम्। सर्वोणादिवृत्तिविरोधात्, 'वहिश्रिश्रु' (द० उ० १।२१) इत्युत्तरसूत्रे तूर्णिशब्दस्य साधितत्वाच्च। स्वयमपि च तत्र तूर्णिशब्दं साधयत्येव। स्वरभेदादत्र पुनः साधनमिति चेत्तदपि न, सर्वत्रैव तूर्णिशब्दस्याद्युदात्तत्वस्यैव दर्शनात्। जूर्णिः='जूड़ी' इति लोकभाषायाम्।

## सृवृषिभ्यां कित् ॥१६॥ (पं० उ० ४।५१)

आभ्यां धातुभ्यां[1] निप्रत्ययो भवति किच्च[2]। सृ गतौ भौ० जौ०। धावति सिसर्त्ति वा सृणिः अग्न्यनिलजलानि। कर्त्ता। वृषु सेचने भौ०। वर्षतीति वृष्णिः वासुदेववंशः, मेघो वा॥

## अङ्गे र्नलोपश्च ॥२०॥ (पं० उ० ४।५२)

अङ्गेर्धातोर्निप्रत्ययो भवति नलोपश्चास्य धातोः। अगि गत्यर्थः भौ०। अङ्गति ज्वालारूपेणोर्ध्वं गच्छतीति अग्निः[3] अङ्ग्यतेऽसाविति वा[4] हुताशनः। कर्त्ता कर्म च[5]॥

## वहिश्रियुश्रु ग्लाहा[6]त्वरिभ्यो नित् ॥२१॥ (पं० उ० ४।५३)

एभ्यो धातुभ्यो निप्रत्ययो भवति निच्च[7]। वह प्रापणे भौ०। वहति उह्यते वा वह्निः अग्निः[8]। कर्त्ता कर्म च। श्रिञ् सेवायाम् भौ०। श्रयन्ति ता[9]मिति श्रेणिः सङ्घातः। कर्म। यु मिश्रणे आ०[10]। युवन्त्यस्यामिति योनिः प्रकृतिः[11] उत्पत्तिस्थानम्। अधिकरणम्। श्रु गतौ भौ०। श्रूयतेऽसौ पुम्भि[12]रिति श्रोणिः जघनम्। कर्म[13]। ग्लै हर्षक्षये भौ०[14]। ग्लायतेऽनेनेति ग्लानिः दीनता, हर्षक्षयश्च। करणम्। ओहाङ् गतौ जौ०, ओहाक् त्यागे जौ०[15]। जिहीते जहाति वा[16] हानिः द्रव्यनाशः। कर्त्ता। ञित्वरा सम्भ्रमे। त्वरते

---

'पर्षतेरपीच्छन्त्येके। पृष्णिः रश्मिः' इति हेमचन्द्रः (है० उ० पृ० ११०) भोजस्तु 'घुनोतेरपि निप्रत्यय'माह (२।१।२१०)।

१. 'धातुभ्यां' नास्ति ग. घ.। २. 'स च कित्' इति ग. घ.।

३. 'भौ०………… अग्निः' एतावान् पाठो नास्ति क.।

४. 'वा' स्थाने 'अग्निः' इति क.। ५. 'कर्त्ता कर्म च' नास्ति क.।

६. 'श्रिश्रुयुद्रुग्ला' इति ङ। पञ्चपाद्यामप्येवं क्वचित् पठ्यते।

७. 'नित्सञ्ज्ञः' इति क.। ८. 'अग्निः' नास्ति क.।

९. 'एतां' इति ग.। 'एनां' इति घ.। १०. 'आ०' नास्ति क.।

११. 'वण्यन्तराकृतिः' इति क.। 'मानान्तरप्रकृतिः' इति ग.। 'प्राण्यन्तरप्रकृतिः' इति च.। 'आन्यन्तरप्रकृतिः' इति छ.। १२. 'अम्भसि' इति क.।

१३. 'कर्म' नास्ति ग. घ.। १४. 'भौ०' नास्ति क.।

१५. 'भौ०' इति क.कोशेऽपपाठः।

१६. 'जहाति जिहीते हीयते वा' इति क.। 'हीयते वा' इति पाठे उत्तरत्र 'कर्ता कर्म च' पाठेन भाव्यम्। तत्र 'कर्म च' इति नास्ति। तेन 'हीयते' इत्यपपाठः।

त्वरणं वा तूर्णिः त्वरा[1]। कर्त्ता भावश्च ॥

## घृणिपृश्निपार्ष्णिभूर्णि[2] ॥२२॥ (पं० उ० ४।५४)

एते शब्दा निपात्यन्ते निरूढ[3]लोपागमवर्णविकाराः। घृ क्षरणदीप्त्योः जौ०। अस्य गुणाभावो निपात्यते। जिघर्त्तीति घृणिः अग्निः, रश्मिश्च[4]। कर्त्ता। स्पृश स्पर्शने [तौ०][5]। अस्य सकारलोपो निपात्यते गुणाभावश्च। संस्पर्शमात्र[6] पृश्निः स्तोकम्[7], जीवश्च। भावः। स्पृश स्पर्शने [तौ०][8]। अस्य सकारलोपो वृद्धिरुपधाया षत्वं च[9] निपात्यते। स्पृशन्त्यनयेति पार्ष्णिः पादैकदेशः। करणम्। भू सत्तायाम् भौ०। अस्य रुगागमो[10] निपात्यतेऽगुणत्वं च। भवतीति भूर्णिः भूमिः, कालश्च[11]। कर्त्ता ॥

बाहुलकादन्येऽपि निपात्यन्ते। धृङ् अवस्थाने भौ०। अस्य ऊकारादेशो रुगागमश्च भवति[12]। धरणं धूर्णिः धृतिः। भावः। श्यैङ् गतौ भौ०। अस्य सम्प्रसारणमगुणत्वं दीर्घाभावश्च[13] निपात्यते। श्यायत इति शिनिः नाम[14]

---

१. 'बाहुलकाण्णत्वम्' इत्यधिकम् क.। व्यर्थमेतत्, 'रषाभ्यां नो णः' (अ०८।४।१) इत्यनेनैव णत्वसिद्धेः।

२. 'घृणिः पृश्निः पार्ष्णिः भूर्णिः' इति क. ज.। 'चूर्णिभूर्णि' इति ङ.। पञ्चपाद्यामपि क्वचित् 'चूर्णि' इत्यधिकम्। सूत्रे समाहारद्वन्द्वत्वान्नपुंसकत्वम्।

३. 'निप्रत्ययनिरुद्ध' इति क.।

४. 'च' नास्ति क.।

५. 'संस्पर्शने' इति ग. घ.। 'संस्पर्शे भौ०' इति क.।

६. 'स्पर्शनमात्रे' इति ग. घ.।

७. 'अंशुः' इति क.।

८. 'संस्पर्शे भौ०' इति क.।

९. 'षकारोऽन्त्यस्य' इति क.।

१०. यदा धातो रुगागमो निपात्यते तदा गुणाभावनिपातनं व्यर्थम्, तथा सति अङ्गस्यानिगन्तत्वादलघूपधत्वाच्च। ग. घ.पुस्तकयोस्तु 'रुडागमः' इति पाठः साधीयान्, तथापि अस्मिन् पाठे 'अस्य' इति पदस्यान्वयो नावकल्पते। रुडागमस्तु प्रत्ययस्य संभवति।

११. 'वा' इति क.।

१२. 'धृञ् धारणे तौ०। अस्य ऊकारादेशो रुडागमश्च निपात्यते' इति ग. घ.।

१३. 'हलः' (अ० ६।४।२) इत्यनेन सम्प्रसारणस्य दीर्घत्वं प्राप्नोति तत्प्रतिषिध्यते। ग. घ. पुस्तकयोस्तु 'अस्य सम्प्रसारणं ह्रस्वत्वमगुणत्वं च निपात्यते' इति पाठः। अस्मिन् पाठे 'सम्प्रसारणस्य दीर्घत्वे कृते ह्रस्वत्वं विधीयते' इति भावः।

१४. 'नाम' नास्ति ग. घ.।

राजा, वर्णश्च । कर्म । कु शब्दे अा०, कुङ् अव्यक्ते शब्दे भ्वा० । अनयोर-गुणत्वं[1] निपात्यते णत्वं च प्रत्ययस्य । कौति कवते कूयते वा कुणिः विकल-पाणिः[2] । कर्त्ता कर्म च ।

## वृद्भ्यां[3] विन् ॥ २३ ॥ ( पं० उ० ४।५५ )

आभ्यां धातुभ्यां विन् प्रत्ययो भवति । वृ वरणे क्र्या० । वृणातीति[4] र्वविः धात्री । कर्त्ता । दृ विदारणे[5] क्र्या० । दीर्यतेऽनयौदन[6]मिति र्दविः साधन-भाण्डम्[7] करणम् ॥

## जृशस्तृजागृभ्यः क्विन् ॥ २४ ॥ ( पं० उ० ४।५६ )

एभ्यो धातुभ्यः क्विन् प्रत्ययो भवति । जृष् वयोहानौ दि० । जीर्यतीति[8] जीर्विः[9] कायः[10] । कर्त्ता[11] । शॄ हिंसायाम् क्र्या० । शृणातीति शीर्विः हिंसा । कर्त्ता । स्तॄञ् आ[12]च्छादने क्र्या० । स्तृणातीति स्तीर्विः अध्वर्युः तृणजा-तिर्वा[13] । कर्त्ता । [14]जागृ निद्राक्षये अा०[14] । जागर्त्तीति जागृविः अग्निः, राजा च । कर्त्ता ॥

## दिवो द्वे दीर्घश्चाभ्यासस्य ॥ २५ ॥ (पं० उ० ४।५७)

---

१. '०गणत्वं च' इति क. ।

२. एतन्नामकोऽष्टाध्याय्या वृत्तिकार आचार्यः । द्र० महा० १।१।७५ ।

३. 'वृदृभ्यां' इति ङ. ज. । पञ्चपाद्यां 'पदृभ्यां' इति नारायणश्वेतवनवासिनौ, अन्ये तु 'वृदृभ्यां' इत्येवं पठन्ति ॥

४. 'वृणोतीति' इति क. ।

५. 'दृ भये' इति क. ।

६. 'अन्नमोदनं' इति ग. । 'अनेनान्नमोदनं' इति घ. । 'इति' नास्ति क. ।

७. 'साधनं भाण्डम्' ग. घ. । दर्विः='कड़छी' इति भाषायाम् ।

८. 'जीर्यते इति' इति क. ।

९. 'जर्विः' इति क. । एवमेवोत्तरत्र क.कोशे 'शर्विः', 'स्तर्विः' इति पाठ उप-लभ्यते । प्रत्ययस्य कित्त्वाद् जर्विः शर्विः स्तर्विः इत्यपपाठाः ।

१०. 'कार्यः' इति ग. घ. । 'क्वाथः' इति च. ।

११. 'कर्त्ता' नास्ति क. ।

१२. 'छादने' इति क. ।

१३. 'व्रणजातिर्वा' इति ग. घ. ।

१४. 'अा०' नास्ति क. ।

दिवो धातोः क्विन् प्रत्ययो भवति द्वे चास्य रूपे भवतो दीर्घश्चाभ्यासस्य। दिवु क्रीडादिषु[1] दै०। दीव्यतीति दीदिविः[2] अन्नम्। कर्त्ता।[3]

क्रुविघृष्विच्छविस्थविदविकिकि[4]दीविः ॥ २६ ॥

( पं० उ० ४।५८ )

एते शब्दा निपात्यन्ते क्विन्प्रत्यये निरूढाः[5]। डुकृञ् करणे ता०, कृञ हिंसायां सौ०, कृञ् करणे भौ[6]। करोति कृणोति करतीति वा कृविः कारुः। कर्त्ता। घृ क्षरणदीप्त्योः जौ०। अस्य षुगागमो निपात्यते। जिघर्त्तीति घृष्विः गौः[7] वायुः, अग्निश्च। कर्त्ता। छद संवरणे चौ०[8] णिजन्तः। अस्य णिचो लोपे दलोपह्रस्वौ निपात्येते। छाद्यतेऽनयेति[9] छविः त्वक् शोभा च[10]। करणम्। ष्ठा गतिनिवृत्तौ भौ०। अस्य ह्रस्वत्वं निपात्यते। तिष्ठतीति स्थविः भुजङ्गमः, अग्निश्च। कर्त्ता। डुदाञ् दाने जौ०। अस्य ह्रस्वत्वं निपात्यते। ददातीति दविः दाता। कर्त्ता। कु शब्दे आ०, कुङ् अव्यक्ते शब्दे भौ०। अस्य इत्वं[11] निपात्यते प्रत्ययस्य च किः। कौति कवते वा किकिः[12] विद्वान्, शब्दा-

---

१. 'क्रीडायाम्' इति क.। २. 'दीदिवि' इति ग. घ.।

३. 'अभ्यासस्य दीर्घश्च' इत्यधिकम् क.।

४. 'कीकिः' इति ग. घ.। ५. 'निरुद्धाः' इति क.।

६. यद्यपि सम्प्रति पाणिनीयधातुपाठेष्वस्य भ्वादौ पाठो नोपलभ्यते, तथापि पूर्वमस्य भ्वादौ पाठ आसीत्। क्षीरस्वामी क्षीरतरङ्गिण्यां भ्वादावस्य व्याख्यानं करोति (द्र० १।३६)। पाल्यकीर्तिहैमचन्द्रप्रभृतयोऽपि वैयाकरणा अस्य भ्वादित्वमुररीकुर्वन्ति। सायणाचार्येण 'उयो षु शृणुहि' (ऋ० १।८२।१) इति ऋचो व्याख्याने धातुवृत्तौ (पृष्ठ १६३) चास्य महता प्रपञ्चेन भ्वादित्वं निराकृतम्। स्वामिदयानन्दसरस्वती तु भ्वादावेव कृञः पाठं मनुते, न तनादौ। तथा चोक्तम् 'डुकृञ् करणे इत्यस्य भ्वादिगणान्तर्गतऽपाठात् शब्विकरणोत्र गृह्यते, तनादिभिः सह पाठादुविकरणोऽपि' (द्र० यजु० भाष्य ३।५८)। अत्रतनादिभिः सह पाठादित्यस्य 'तनादिकृञ्भ्य उः' (अ० ३।१।७९) सूत्रे तनादिना सह कृञः पाठादित्यभिप्रायः। अत्रास्मत्संपादितायां क्षीरतरङ्गिण्यां 'कृञ् करणे' (१।६३९) 'डुकृञ् करणे' (८।११) धातुसूत्रव्याख्यानयोरास्माकीने टिप्पण्यौ द्रष्टव्ये।

७. 'गौ' इति नास्ति ग. घ.।

८. 'भौ' इति क.। 'छदि' इति केचिदिदन्तं पठन्ति।

९. 'अनेनेति' ग. घ.। १०. 'वा' इति ग. घ.।

११. 'ईत्वम्' इति ग. घ.। १२. 'कीकिः' इति ग. घ.।

कारो[1] वा। कर्त्ता। दिवु क्रीडादौ[2] दे०। अस्य दीर्घत्वं निपात्यते दीव्यतीति दीविः[3] कितवः। कर्त्ता॥

बाहुलकादन्येऽपि निपात्यन्ते। अट गतौ भ्वा०। अस्य[4] अगागमो[5] निपात्यते। अटन्त्यस्यां प्राणिनः श्वापदादय[6] इति अटविः अरण्यम्। अधिकरणम्॥

## पातेर्डतिः॥ २७॥ (पं० उ० ४।५६)

पातेर्डतिप्रत्ययो भवति। पा रक्षणे अ०। पातीति पतिः भर्त्ता। कर्त्ता॥

## अमेरतिः॥ २८॥ (पं० उ० ४।६१)

अमेर्धातोरतिः प्रत्ययो भवति। अम गत्यादौ[7] भ्वा०। अमतीति अमतिः व्याधिः, गतिर्वा। कर्त्ता॥

---

१. 'शब्दकारः' इति च.। २. 'दिव क्रीडादिषु' इति क।

३. श्वेतवनवासिना प्रक्रियाकौमुदीटीकाकृता च 'किकिः दिविः' इति द्वे पदे व्याकृते। अन्यैर्वृत्तिकारैस्तु एकं पदं व्याख्यातम्। नारायणस्तु 'किकि इत्युक्त्वा क्रीडति गच्छति वा किकिदीविः पक्षी' इत्याह [पृष्ठ ६३]। दीक्षितस्तु 'दीव्यतेः किकीपूर्वात् किकीदिविश्चाषः। बाहुलकाद्दीर्घह्रस्वयोर्विनिमयः। 'चाषेण किकिदीविना' [ऋ० १०।९७।१३] इति कौमुद्यामाह [पृ० ५५१] मनोरमायान्तु—विनिमय इति। किकिदीविः किकीदिविः इति द्विरूपकोशः। उज्ज्वलदत्तोऽप्यत्रैवानुकूल इति' [पृ० ७६०] आह। दयानन्दसरस्वतीस्वामिना तु शुक्लयजुषः १२।८७ मन्त्रव्याख्याने 'किकि ज्ञानं दीव्यति ददाति यः। कि ज्ञाने इत्यस्मादौणादिके सन्वति द्वौ कृते किकिः। तदुपपदाद् दिवुधातोरौणादिकः क्रिर्बाहुलकाद् दीर्घत्वं च' इत्युक्तम्।

किकिदीविः शब्दस्तु वेदे सर्वत्रैवान्तोदात्तः प्रयुज्यते। परं 'गतिकारकोपपदात् कृत्' [अ० ६।२।१३९] इत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते प्रत्ययस्य नित्वाद् 'ञ्नित्यादिर्नित्यम्' [अ० ६।१।१९७] इत्युत्तरपदाद्युदात्तत्वं प्राप्नोति तत्तु 'परादिश्च परान्तश्च' [म० भा० अ० ६।२।१९९] इति भाष्यवचनाद् निपातनाद् वा प्रतिविधातव्यम्।

४. 'अस्य' नास्ति ग. घ.। ५. 'अडागमः' इति ग. घ.। 'अस्य अडागमो निपात्यते' इति त्वपपाठः। 'अस्य'पदेन पूर्वनिर्दिष्टस्य धातोर्निर्देशात्। 'अडागमः' पाठे प्रत्ययस्याडागमो ज्ञेयः। अगागमस्तु कित्वाद् धातोरेव।

६. 'प्रायेणापदा' इति ग. घ.। ७. 'गत्यादिषु' इति क.।

## वहिवस्यर्त्तिभ्यश्चित् ॥ २९ ॥ ( पं० उ० ४।६२ )

एभ्यो धातुभ्योऽतिः प्रत्ययो भवति चित्संज्ञकः[1]। वह प्रापणे भौ०। वहतीति वहतिः वायुः, अनड्वाश्च। कर्त्ता। वस निवासे भौ०। वसन्त्यस्यामिति वसतिः आलयः[2]। अधिकरणम्। ऋ गतौ भौ० जौ०। ऋच्छति इयर्त्ति अर्यते वा अरतिः वायुः, मरणं च। कर्त्ता कर्म च॥

## अञ्चेः को वा ॥ ३० ॥ ( पं० उ० ४।६३ )

अञ्चेर्धातोरतिः प्रत्ययो भवति चित्संज्ञकः,[3] ककारश्चान्त्यस्य वा[4]। अञ्चु गतिपूजनयोः भौ०। अञ्चति अच्यते वा अङ्कतिः अञ्चतिः[5] ब्रह्माग्न्यनिलाः। कर्त्ता कर्म च॥

## हन्तेरंह च[6] ॥ ३१ ॥ ( पं० उ० ४।६४ )

हन्तेर्धातोरतिः प्रत्ययो भवति चित्संज्ञकः,[7] अंह इत्ययमादेशश्च। हन हिंसागत्योः आ०। हन्ति हन्यते वा अंहतिः पन्थाः, कालः, रथश्च। कर्त्ता कर्म च॥

## रमेर्नित् ॥ ३२ ॥ ( पं० उ० ४।६५ )

रमेर्धातोरतिः प्रत्ययो भवति नित्संज्ञकः[8]। रमु क्रीडायां भौ०। रमन्ते[9]ऽस्यामिति रमतिः क्रीडा। अधिकरणम्॥

## सुञोरिन् दीर्घश्च[10] ॥ ३३ ॥ ( पं० उ० ४।६६ )

---

१. 'चित्संज्ञश्च' इति क.। २. 'आलयम्' इति ग. व.।
३. 'चित्संज्ञः' इति क.। ४. 'ककारश्चान्तादेशः' इति ग. घ.।
५. 'अञ्जतिः अङ्कतिः' इति ग. घ.। ६. 'रंहश्च' इति क.।
७. 'चित्संज्ञश्च' इति क.। ८. 'नित्संज्ञश्च' इति क.।
९. 'रमन्त्यस्या०' इति ग. घ.।

१०. पञ्चपाद्यां 'सूङः क्रिः' इति पाठान्तरम्। अत्राह भट्टोजिदीक्षितः—'दशपाद्यान्तु 'सुञो रिन् दीर्घश्च' इति पाठः। तत्र रिनो नकारो नानुबन्धः, उत्तरसूत्रे प्रत्ययान्तरारम्भात्। अनुबन्धत्वे हि लाघवादिहैव 'क्रिन्' उच्येत। तथा सति सूरी सूरिणौ सूरिणः इत्यादि रूपम्। अत एवाभिधानमालायां 'सूरी' इति नान्तमुदाहृतमित्यवधेयम्। यत्तु दशपादीवृत्तिकारैर्नित्त्वं स्वीकृत्य 'सूरिः' इत्युदाहृतं तदेतेन प्रत्यु-

सुञो धातो रिन् प्रत्ययो भवति दीर्घश्च धातोः । षुञ् अभिषवे सौ० । सुनोति सूयते वा सूरिः[1] पण्डितः । कर्त्ता कर्म च ॥

## अदिशदिभूशुभिभ्यः क्रिन् ॥ ३४ ॥ (पं० उ० ४।६७)

एभ्यो धातुभ्यः क्रिन् प्रत्ययो भवति । अद भक्षणे आ० । अत्ति अद्यते वा अद्रिः पर्वतः । कर्त्ता कम च । शद्लृ शातने भौ० । शद्यत इति शद्रिः वज्र-गतिः, गिरिश्च । कर्म[2] भू सत्तायाम् भौ० । भवतीति भूरिः[3] बहुः । कर्त्ता । शुभ दीप्तौ भौ० । शोभत इति शुभ्रिः दर्शनीयः । कर्त्ता ॥

## वङ्क्र्यादयश्च[4] ॥ ३५ ॥ (पं० उ० ४।६८)

वङ्क्र्यादयः शब्दा निपात्यन्ते क्रिन् प्रत्यये निरूढाः[5] । वकि कौटिल्ये, वञ्चु गतौ भौ०[6] । वञ्चेर्नलोपाभावः[7] कुत्वं [ च ] निपात्यते । वङ्कते वञ्चते[8] इति[9] वा वङ्क्रिः शल्यं, शरीराङ्गं च[10] । कर्त्ता । मकि मण्डने भौ० । मङ्कत इति मङ्क्रिः शवः[11] । कर्त्ता । अकि लक्षणे भौ० । अङ्कत इति अङ्क्रिः चिह्नम् । कर्त्ता ॥

---

त्तम् । स्वरविरुद्धमपि 'सदा पश्यन्ति सूरयः' [ऋ० १।२२।२०] 'वि सूरयो दधतो विश्वमायुः' [ऋ० १।७३।५] इत्यादौ सूरिशब्दस्यान्तोदात्तत्वदर्शनात्' [प्र० मनो० पृ० ७९१] । तत्त्वबोधिनीकारोऽप्येवमाह [तत्त्व० पृ० ५५१] । अत्र क्षीरतरङ्गिण्या अस्मत्संस्करणे 'षुञ्'धातोर्व्याख्यानेऽस्मदीया द्वितीया टिप्पणी द्रष्टव्या (प्र० सं० पृष्ठ २२४, द्वि० सं० २३५) । अस्यां टिप्पण्यामुद्धृतस्य 'सुञो रिरिति दीर्घश्च' इत्यस्य स्थाने 'सुञो रिरिनौ दीर्घश्च' शुद्धपाठो ज्ञेयः । तेन रिप्रत्ययेऽन्तोदात्तः, रिन्याद्युदात्त-श्च स्वरो द्रष्टव्यः । लेखकप्रमादाद् अस्या वृत्तेः प्रागेव सूत्रे एकस्य 'रि'शब्दस्य लोपः संजातः स्यात् ।

१. दीर्घवचनसामर्थ्याद् गुणो न भवति ।

२. 'शीयत इति शद्रिः वज्रम्, गिरिश्च कर्त्ता' इति क पाठः । च.संज्ञकवृत्तेः पाठोऽपि क.कोशवदेव ।

३. इतोऽग्रे 'बहुसुवर्णं च' इति क.पुस्तके पाठः ।

४. 'चङ्क्र्या' इति घ.पाठः । अस्मिन् पुस्तके सर्वत्रैव वकारस्थाने चकारः ।

५. 'निरुढाः' इति क. ।

६. 'भौ०' नास्ति क. ।

७. 'नलोपाभावः' इति नास्ति ग. घ. ।

८. धातोः परस्मैपदित्वाद् 'वञ्चति' इति साधु ।

९. 'इति' नास्ति क. ।

१०. 'शरीराङ्गं च' इति नास्ति ग. घ. ।

११. इतोऽग्रे 'वशः' इत्यधिकम् ग. घ. ।

## राशतिभ्यां त्रिप्[1] ॥३६॥ (पं० उ० ४।६६)

आभ्यां धातुभ्यां त्रिप्[1] प्रत्ययो भवति। रा दाने[2] आ०, रै शब्दे भौ०। राति रायति[3] वा **रात्रिः** क्षपा। कर्त्ता। शतिः सौत्रो धातुः। शततीति[4] **शत्रिः** हस्ती। कर्त्ता॥

## अदेस्त्रिनिच्च[5] ॥३७॥ (पं० उ० ४।७०)

अदेस्त्रिनिच् प्रत्ययो भवति त्रिप् च[6]। अद भक्षणे आ०। अत्ति तपः-स्वाध्यायाविति **अत्री अत्रिः** वा[7]। ऋषिः। स्वरे रूपे च विशेषः। कर्त्ता॥

---

१. 'त्रिन्' इति क.। २. 'आदाने' इति क.।

३. 'रायतीति रात्रिः' इति क.। ४. 'शतीति' नास्ति क.।

५. 'आदेश्च' इति क.। नारायणश्वेतवनवास्युज्ज्वलदत्तास्तु 'अदेस्त्रिन्' इति पठन्ति। अत्राह श्वेतवनवासी—'प्रत्ययान्तरविधानं स्वरभेदात्। ननु च त्रिप्प्रत्ययेऽपि पित्त्वादनुदात्तत्वं, त्रिन्प्रत्ययेऽपि नित्त्वादाद्युदात्तत्वमिति स्वरभेदो नास्ति। एवं तर्हि प्रत्ययान्तरकरणमनर्थकम्' इति [पृ० १५४]।

प्रौढमनोरमाकारस्त्वाह—'उज्ज्वलदत्तस्तु 'अदेस्त्रिन्' इति पठित्वा अत्रिरित्युदाजहार। तन्न। त्रिपैव सिद्धे प्रत्ययान्तरवैयर्थ्यात्। गोवर्धनस्तु 'अदेस्त्रिन् निच्च' इति पठित्वा निदिति वचनात् नकारस्य नेत्संज्ञा अत्री अत्रिणौ अत्रिणः इत्याह। तदपि न, आद्युदात्तापत्तेः। न चेष्टापत्तिः। 'जहीन्यत्रिणं पणिम्' [ऋ० ६।५१।१४] 'दूरे वा ये अन्ति वा केचिदत्रिणः' [ऋ० १।६३।६] 'अग्ने हंसि न्यत्रिणम्' [ऋ० १०।११८।१] इत्यादौ अन्तोदात्तस्य निर्विवादत्वात्। दशपादीवृत्तौ तु 'अदेस्त्रिनिच्च' इति पठित्वा चकारात् त्रिबित्युक्तम्। तदपि न। त्रिनिचश्चित्त्वस्य व्यर्थत्वात्, इकारेण नकारपरित्राणे सति प्रत्ययस्वरेणैवेष्टस्वरसिद्धेः। अत एव 'वधैर्दुःशसान्' [ऋ० १।९४।९] इति मन्त्रभाष्ये 'अदेस्त्रिनिश्च' इति माधवः। 'न लुमताङ्गस्य' [अ० १।१।६३] इति सूत्रे कैयटोऽप्येवमेवाहेति दिक्' इति [पृ० ७९१] तत्त्वबोधिनीकारोऽप्येवमेवाह [पृ० ५५१]।

अद्यतनमुद्रितेषु कैयटपुस्तकेषु 'अदेस्त्रिन्निच्च इति त्रिबन्तोऽत्रिशब्द आद्युदात्तः' [पृ० ४८१] इत्येवं पाठ उपलभ्यते। स च मनोरमादिग्रन्थस्वारस्यादशुद्ध इति प्रतिभाति।

६. 'अदेस्त्रिन् प्रत्ययो भवति' इति क.।

७. 'अत्ति तपः स्वाध्यायादीनीत्यत्रिः' इति क.।

## मृकणिभ्यामीचिः[1] ॥ ३८ ॥ ( पं० उ० ४।७२ )

आभ्यां धातुभ्यामीचिः प्रत्ययो भवति । मृङ् प्राणत्यागे तौ० । म्रियत इति **मरीचिः** रश्मिः । कर्त्ता । कण निमीलने चौ०, कण शब्दे भौ० । कणयति[2] कणति कण्यते वा **कणीचिः** चक्षुः प्राणो [च] । कर्त्ता कर्म च ॥

## वेञो डित्[3] ॥ ३९ ॥ ( पं० उ० ४।७३ )

वेञो धातोरीचिः प्रत्ययो भवति डित्संज्ञः । वेञ् तन्तुसन्ताने भौ० । वयते ऊयते वा **वीचिः** ऊर्मिः । कर्त्ता कर्म च ।

## श्वयतेश्चित् ॥ ४० ॥ ( पं० उ० ४।७४ )

श्वयतेर्धातोरीचिः प्रत्ययो भवति चित्संज्ञः । टुओश्वि गतिवृद्ध्योः भौ० । श्वयतीति **श्वयीचिः** चन्द्रमाः श्वयथुश्च । कर्त्ता ॥

## नौ षञ्जेर्घथिन् ॥ ४१ ॥ ( पं० उ० ४।९३ )

नावुपपदे सञ्जेर्धातोर्घथिन् प्रत्ययो भवति । षञ्ज परिष्वङ्गे[4] भौ० । निषजति निषज्यते वा **निषङ्गथिः** रथस्कन्धः[5] । कर्त्ता कर्म च ॥

## उद्यर्त्तेश्चित् ॥४२॥ (पं० उ० ४।९४)

उद्युपपदेऽर्त्तेर्धातोर्घथिन् प्रत्ययो भवति चित्संज्ञः । ऋ गतौ भौ० जौ०[6] । उदृच्छति उदियर्त्ति[7] उदर्यते[8] वा **उदरथिः रथवाहः**, वप्रः, काष्ठं च । कर्त्ता कर्म च ॥

---

१. 'मर्जिमर्च्योश्च' इति भाष्यवार्त्तिकव्याख्यानावसरे कैयट आह—'मर्च शब्दार्थ इत्यस्य चौरादिकस्य णिचि 'अच इः' [द० उ० १।६७] इति इप्रत्यये णिलोपे चकारात्पूर्व ईमागमः' इति [ पृ० ३६५ ] । एतद्व्याख्याने छायाकारो वैद्यनाथ आह— 'एतेन 'मृकणिभ्यामीचिः' इत्यौणादिकं सूत्रं निरस्तम् । भाष्यविरोधात्' इति ।

२. 'चौ० कण शब्दे कणयति' इति नास्ति ग. घ. ।

३. सवृत्ति सूत्रमिदं नास्ति ग. घ. ।

४. 'सङ्गे' इति क. ।

५. 'रथकूबरम्, कुणश्च' इति ग. घ. । 'रथकवचः तूणश्च' इति 'च' संज्ञक-वृत्तिपाठः ।

६. 'जौ०' नास्ति क. ।

७. 'उदियर्त्ति' नास्ति क. ग. ।

८. 'उदर्यते' नास्ति घ. ।

## सर्त्तेर्णित् ॥४३॥ (पं० उ० ४।६५)

**सर्त्ते**र्धातोर्घथिन् प्रत्ययो [भवति] णिच्च। सृ गतौ भौ० जौ०। धावति ससर्त्तीति वा **सारथिः** रथवाहकः कर्त्ता॥

## अतेरिथिन् ॥४४॥ (पं० उ० ४।२)

अतेरिथिन् प्रत्ययो भवति। अत सातत्यगमने भौ०। अततीति **अतिथिः** अभ्यागतः। कर्त्ता॥

## अमेगु[१]रि रश्च लो वा ॥४५॥ (पं० उ० ४।२)

अमेर्धातोर्गुरिः प्रत्ययो भवति रेफस्य च वा लकारः[१]। अम गत्यादिषु भौ०। अमतीति **अङ्गुरिः अङ्गुलिर्वा** करशाखा। कर्त्ता॥

## इन्[२] ॥४६॥ (पं० उ० ४।१२६)

सर्वधातुभ्य इन् प्रत्ययो भवति। पद गतौ दै०[३]। पद्यत इति **पदिः** मोक्षमार्गः। कर्त्ता। चिट परप्रैष्ये भौ०। चेटतीति **चेटिः** प्रेष्या। कर्त्ता। वट वेष्टने भौ०। वटतीति **वटिः** तन्तुः। कर्त्ता। कटी गतौ भौ०। कटति कट्यते वा **कटिः** शरीराङ्गम्। कर्त्ता कर्म च। बल प्राणने भौ०। बलति बल्यते वा **बलिः** असुरः देवेज्या वा[४]। कर्त्ता कर्म च। कु शब्दे आ०, कुङ् अव्यक्ते शब्दे भौ०[५]। कौति कवते कूयते वा **कविः** काव्यकृत् विद्वान् शब्दकारः। कर्त्ता कर्म च। रु शब्दे आ०। रौति रूयते वा **रविः** भानुः। कर्त्ता कर्म च। पूञ् पवने क्र्यै०। पुनाति पूयत[६] इति **पविः** पवित्रं, वज्रश्च[७]। कर्त्ता कर्म च[८]॥

---

१. 'रेफस्य लकारो वा' इति क.।

२. अत्राह भट्टोजिदीक्षितः—'इह इन् इत्येव सूत्रं सर्वधातुभ्य इति तु प्रक्षिप्तं व्यर्थं च। अतएव दशपाद्यां 'इन्' इत्येव सूत्रं पठितमिति दिक्' इति [प्रौ० मनो० पृ० ७९६]। तत्त्वबोधिनीकारोऽपीत्थमेवाह [पृ० ५५५]।

श्वेतवनवासी त्वाह—'धात्वधिकाराद्धातुविशेषानुपादानाद्धातुमात्रपरिग्रहे सिद्धे सर्वग्रहणं विस्पष्टार्थम्' इति [पृ० १७१] व्युत्पत्तिसारनामिकायामुणादिवृत्तौ तु 'धातोरिः' इति सूत्रं दृश्यते।

३. 'दै०' नास्ति क.।

४. 'असुरः दे दैत्यो वा' इति ग. घ.।

५. 'कुङ अव्यक्ते शब्दे भौ०' इति नास्ति क.।

६. 'पूयते' इति नास्ति ग. घ.।

७. 'वा' इति ग. घ.।

८. 'कर्म च' इति नास्ति ग. घ.।

## हृपिशिरुहिवृतिविदिकीर्त्तिभ्यश्च[1] ॥४७॥ (पं० उ० ४।१२८)

एभ्यो धातुभ्य इन् प्रत्ययो भवति । हृञ् हरणे भ्वा०, हृ प्रसह्यकरणे जौ० । हरति जिहर्त्ति वा हरिः विष्णुः वानरश्च ।

विष्णौ शाखामृगे शक्रे सिंहदर्दुरवाजिषु ।
वर्णे च रुक्मकपिले हरिशब्दः प्रयुज्यते ॥ १ ॥

यमानिलेन्द्रचन्द्रार्ककपिमण्डूकवाजिषु ।
शुककेशवसिंहाश्ववर्णादिषु हरिं स्मरेत्[2] ॥ २ ॥

कर्त्ता । पिश अवयवे तौ० । पिशति पिश्यते वा पेशिः केशोर्णामांसलवः पेशलश्च[3] । कर्त्ता कर्म च । रुह बीजजन्मनि प्रादुर्भावे च[4] भ्वा० । रोहतीति रोहिः जन्म । कर्त्ता । वृतु वर्तने भ्वा० । वर्तते वृत्यते वा वर्त्तिः द्रव्यम्, चेल-वेष्टनं च । कर्त्ता कर्म च । विद ज्ञाने अ०, विद्लृ लाभे तौ०, विद विचारणे रौ०, विद सत्तायां दै० । वेत्ति विन्दति विन्ते विद्यते वा वेदिः त्रेताग्न्यधिष्ठानम् । कर्त्ता । कीर्त्तिः सौत्रो धातुः[5] कॄत संशब्दने चौ० । कीर्त्तनं कीर्त्यते वा कीर्त्तिः ख्यातिः । भावः कर्म च ॥

## इगुपधात् कित् ॥४८॥ (पं० उ० ४।१२९)

इगुपधाद् धातोरिन् प्रत्ययो भवति किच्च । भिदिर् विदारणे रौ० । भिनत्तीति भिदिः वज्रम् सूचकश्च[6] । कर्त्ता । छिदिर् द्वैधीकरणे रौ० । छिनत्तीति छिदिः परशुः । कर्त्ता । शुच शोके भ्वा० । अहरहः क्लिश्यमानं जनं शोचतीति शुचिः विद्वान् । कर्त्ता । रुच दीप्तौ भ्वा० । रोचत इति रुचिः

---

१. अत्राह श्वेतवनवासी—'इन् सर्वधातुभ्यः' इत्यस्यैवोदाहरणप्रपञ्चमेतत् । सुगृहीतं च नाम यथास्यादिति प्रपञ्चः । तथा चोक्तम्—'ते वै विधयः सुसंगृहीता येषां लक्षणं प्रपञ्चश्च' [तु० म० भा० ७।१।५८] इति [ पृ० १७१ ] । एतच्चिन्त्यम् । असति ह्येतस्मिन् सूत्रे पिश्यादिभ्यां धातुभ्यः 'इगुपधात् कित्' इत्युत्तरसूत्रेण इनः कित्त्वं स्यात् । तथा सति 'क्ङिति' [अ० १।१।५ ] इत्यनेन गुणप्रतिषेधे पेश्यादयः शब्दा न सिद्ध्येरन् । हरतेः कीर्तयतेश्चाजन्तत्वात् 'अच इः' [उ० द० पा० १।६७] इति इः स्यात्, तथा सति स्वरे भेदः स्यात् ।

२. क. पुस्तके अयं श्लोको नास्ति । अनुपलब्धमूलौ चेमौ श्लोकौ ।

३. 'पेशलश्च' नास्ति क. ।

४. 'जन्मनि प्रादुर्भावे च' नास्ति क. ।

५. 'कीर्त्तिः सौत्रो धातुः' नास्ति क. ।

६. 'सूकरश्च' इति क. ।

भानुः काङ्क्षा च। कर्त्ता। ऋषी गतौ तौ०। ऋषतीति ऋषिः[1] मुनिः। कर्त्ता। कृष विलेखने तौ० भौ०। कृषति कर्षति वा तामिति कृषिः[2] वैश्यवृत्तिः। कर्म॥

## भ्रमेः सम्प्रसारणं च ॥४९॥ (पं० उ० ४।१३०)

भ्रमेर्धातोरिन्प्रत्ययो भवति संप्रसारणं च किच्च। भ्रमु अनवस्थाने दै०, भ्रमु चलने भौ०। भ्राम्यति भ्रमति वा भृमिः वायुः। कर्त्ता॥

## क्रमितमिस्तम्भामत इच्च ॥५०॥ (पं० उ० ४।१३१)

एभ्यो धातुभ्य इन्प्रत्ययो भवति किच्च, इकारश्चैषां भवत्यकारस्य। क्रमु पादविक्षेपे भौ०। क्रामति क्रम्यते वा क्रिमिः[3] प्राणी। कर्त्ता कर्म च।

---

१. ऋषिर्धातुरत्र दर्शने वर्तते। तदुक्तं निरुक्ते 'ऋषिर्दर्शनात्स्तोमान् ददर्श इत्यौपमन्यवः' [२।११] इति। 'सर्वे गत्यर्था ज्ञानार्थाः' इति च स्कन्दः [निरु० टी० २।१६] श्वेतवनवास्यप्याह—'गत्यर्थत्वादृषेर्ज्ञानार्थत्वान्मन्त्रं दृष्टवन्त ऋषयः' [ पृ० १७२ ] इति। प्रपञ्चितं चास्माभिरन्यत्र विस्तरेण 'ऋषयो मन्त्रद्रष्टार एव' इति।

२. अत्राह श्वेतवनवासी—''विलेखनमात्रं [ कृषिः ] इति 'इक् कृष्यादिभ्यः' [म० भा० ३।३।१०८] इति इक् प्रत्ययान्तेनाभिधीयते। अनेन तु कर्षणविशेष इत्युदाहरणम्। अथ तत्रापि बहुलानुवर्तनात् संज्ञाप्रसिद्धिः। एवम् तर्हि विस्पष्टार्थमुदाहरणम्'' [ पृ० १७२ ] इति।

केचित् 'इगुपधात् किः' इत्येवं सूत्रं पठन्ति। तत्राह उज्ज्वलदत्तः 'इगुपधात् किरिति प्रमादपाठः स्वरे विशेषात्' [ पृ० १७५ ] इति। भट्टोजिदीक्षितोऽप्याह—'केचित्तु किरिति पठित्वा इनोऽपवादः किप्रत्यय इत्याहुः। तन्न। प्रत्ययस्वरेण प्रातिपदिकानामन्तोदात्तापत्तेः। न चेष्टापत्तिः। 'अग्निः पूर्वेभिर्ऋषिभिः' [ ऋ० १।१।२ ] 'ऋषिर्विप्रः काव्येन' [ ऋ० ८।७९।१ ] 'शुचिर्विप्रः शुचिः कविः' [ ऋ० १।४४।२१ ] इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात्। कथं तर्हि 'अक्षैर्मा दीव्यः कृषिमित्कृषस्व' [ ऋ० १०।३४।१३ ] इत्यादौ कृषिशब्दस्यान्तोदात्ततेति चेत् 'इक् कृष्यादिभ्यः' [ म० भा० ३।३।१०८ ] इति इक्प्रत्यये सतीति गृहाण' [ मनो० पृ० ७९६ ] इति। तत्त्वबोधिनीकारोऽप्येवमेवाह [ पृ० ५५५ ]।

वस्तुतस्तु कृषिशब्दस्यान्तोदात्तत्वदर्शनात् नायमत्र व्युत्पादयितव्यः। बाहुलकाद्वा स्वरव्यत्ययो मन्तव्यः। सूत्रपाठस्तु 'इगुपधात् कित्' इत्येव।

३. अत्राह उज्ज्वलदत्तः—'कृमिरित्यपि सम्प्रसारणानुवृत्तेरिति केचित्। लुम्प-

तमु काङ्क्षायाम् दै०। ताम्यतीति **तिमिः** मत्स्यः। कर्त्ता। स्तभि प्रतिबन्धे भौ०,[1] स्तम्भु सौत्रो धातुः। स्तम्भते स्तभ्नाति वा **स्तिभिः** समुद्रः। कर्त्ता॥

**मनेरुच्च**[2] ॥५१॥ (पं० उ० ४।१३२)

मनेर्धातोरिन् प्रत्ययो भवति अकारस्य चोकारादेशः। मन ज्ञाने दै०, मनु अवबोधने तौ०। मन्यते मनुते वा **मुनिः** ऋषिः। कर्त्ता।

**वल्लेर्वलिरहिरण्ये**[3] ॥५२॥ (पं० उ० ४।१३३)

वल्लेर्धातोरिन् प्रत्ययो भवति वलिरादेशो[4]ऽहिरण्यार्थे। वल्ल इति सौत्रो धातुः। वल्लति वल्ल्यते वा **वलिः** त्वङ्मांससंकोचः। कर्त्ता कर्म च। अहिरण्य इति किम्—**वल्लिः** हिरण्य[5]शलाका॥

**वसिवपियजिराजिव्रजि[6]सदिहनिकमिकषि[7]वाशिवारिभ्य इञ्**[8] ॥५३॥ (पं० उ० ४।१३४)

एभ्यो धातुभ्य इञ् प्रत्ययो भवति। वस निवासे भौ०। वसतीति **वासिः** तक्षकारभाण्डम्। कर्त्ता। डुवप बीजसंताने[9] भौ०[10]। वपति तस्या[11]-

---

न्ति कीटकृमयः परितस्तथैव इति सागरनन्दी नागार्जुनप्रयोगश्च। कृमिभवं कार्मकमिति वर्णविवेके विस्तरेण दर्शितम्' [ उ० वृ० पृ० १७५, १७६ ] इति।

१. मुद्रितधातुपाठपुस्तकेषु भ्वादावन्यत्र वा नायं धातुरुपलभ्यते।

२. 'रुच्चोपधायाः' इति ङ.।

३. 'चाहिरण्ये' इति क.।

४. 'चादेशः' इति क.।

५. 'हिरण्य' इति नास्ति ग. घ.।

६. 'व्रजि०' नास्ति छ.।

७. '०हनिकिमिकिंषिवाशि०' इति ज.।

८. 'इन्' इति च.। तत्र वृत्तौ 'पुनः प्रत्ययारम्भबलाण्णित्वं च इति निर्देशः। 'इण्' इति छ.।

९. साम्प्रतं धातुपाठेषु 'छेदने च' इत्यप्युपलभ्यते। तदनार्षम्। यतो हि महाभाष्ये 'वपिः प्रकिरणे दृष्टः, छेदने चापि वर्त्तते केशान् वपतीति' [ अ० १।३।१ ] इत्यत्र प्रकिरण एव 'दृष्ट' इत्युच्यते न तु छेदनेऽपि।

१०. 'भौ' नास्ति ग. घ.।

११. 'वपंति अस्याम्' इति क.।

मिति **वापिः**[१] पुष्करिणी। अधिकरणम्। वद व्यक्तायां वाचि भ्वौ०[२]। वदति तस्या[३]मिति **वादिः** वीणा। अधिकरणम्। राजृ दीप्तौ भ्वौ०[४] राजतीति[५] **राजिः** लेखा तिलकादिश्च[६]। कर्त्ता। व्रज गतौ भ्वौ०। व्रजतीति **व्राजिः** मनः[७]। कर्त्ता। ध्वज गतौ भ्वौ०। ध्वजतीति **ध्वाजिः** अश्वः। कर्त्ता। षद्लृ विशरणगत्यवसाद[ने]षु[८] भ्वौ०। सीदतीति **सादिः** अश्वारोहः। कर्त्ता। हन हिंसागत्योः आ०। हन्तीति **हानिः**[९] अर्थनाशः। कर्त्ता। कमु कान्तौ भ्वौ०। काम्यत इति **कामिः** कामुकः[१०] कर्म। कष हिंसायाम् भ्वौ०[११]। कषतीति **काषिः** कार्मुकम् कर्त्ता[१२]। वाश्रृ शब्दे भ्वौ०[४]। वाशत इति **वाशिः** जलदः। कर्त्ता। वृञ् वरणे स्वौ० णिजन्तः। वार्यते तदिति **वारि** जलम्। कर्म॥

## नहो भश्च ॥५४॥ (पं० उ० ४।१३५)

नहो धातोरिञ् प्रत्ययो भवति भश्चान्तादेशः। णह बन्धने दैं०। नह्यतीति **नाभिः** चक्रमध्यं, प्राण्यवयवश्च। कर्त्ता॥

## कृषेर्वृद्धिश्छन्दसि ॥५५॥ (पं० उ० ४।१३६)

कृषेर्धातोरिञ् प्रत्ययो भवति वृद्धिश्च धातोश्छन्दसि विषये। कृष विलेखने भ्वौ० तौ०[१३]। कर्षति कृषति वा तामिति **कार्षिः** कृषकः[१४]। कर्म।

---

१. अयं शब्दः '**इञ् वपादिभ्यः**' (वा० ३।३।१०८) इत्यनेनापि सिद्धयति।

२. 'भ्वौ' नास्ति क. ग. घ.। ३. 'वदंति अस्याम्' इति क.।

४. 'भ्वौ' नास्ति ग. घ.।

५. 'राजत इति' इति क.। ६. 'तिलकादिश्च' नास्ति क.।

७. 'मुनिः' इति क.। ८. 'विशरणे' इति क.।

९. अत्र प्रत्ययस्य ञित्वेऽपि बाहुलकाद् घत्वतत्वे न भवतः। अत्राह हेमचन्द्रः—'अन्ये वृत्तिकारा हन्तेर्घातिः' निपूर्वाच्च निघातिः इत्युदाहरन्ति। केचित्तु हानिः अर्थनाश उच्छ्रितिश्च इत्युदाहरन्ति। तत्र बाहुलकात् ञ्णिति घादिति घात्न भवति'[उ० वृ० सू० ६१८ पृ० १०८] इति। १०. 'कामी' इति क.।

११. 'कष हिंसायाम् भ्वौ०' नास्ति क.।

१२. 'हिंसकः उपकरणभाण्डं च' इति ग. घ.।

१३. 'तौ' नास्ति क.।

१४. अत्र कदाचित् 'कृषककर्म, कृषकवृत्तिः' इति वा पाठः स्यात्।

छन्दसीति किम्—'कृषिः'। अत्र 'इगुपधात् कित्' [ द० उ० १।४८ ] इति इन्[1] ॥

**श्रः[2] शकुनौ ॥५६॥ (पं० उ० ४।१३७)**

शॄ[3] इत्येतस्माद्धातोरिञ् प्रत्ययो भवति शकुनौ गम्यमाने[4]। शॄ[3] हिंसायाम् क्र्यै०। शृणातीति शारिः शकुनिः। कर्त्ता। शकुनाविति किम्–शरिः शूलम्[5]। 'अच इः'[6] [ द० उ० १।६७ ] ॥

**कृञ उदीचां कारिषु[7] ॥५७॥ (पं० उ० ४।१३८)**

कृञो धातोरिञ् प्रत्ययो भवति उदीचामाचार्याणां मते[8] कारिष्वभिधेयेषु। डुकृञ् करणे ता०। करोतीति कारिः शिल्पी[9]। कर्त्ता[10]। उदीचामिति किम्—करिः विष्णुः। 'अच इः' [ द० उ० १।६७ ] ॥

**जनिघसिभ्यामिण् ॥५८॥ (पं० उ० ४।१३९)**

आभ्यां धातुभ्यामिण् प्रत्ययो भवति। जनी प्रादुर्भावे दै०, जन जनने जौ०। जायते जजन्ति जन्यते वा जानिः[11] प्रादुर्भावः। कर्त्ता कर्म च। अद भक्षणे अ०। अत्ति अत्यर्थमिति घासिः अग्निः। कर्त्ता ॥

**अज्यतिभ्यां च[12] ५९॥ (पं० उ० ४।१४०)**

---

१. 'इति इन्' नास्ति ग. घ.।

२. 'शरः' इति क.। 'शिरः इति क्षीरस्वामी (क्षीरतर० ६।१७)। अग्रे 'शिरः करन्' (द. उ. ८।७०) सूत्रे 'शिरः इत्येव' पठ्यते। 'शृ' इति च. ज. ग. घ.। शृ इति छ.। अत्र सूत्रे 'शकुनिग्रहणमनर्थकम्' संज्ञाधिकारादेव लब्धत्वात्' इति श्वेतवनवासी [पृ० १७५]। ३. 'शृ' इति क.। ४. 'शकुनौ गम्यमाने' इति त्रुटितः ग. घ.। ५. 'शूलम्' नास्ति क.। ६. 'गुणः' इत्यधिकं क.।

७. 'कारिषु' नास्ति छ.। 'कारुषु' इति ङ.।

८. 'आचार्याणां' मते इति त्रुटितः क. ग. घ.।

९. 'शिल्पिः' इति ग. घ.। १०. 'कर्त्ता' नास्ति क.।

११. अत्र 'जनिवध्योश्च' [अ० ६।३।३५]इति सूत्रेण वृद्धेः प्रतिषेधः प्राप्नोति। तेन 'जनिः' इत्येव साधु। यद्वा बाहुलकत्वाद् वृद्धिप्रतिषेधो न भवति। नारायणस्त्वाह—'इह णित्सुयोजनसामर्थ्यात् वृद्धचा 'जानिः' इति केचित्' [पृ० १०९] इति।

१२. 'अजातिभ्यां' इति ज.। 'अजातिभ्यां च' इति ज.। 'च' नास्ति क.ग.घ.च.।

आभ्यां धातुभ्यामिण् प्रत्ययो भवति[1]। अज गति-(३७)क्षेपणयोः भ्वा०[2]। अजत्यसौ वीयते[3] वा आजिः[4] युद्धम्। कर्त्ता कर्म च। अत सातत्यगमने भ्वा०। अततीति आतिः पक्षी। कर्त्ता॥

## पादे च ॥६०॥ (पं० उ० ४।१४१)

पादशब्दे चोपपदे अजि अति इत्येताभ्यां धातुभ्या[5]मिण् प्रत्ययो भवति। 'पादस्य पदाज्यातिगोपहतेषु, [अ० ६।३।५२] इति पद्भावः। पादाभ्यामजतीति पदाजिः, पादाभ्यामततीति[6] पदातिः हस्त्यश्वरथविरहितो योधः[7]। कर्त्ता॥

## अशिपणाय्यो रुड्लुकौ च ॥६१॥ (पं० उ० ४।१४२)

अशि पणायि इत्येताभ्यां धातुभ्या[9]मिण् प्रत्ययो भवति यथासंख्यं रुड्लुकौ[10] चागमादेशौ भवतः। अशू व्याप्तौ स्वा०, अश भोजने क्र्या०। अश्नुते

---

१. 'आभ्यां.........भवति' नास्ति ग. घ.।

२. 'भ्वा०' नास्ति क.। ३. 'अज्यते' इति ग. घ.।

४. बहुलवचनादजेर्वीभावो न भवति। यद्वा 'पादस्य पदाज्याति०' [अ० ६।३।५२] इत्यत्र निपातनाद् वीभावाभावो बोध्यः।

'आजिः' इत्यादीनि वार्त्तिकेनापि सिद्ध्यन्ति। तदुक्तं भाष्यकारेण "इणजादिभ्यो वक्तव्यः। आजिः, आतिः, आदिः" इति [म० भा० अ० ३।३।१०८]। अत्रापि बहुलवचनादजेर्वीभावो न भवति।

५. 'आभ्यां धातुभ्यां' इति नास्ति ग. घ.।

६. 'पादाभ्यामततीति' इति नास्ति ग. घ.। ७. 'योद्धा' इति क.।

८. 'रुग्लुकौ' इति क.। 'रुडायलुकौ' इति घ.। उज्ज्वलदत्तादयः केचन वृत्तिकारा 'रुडायलुकौ च' इति पठन्ति। तत्र 'आय'ग्रहणमनर्थकम्। प्रत्ययादर्शनस्यैव लुक्संज्ञत्वाद् 'आय'प्रत्ययास्यैवादर्शनं भविष्यति। नारायणश्वेतवनवासिनौ तु 'अशिपाणिभ्यां रुड्लुकौ च' इति पठतः। ९. 'आभ्यां धातुभ्यां' इति नास्ति ग.घ.।

१०. 'रुग्लुकौ' इति क. (क्षीरस्वामी तु 'रुग्लुकौ' पठित्वा अशधातो रुगागमं विधाय 'अश्रिः' पदं साधयति। क्षीरतर० ९।५५)। इह तु 'राशिः' पदस्य निर्देशात्, उत्तरत्र 'आङि श्रिहनिभ्यां ह्रस्वश्च' (द. उ० १।६६) 'अश्रिः' पदस्य साधनाच्च 'रुडायलुकौ' इत्येव पाठः साधुः। 'रुडायललुकौ' इति घ.।

अश्नाति वा राशिः यवादिसंघातः ग्रहनक्षत्रं[1] च । कर्त्ता[2] । पण व्यवहारे स्तुतौ च भौ०[3] । पणाय्यते[4]ऽनेनेति पाणिः आयो लुक्[5] हस्तः । करणम् ॥

वेञो डित्[6] ॥६२॥ (पं० उ० ४।१४३)

वेञो धातोरिण् प्रत्ययो भवति डिच्च[6] । वेञ् तन्तुसन्ताने भौ० । वयतीति विः तन्तुवायः । कर्त्ता ॥

प्रे हरतेः[7] कूपे ॥६३॥ (पं० उ० ४।१४४)

प्रशब्द उपपदे हरतेर्धातोरिण् प्रत्ययो भवति डिच्च कूपेऽभिधेये । हृञ् हरणे भौ० प्रपूर्वः[8] । प्रह्रियतेऽस्मा[9]दुदकमिति प्रहिः कूपम्[10], उदपानम्[11] । अपादानम् ॥

नौ व्यो[12] यलोपः पूर्वपदस्य[13] च[14] दीर्घः ॥६४॥
(पं० उ० ४।१४५)

नावुपपदे व्येञो धातोरिण्[15] प्रत्ययो भवति डिच्च यलोपः पूर्वपदस्य च दीर्घः । व्येञ् संवरणे भौ० । निवीयतेऽसाविति नीविः अधोवासोग्रथनम् । कर्म ॥

समाने ख्यः[16] स चोदात्तः ॥६५॥ (पं० उ० ४।१४६)

समानशब्द उपपदे ख्या इत्येतस्माद्धातोरिण् प्रत्ययो भवति, डिच्च

---

१. 'ग्रहनक्षत्रम्' इति ग. घ. । २. 'कर्त्ता' नास्ति क. ।
३. 'भौ' नास्ति क. । ४. 'पणायन्ते' इति क. ।
५. 'आयो लुक्' नास्ति क. । ६. 'ङिच्च' इति छ. कोशेऽपपाठः ।
७. 'प्रहरते' रिति च. छ. क. ।
८. 'प्रपूर्वः' नास्ति ग. घ. । ९. 'तस्मात्' क. । १०. 'कूपः' इति क. ।
११. 'उदपानम्' ग. घ. नास्ति । १२. 'व्येञो' इति ग. घ. च. ज. ।
१३. 'पूर्वस्य' इति क. छ. । १४. 'च.' नास्ति च. ।
१५. अत्राहोज्ज्वलदत्तः—'वसिवपि ······वारिभ्यः इञ्' इत्वत इञ् इत्यनुवर्तते न त्विण् उत्तरत्रोदात्तवचनात्' [पृ १७९] इति तन्न, इणा 'इञो' व्यवच्छिन्नत्वात् । विशेष उपरिष्टाद् द्रष्टव्यः ।
१६. 'समानाख्य' इति छ. ।

यलोपश्च धातोः, समानस्य च[1] सादेशः[2] स[3] चोदात्तो भवति। ख्या प्रकथने आ०। समानं ख्यायते जनैरिति सखा वयस्यः। कर्म॥

## आङि श्रिहनिभ्यां ह्रस्वश्च ॥६६॥ (पं० उ० ४।१४७)

आङ्युपपदे श्रि हनि इत्येताभ्यां धातुभ्या[4]मिण् प्रत्ययो भवति डिच्च ह्रस्वश्च[5] पूर्वपदस्य उदात्तश्[6] [च]। श्रिञ् सेवायाम् भौ०। आश्रयन्ति तामिति **अश्रिः** श्रोणः। कर्म। हन हिंसागत्योः आ०। आ[7] हन्तीति **अहिः**[8] सर्पः। कर्त्ता॥

## अच इः ॥६७॥ (पं० उ० ४।१४८)

अजन्ताद् धातोरिः प्रत्ययो भवति। रु शब्दे आ०। रौति रूयते वा

---

१. 'च' नास्ति क.।

२. स्वरमञ्जरीकारस्तु **'समानस्य छन्दसि'** [अ० ६।३।८४] इत्यादिना सभावमाचष्टे, तन्न, तथा सति लोके सखिशब्दस्यासाधुत्वं स्यात्। श्वेतवनवासी त्वाह— **'समानस्य' इति योगविभागेन सादेश इति कैश्चिदभ्यधायि, तद्भाष्यकारेणानुपगमादनादरणीयम्।**........[पस्पशाह्निके] **'समानख्यातयः सखायः इति भाष्यकारप्रयोगात् समानस्य सभावः'** [पृ० १७७] इति। अयं भाष्यपाठो न सर्वत्रोपलभ्यते।

३. उज्ज्वलदत्तस्तु इञ् प्रत्ययस्योदात्तत्वं शास्ति, तन्न, सखिशब्दस्यान्तोदात्तत्वापत्तेः। वेदे सर्वत्रैव सखिशब्द आद्युदात्त एवोपलभ्यते। एवं च **'इञ् उदात्त'** इति व्याख्यानं तस्य वैदिकप्रयोगानभिज्ञत्वज्ञापकमेव। विशेषस्तु मनोरमायां [पृ० ७९८] तत्त्वबोधिन्यां [पृ० ५५६] च द्रष्टव्यः।

भट्टोजिदीक्षितस्तु दशपादीवृत्त्यनुसारमेव व्याचष्टे। उक्तं च—**तस्मादस्य उक्तैव व्याख्या सुधीभिरादर्त्तव्या'** (पृ० ७९९) इति।

४. **'इत्येताभ्यां धातुभ्यां'** नास्ति ग. घ.। ५. 'ह्रस्वान्तादेशः' इति **क.**।

६. कोशेषु पदमिदं 'सेवायां' इति पदात् परं दृश्यते, तद् धातोरनुदात्तत्वाद् ग्रन्थकृच्छैलीविरुद्धत्वाच्च न सम्यक् प्रतिभाति। अतोऽस्माभिर्वृत्त्यन्तरैः संवाद्योपयुक्ते स्थाने स्थापितः। तेन 'अहिः' शब्द आद्युदात्तो भवति। ७. 'आ' नास्ति **क.**।

८. अत्र काशिका—**'अहिशब्दोऽन्तोदात्तो व्युत्पादितः। केचिदाद्युदात्तमिच्छन्ति'** [६।२।४८] इति।

अत्राह न्यासकारः—**'ते समाने ख्यः स चोदात्तः** [द० उ० १।६५] **इत्युदात्तग्रहणमनुवर्तयन्ति'** [पृ० ३५३] इति। पञ्चपादीवृत्तिकारा उदात्तग्रहणं नानुवर्त्तयन्ति

रविः भास्करः । कर्त्ता कर्म च । पूञ्[1] पवने क्र्यै० । पुनाति पूयते वा पविः वातः[2], वज्रम्[3] । कर्त्ता कर्म च । भू सत्तायाम् भ्वौ० । भवतीति भविः सत्ता विधिश्च । कर्त्ता । डुभृञ् धारणपोषणयोः जौ० । बिभर्त्ति भ्रियते वा भरिः वसुधा । कर्त्ता कर्म च ॥

**खनिकष्यञ्ज्यसिवसिध्वनिसनिग्रन्थि चरिभ्यश्च ॥६८॥**
**(पं० उ० ४।१४६)**

एभ्यो धातुभ्य इः प्रत्ययो भवति । खनु अवदारणे भ्वौ० । खन्यते इति **खनिः** तडागः[5] । कर्म । कष हिंसार्थः भ्वौ०[6] । कषन्त्यनयेति **कषिः**[7] कुद्दालः । करणम्[8] । अञ्जू व्यक्तिम्रक्षणकान्ति[9]गतिषु रौ० । अनक्तीति **अञ्जिः** तेजः गतिश्च । कर्त्ता[10] । असु क्षेपणे दै० । अस्यतीति **असिः** खड्गः । कर्त्ता । वस निवासे भ्वौ० । वसन्त्य[11] स्यामिति **वसिः** शय्या रात्रिर्वा । अधिकरणम् । ध्वन शब्दे भ्वौ०[6] । ध्वनतीति **ध्वनिः** शब्दः[12] । कर्त्ता । वन षण सम्भक्तौ[13] भ्वौ०,षणु दाने ता० । सनति सनोति [सन्यते] वा **सनिः** भक्तिः दानं च । कर्त्ता कर्म च[14] । ग्रन्थ सन्दर्भे क्र्यै०[15] । ग्रथ्नाति ग्रथ्यते [वा] **ग्रन्थिः** बन्धः । कर्त्ता कर्म च[16] । चर गत्यर्थः भ्वौ० । चरन्त्यस्या[17]मिति **चरिः** विषयः । अधिकरणम् । 'इन्'

---

तेषां मतेऽन्तोदात्तोऽहिशब्दो भवति । वेदे तु सर्वत्राद्युदात्त एव 'अहि'शब्द उपलभ्यते । तस्मादनुवर्त्तनीयमेवोदात्तग्रहणम् ।

श्वेतवनवासिवृत्त्या अप्येकस्मिन् कोशे उदात्तानुवृत्तिर्दृश्यते ।

१. 'पूङ्' इति क. । २. 'वायुः' इति ग. घ. । ३. 'वज्रम्' नास्ति ग. घ. ।

४. 'ज्वसि' इति ग. घ.; 'कष्यज्यसि' इति छः ।

५. 'तडाकं' इति क. । ६. 'भ्वौ' नास्ति क. ।

७. 'कृष हिंसायां भ्वौ० । कृष्यत इति कृषिः' ग. घ. ।

८. 'कुद्दालः । करणम्' इति नास्ति ग. घ. । ९. 'कान्ति' नास्ति क. ।

१०. इतोऽग्रे 'अज गतिक्षेपणयोः । अज्यत इत्यजिः' इत्यधिकम् ग. घ. ।

११. 'वसति तस्याम्' इति ग. घ. ।

१२. 'शब्दः' नास्ति क. । १३. 'भक्तौ' इति क. ।

१४. 'कर्म च' नास्ति क. । १५. 'क्र्यै' नास्ति क. ।

१६. इतोऽग्रे 'स्वरे भेदः' इत्यधिकं ग. घ. । लेखकप्रमादादस्थानेऽयं पतित इति प्रतिभाति । क. पुस्तके तु सूत्रान्ते दृश्यते स च सम्यक् ।

१७. 'चर्यतेऽस्मिन्निति' इति ग. घ. ।

( द० उ० १।४६ ) इति सिद्धे स्वरे भेदः[1] ॥

[2]उभेर्द्वश्च ॥६९॥ (पं० उ० ४।१५०)

उभेर्धातोरिः प्रत्ययो भवति द्व इत्ययं चादेशः। उभ उम्भ पूरणे [ तौ० ] । उभति उभ्यते वा **द्वौ**। कर्त्ता कर्म च ॥

वृतेश्छन्दसि ॥७०॥ (पं० उ० ४।१५१)

वृतेर्धातोरिः प्रत्ययो भवति छन्दसि[3] विषये। वृतु वर्तने भौ०। वर्तत इति **वर्तिः** द्रव्यम्, दीपाङ्गं च। कर्त्ता ॥

भुजेः किच्च ॥७१॥ (पं० उ० ४।१५२)

भुजेर्धातोरिः प्रत्ययो भवति किच्च। भुज पालनाभ्यवहारयोः रौ०, भुज कौटिल्ये तौ०। भुनक्ति भुजति भुज्यते वा **भुजिः** राजा कुटिलश्च। कर्त्ता कर्म च ॥

कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च ॥७२॥ (पं० उ० ४।१५३)

एभ्यो धातुभ्य इः प्रत्ययो भवति किच्च। कॄ विक्षेपे तौ०। किरति कीर्यते वा **किरिः** मूषकः, क्रोडः,[4] गर्त्तश्च। कर्त्ता कर्म च। गॄ निगरणे तौ०,[5] गॄ शब्दे क्र्यै०। गिरति[6] गृणाति गीर्यते वा **गिरिः** पर्वतः। कर्त्ता कर्म च। शॄ हिंसायां क्र्यै०[7]। शृणाति शीर्यते वा **शिरिः** शलं[8] च पलं च। कर्त्ता कर्म च[9]। पॄ पालनपूरणयोः क्र्यै०। पृणाति पूर्यते वा **पुरिः** राजा। कर्त्ता कर्म च। कुट कौटिल्ये तौ०[10]। कुटतीति **कुटिः** शरीरम्। कर्त्ता। भिदिर् विदा-

१. 'इन् इति सिद्धे स्वरे भेदः' इति नास्ति ग. घ.।

२. सूत्रमिदं सव्याख्यं नोपलभ्यते क. पुस्तके।

३. वृतेश्छन्दसि विषये 'इ' प्रत्ययविधानात् लोके 'इन्' प्रत्ययान्तो वर्त्ति-शब्दः प्रयुज्यते। उभयत्र स्वरकृत एव विशेषः।

४. शूकर इत्यर्थः। 'क्रोडो भूदार इत्यपि' इति शूकरनामसु पठ्यते [अमर-कोश २।५।२]। अयं शब्दः क. कोशे नास्ति।

५. 'गॄ निगरणे तौ०' नास्ति क.।

६. 'गिरति' नास्ति क.।

७. 'क्रै' नास्ति क.।

८. शल्यस्य कण्टकं शलम्, आमिषं च पलम्।

९. 'श्रृणातीति शिरिः शोकः पाषाणश्च। कर्त्ता' इति क.।

१०. 'भौ' इति क.।

रणे रौ० । भिनत्तीति **भिदिः** प्रहरणम् । कर्त्ता । छिदिर् द्वैधीकरणे रौ० । छिनत्तीति **छिदिः** अस्त्रम् ।[1] कर्त्ता ।

## कुडि[2]कम्प्योर्नलोपश्च ॥७३॥ (पं० उ० ४।१५४)

आभ्यां धातुभ्यामिः प्रत्ययो भवति किच्च नलो[3]पश्चानयोः । कुडि दाहे [भौ०] । कुण्डत इति **कुडिः**[4] देहः, आलयश्च । कर्त्ता । कपि चलने भौ० । कम्पत इति **कपिः** अग्निः वानरश्च । कर्त्ता ॥

## वसेस्तिः[5] ॥७४॥ (पं० उ० ४।१८६)

वसेर्धातोस्तिः[5] प्रत्ययो भवति[6] । वस निवासे भौ० । वसति तस्मिन्नानौषधयुक्तः स्नेह[7] इति **वस्तिः** अधःकायप्रदेशः चर्ममयः पुटश्च[8] । अधिकरणम् ॥

## प्रथेर्नित्[9] ॥७५॥ (पं० उ० ४।१८८)

प्रथेर्धातोस्तिः[5] प्रत्ययो भवति निच्च । प्रथ प्रथने[10] भौ० । प्रथयते[11]ऽनयेति **प्रत्तिः**[12] भागः । करणम् ॥

## दृणातेः किद्ध्रस्वश्च[13] ॥७६॥ (पं० उ० ४।१८९)

---

१. 'शस्त्रम्' इति क. ।

२. 'कुण्ठि' इति क. । देवराजस्तु वृषाकपिशब्दनिर्वचनावसरे 'कुण्डिकम्प्योः' [पृ०४९३] इत्येवं पठति । ३. 'नकारलोपः' इति क. ।

४. 'कुठि चलने भौ० । कुण्ठतीति कुठिः' इति क. ।

५. 'तिप्' इति क. च. छ. । 'वसिवितसस्तिः' इति ङ. ।

६. 'किच्च' इत्यधिकम् क. ।

७. 'अस्यामिति वस्तिः, आहारौषध शुक्र स्नेह इति वस्तिः' इति ग. घ. ।

८. 'पुटक' इति क. । ९. '०र्निच्च' इति च. ।

१०. 'प्रख्याने' इति ग. घ. । ११. 'प्रथ्यते' इति क. ।

१२. 'प्रथितिः' इति ग. घ. । 'तितुत्रतथ' [अ० ७।२।१०] इत्यादिनेटः प्रतिषेधात् प्रत्तिरित्येव साधु ।

१३. सूत्रमिदं ज. कोशे नोपलभ्यते ।

दृणातेर्धातोस्तिः[1] प्रत्ययो भवति किच्च[2] ह्रस्वश्च भवति[3] दॄ भये क्र्यॎ०। दीर्यत इति दृतिः भस्त्रा। कर्म॥

**पातेरतिः[4] ॥७७॥ (पं० उ० ५।५)**

पातेर्धातोरतिः प्रत्ययो भवति। तिप्रत्ययेन सिद्धावतिप्रत्ययकरणं ह्रस्वनिवृत्त्यर्थम्। पा रक्षणे अा०। पातीति **पातिः** रक्षकः[5] प्रभुर्वा। कर्त्ता॥

**वातेर्नित् ॥७८॥ (पं० उ० ५।६)**

वातेर्धातोरतिः[6] प्रत्ययो भवति नित्संज्ञः। नित्करणमाद्युदात्तार्थम्। वा गतिगन्धनयोः अा० वातीति **वातिः** गन्धमिश्रः पवनः[7]। कर्त्ता॥

**तनोतेर्ड्रिः[8] ॥७९॥**

तनोतेर्धातोर्ड्रिः[8] प्रत्ययो भवति। तनु विस्तारे ता०। तनोति बुद्धिं तन्यत इति वा **तन्द्रिः**–संख्या[9]। कर्त्ता कर्म च॥

**जीर्यतेः क्रिन्[10] रश्च वः ॥८०॥ (पं० उ० ५।५६)**

जीर्यतेर्धातोः क्रिन् प्रत्ययो भवति रेफस्य च धातोर्वादेशः[11]। जॄ वयोहानौ दै०[12]। जीर्यत इति **जिव्रिः**[13] शरीरम्। कर्म॥

---

१. 'तिप्' इति क. च. छ.।

२. अत्र किद्ग्रहणमनर्थकम्, ह्रस्वविधानसामर्थ्यादेव गुणाभावस्य सिद्धत्वात्। पञ्चपाद्यां किद्ग्रहणं न क्रियते। तत्राह श्वेतवनवासी—'**ह्रस्वविधानसामर्थ्याद् गुणो न भवति**' [पृ० १९३] इति। दृतिशब्दव्याख्याने देवराजोऽप्येवमाह [पृ० ७१]। तदत्रानर्थकं किद्ग्रहणं ज्ञापयतीति यदन्येभ्योऽपि धातुभ्यः क्वचित् तिः किद् भवतीति। तेन 'इन्द्रं सोमस्य पीतये इति' (ऋ० १।१६।३) इति '**पीतिः**' पदं सिद्धयति। द्र०—द० भा० 'पाधातोर्बाहुलकात् तिः प्रत्ययः'। सायणस्तु क्तिनि छान्दसमन्तोदात्तत्वमिति कथयति।

३. 'भवति' इति नास्ति ग. व.।

४. 'पातेर्डतिः। पाधातोर्डतिः प्रत्ययो······पातीति पतिः······'इति ग. घ.।

५. 'रक्षिता' इति क.।

६. 'डतिः' इति ग. घ.।

७. 'गन्धः' इति ग. घ.।

८. 'त्रिः' इति क.।

९. 'तन्त्रिः सांख्यः' इति क.।

१०. 'रेफस्य धातोर्वश्चादेशः' इति ग. घ.।

११. 'क्विन्' इति च.।

१२. 'दै०' नास्ति क.।

१३. 'जीव्रिः' इति क.। भाष्ये दीर्घत्वस्य प्रतिषेधादपपाठोऽयम्। तथाहि

## ग्रहेरनिः[१] ॥८१॥ (पं० उ० ५।७१)

ग्रहेर्धातोरनिः[१] प्रत्ययो भवति। ग्रह उपादाने क्र्यै०[२]। गृह्णाति गृह्यते वा ग्रहणिः[३]–उदरान्तः स्थानं यत्राहारः पच्यते[४]। कर्त्ता कर्म च॥

॥ इकारः[५] ॥

---

भाष्यम्—'उपधादीर्घत्वेऽभ्यासजिन्निचतुर्णां प्रतिषेधः। ···जिन्निप्रतिषेधश्च न वक्तव्यः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' [म०भा० ८।२।७८] इति। व्युत्पत्तिपक्षे तु बाहुलकाद्दीर्घप्राप्तिः प्रतिविधेया। श्वेतवनवासिना 'हलि चेति दीर्घः। जीन्निः कालः कोपश्च'—(पृ० २२७) इत्येवं व्याख्यातम्। तदपि भाष्यविरोधाच्चिन्त्यम्।

१. '०रनिन्' इति क.। २. 'क्र्यै०' नास्ति ग. घ.।

३. 'कृदिकारादक्तिनः' इति बह्वादि (४।१।४५) गणसूत्रेण वा ङीष् प्रत्ययः। तेन 'ग्रहणी' इत्यपि भवति। ग्रहणीलक्षणमष्टाङ्गहृदये—

'......अन्नस्य ग्रहणाद् ग्रहणी मता। सैव धन्वन्तरिमते कला पित्तधराह्वया।'

इति [शरीरस्थाने ३।५०]॥

सुश्रुते—

'षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता।
पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता।'

इत्युक्तम्। [उत्तरतन्त्रे ४०।६४]॥

शार्ङ्गधरसंहितायामपि—

'षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता।
पक्वामाशयमध्यस्था ग्रहणीत्यभिधीयते॥
ग्रहण्यां पच्यते कोष्ठवह्निना.........।'

इति [पूर्वखण्डे ६।३,४]॥

[सं] ग्रहणीरोगविशेषोऽपि। तदुक्तं सुश्रुते—

'तस्मात्संदूषिते वह्नौ ग्रहणी संप्रदुष्यति॥
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति॥
पक्वं वा सरुजं पूतिं मुहुर्बद्धं मुहुर्द्रवम्।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः॥'

इति [उत्तरतन्त्रे ४०।६५-६७]॥

४. 'स्थानं प्राणाहारः प्रचक्ष्यते' इति घ.।

५. 'इकारान्तः' इति ग. घ.। अनयोरप्यन्यत्र 'उकारः, ऋकारः, ओकारः' इत्येव पाठ उपलभ्यते।

## अवितृस्तृतन्त्रिभ्य ईः ॥८२॥ (पं० उ० ३।१५२)

एभ्यो धातुभ्य ईप्रत्ययो भवति । अव रक्षणादौ[1] भ्वा० । अवति अव्यते वा **अवीः**–राजा स्त्री वा । कर्त्ता कर्म च । तॄ प्लवनतरणयोः भ्वा०[2] । तीर्यतेऽनया[3] तरति वेति **तरीः**–प्लवः, वायुश्च । करणं कर्त्ता [ च[4] ] । तन्त्रान्तरेऽत्र कित्करणादत्र गुणः[5] (?) । स्तृञ् आच्छादने[6] क्र्या० । स्तृणाति स्तीर्यते वा **स्तरीः**–मेघः शय्या च[7] । कर्त्ता कर्म च । तन्त्रि कुटुम्बधारणे चु० । तन्त्र्यतेऽनयेति **तन्त्रीः**–शुष्कस्नायुः, वादित्रं च । करणम्[8] ॥

## यापोः किद् द्वे च ॥८३॥ (पं० उ० ३।१५३)

आभ्यामी[9] प्रत्ययो भवति किच्च, द्वे चानयो रूपे भवतः । या प्रापणे अ० । यान्त्यनेन न पुनरावृत्ति[10] मिति **ययीः**–मोक्षमार्गः । करणम् । पा पाने भ्वा०, पा रक्षणे अ० । पिबति पातीति वा **पपीः**–आदित्यः । कर्त्ता ॥

## लक्षेर्मुट् च ॥८४॥ (पं० उ० ३।१५४)

लक्षेर्धातोरीः प्रत्ययो भवति मुडागमश्च[11] । लक्ष दर्शनाङ्कनयोः चु० ।

---

१. 'रक्षणादिषु' इति क. । 'रक्षादौ' इति ग. घ. ।
२. 'भ्वा०' नास्ति क. । ३. 'तीर्यतेऽनेन' इति क. ।
४. 'तरति तीर्यते वा तरीः वायुः स्तवनश्च । कर्त्ता करणं च' इति ग. घ. ।
५. अयं पाठः क.संज्ञके पुस्तक एवोपलभ्यते । स चासंबद्धः ।
६. 'छादने' इति क. ।
७. 'अस्मा (अश्मा) च' इति ग. । 'धूमश्च' इति घ. ।
८. 'करणं' इति नास्ति ग. घ. ।
९. 'या पा इत्येताभ्यां धातुभ्यामी०' इति क. ।
१०. 'अनेनापुनरावृत्तिपदं' इति ग. घ. ।
११. 'मुट् चागमः' इति क. ।

लक्षयति पुण्यकृतो लक्ष्यते वा पुण्यकृद्भिरिति **लक्ष्मीः**[1]–श्रीः[2]। कर्त्ता कर्म च ॥

## वातप्रमीः[3] ॥८५॥ (पं० उ० ४।१)

वातप्रमीरित्ययं शब्दो निपात्यत ईप्रत्यये[4]। डुमिञ् प्रक्षेपणे सौ० प्रपूर्वो वातशब्द उपपदे[5]। वातं प्रमिणोती[6]ति **वातप्रमीः**–शमीवृक्षः, पक्षी च[7]। कर्त्ता[8] ॥

॥ ईकारः[9] ॥

## कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥८६॥ (पं० उ० १।१)

एभ्यो धातुभ्य उण् प्रत्ययो भवति। डुकृञ् करणे[10] ता०, कृञ् हिंसायां सौ०, कृञ् करणे भौ०[11]। निरनुबन्धकग्रहणेन सानुबन्धकस्य ग्रहणमिति,

---

१. अत्राह सुबोधिनीकारः—'दीर्घादपि कृदिकारात् [ग० सू० अ ४।१।४५] इति पाक्षिक ईप् (ङीष्) कैश्चिदिष्यते। अत एव वातप्रमी श्री लक्ष्मी इत्यादिशब्दाः पक्षे ईबन्ता [ङीषन्ता] अपि। 'आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशः' इति [सारस्वत टी० भा० २ पृ० ३२६]।

व्युत्पत्तिसारे [पृ० ६३] ऽपीत्थमेव।

......तत्र कृदिकारादिति पाक्षिको ङीष् कैश्चिदिष्यते। नहि कारग्रहणे केवलग्रहणमिति मुनित्रयेण परिभाषितम्। अत एव वातप्रमी श्री लक्ष्मीरिति पक्षे ङ्यन्ताः सुसाधव इति रक्षितः। एतच्च दुर्घटग्रन्थे स्पष्टम्। मनो ७८५ (दुर्घटग्रन्थस्तु नोपलब्धः)।

२. 'क्विब्वचीति सम्प्रसारणं दीर्घश्च श्रीः। श्रीति ङीबन्तोऽपीति केचित्' [धातुप्रदीपे, पृ० ६५]।

३. सूत्रमिदं नास्ति छ.। ४. 'ईप्रत्यये' इति नास्ति ग. घ.।

५. 'उपपदम्' इति क.।

६. 'प्रमिनोति' इति क.। 'माङ् माने शब्दे च' इत्यत्राह धातुवृत्तिकारः—'उणादिवृत्तौ तु मिनोतेरीकारप्रत्यये व्युत्पाद्यते' इति। इदं चात्रावधेयं, पञ्चपादीवृत्तिकृतो माङ्धातोरेव व्युत्पादयन्ति।

७. 'वातप्रमीः वृक्षः' इति ग. घ.। ८. 'कर्त्ता' नास्ति क.।

९. 'ईकारान्तः' इति ग. घ.। १०. 'करणे' नास्ति क.।

११. 'तथा कृञ् करणे इति भ्वादौ इति क्षीरस्वामी।......करोति कृणोति करतीति वा कारु इति कस्यांचिदुणादिवृत्तौ दृश्यते' इत्याह पुरुषकारकृत्। [दैवम्—पृ० ३८]।

सामान्यग्रहणमिति वा पाठः । करोति कृणोति करति वा **कारुः**[1]–शिल्पिनाम । वर्तमानः कालः । कर्त्ता । वा गतिगन्धनयोः आ०, पै ओवै शोषणे भौ० । वाति वायति वा द्रव्याणि **वायुः**[2]–मरुत् । कर्त्ता । पा पाने भौ० । पिबत्यनेन तैलप्रभृतिद्रव्याणीति[3] **पायुः**–अपानस्थानम् । करणम् । जि जये भौ० । जयत्यनेन रोगा[4]निति **जायुः**–औषधम् । करणम् । डुमिञ् प्रक्षेपणे सौ० । मीयतेऽनेनेति **मायुः**–मानम् । करणम् । अथवा गां मिनोतीति **गोमायुः**–शृगालः[5] । कर्त्ता । स्वद[6] आस्वादने भौ० । स्वद्यतेऽनेनेति **स्वादुः** रुच्यम्[7] । करणम् । स्वदनं वा[8] **स्वादुः** । भावः । राध साध संसिद्धौ सौ०, ण्यन्तः प्रकृत्यन्तरो वा । साध्नोति साधयति[9] वा[8] परकृत्यानोति **साधुः**—धर्मशीलः । कर्त्ता । अशू व्याप्तौ संघाते च सौ० । अश्नुते क्षिप्रमिति **आशुः**–क्षिप्रम्, व्रीहिजातिश्च । कर्त्ता ॥

## छन्दसीणः ॥८७॥ (पं० उ० १।२)

---

**'कः करत्करतिकृधि०'** (अ०८।३।५०)इति ञ्भिनिर्देशः।

**करोति करति कृणोति वा कारुः—कारी नापितादिरिन्द्रश्च** । (हैमो० पृ०१)।

कृञ् करणे सौवादिकः।(सायण, ऋ०१।२३।६)।विशेष द्र०—पूर्व पृष्ठ १३,टि०६।

१. **'अथापि कारवो ह नाम ऋषयो अल्पस्वा आसन्'** (गो० पू०३।१७) । यौगिकार्थत्वेन—**'राघवस्य तथा कार्यं कारुर्वानरपुङ्गवः'** इति भट्टिः । रूढित्वेन—तत्रावश्यं पञ्चकारुकी भवति इति भाष्यम् । रूढियौगिकाभ्यामुणादौ शब्दाः सिद्ध्यन्ति, यौगिके तु धात्वर्थं प्रति कारकान्वयो भवत्येव । तथा च भट्टिः राघव········[सुबोधिनी, पृ० २८६ । व्युत्पत्ति०, पृ० १] ।

२. भाष्यकारमते अजेरपि धातोः **'यजिमनिशुन्धि'** [द० उ० १।१३४] इत्यादिना बहुलग्रहणाद् युचि **'वायौ'** [अ० २।४।५७] इत्यनेन वादेशे 'वायुः' इति पदं सिद्ध्यति । तथाहि भाष्यम्—**'न तर्हीदानीमिदं वक्तव्यं वायौ इति । वक्तव्यं च । किं प्रयोजनम् ? नेयं विभाषा । किं तर्हि ? आदेशो विधीयते । वा इत्ययमादेशो भवत्यजेयौ परतः । वायुरिति'** [भा० २।४।५६] इति ।

३. '०प्रभृतीनि द्रव्याणि' इति ग. घ. । ४. 'जयन्त्यनेन रोगम्' इति क. ।

५. इतः पूर्वं 'मरुत्' इत्यधिकं ग. घ. ।

६. क.पुस्तके सर्वत्र सूत्रे व्याख्याने च स्वदस्थाने 'स्वाद' इति पठ्यते ।

७. 'हृद्यम्' इति ग. घ. । ८. 'वा' नास्ति क. ।

९. 'साधयति साध्नोति' इति क. ।

छन्दसि विषय इणो धातोरुण् प्रत्ययो भवति। इण् गतौ अ०। एतीति **आयुः**[1]—जीवनम्। उर्वश्याः पुत्रः[2]। कर्त्ता। **जटायुः**—गृध्रराजः॥

## दॄसनिजनिचरिचटिरहिभ्यो[3] ञुण् ॥८८॥ (पं० उ० १।३)

एभ्यो धातुभ्यो ञुण् प्रत्ययो भवति। दॄ विदारणे क्र०[4], दॄ भये भ्वौ०[5]। दृणाति दरति[6] दीर्यत इति[7] वा **दारु**—काष्ठम्। कर्त्ता कर्म च। षण सम्भक्तौ[8] भ्वौ०, षणु दाने ता०[9]। सनति सनोति वा **सानुः**—पर्वतैकदेशः। कर्त्ता। जनी प्रादुर्भावे दै०, जन जनने जौ०। जायते जजन्ति[10] जन्यते[11] वा **जानुः**—शरीराङ्गम्। कर्त्ता कर्म च। चर गत्यर्थः भौ०। चरन्ति तत्र नेत्राणीति[12] **चारुः**—दर्शनीयः। अधिकरणम्। चट वट भेदे चौ०[13]। चाटयतीति **चाटुः**—पटुर्जनः, प्रियवादी, शिष्यश्च। कर्त्ता। रह त्यागे चौ०। राह्यतेऽनेनेति **राहुः**[14]।

प्रत्ययान्तरकरणं स्वरार्थम्। द्व्यनुबन्धकरणं 'जनिवध्योश्च' [अ० ७।३।३५] इति जनेर् [ह्रस्वत्वप्रतिषेधार्थम्[15],] वृद्धिप्रतिषेधो मा भूत्, तेन सिद्धं जान्विति॥

## किञ्जरयोः श्रिणः ॥८९॥ (पं० उ० १।४)

किं जरा इत्येतयोरुपपदयोर्यथासंख्यं[16] शॄ इण् इत्येताभ्यां ञुण् प्रत्ययो भवति। शॄ हिंसायां क्र०। श्रृणाति[17] **किंशारुः**—सस्यशूकम्[18]। कर्त्ता। इण् गतौ

---

१. 'वरुण एवायुः' (शत० ४।१।४।१०) वचनाद् वरुणोऽप्यायुशब्देनोच्यते।
२. 'अथवा उर्वश्याः किल पुत्रः' इति क.।
३. 'रहि' नास्ति क.। 'वनि' इत्यधिकं ज.।
४. 'दॄ विदारणे क्र०' नस्ति क.।
५. 'क्र०' इति क.।
६. 'दरति' नास्ति क.।
७. 'इति' नास्ति क.।
८. 'भक्तौ' इति क.।
९. 'भ्वौ०' इति क.।
१०. 'जजन्ति' नास्ति क.।
११. 'जन्यते' नास्ति ग.।
१२. 'चरतीति चक्षु नेत्राणि' इति ग. घ.।
१३. 'रौ०' इति क.।
१४. 'रह त्यागे .....राहुः' इति नास्ति क.।
१५. कोष्ठान्तर्गतोऽयं पाठोऽनावश्यकः।
१६. 'यथासंख्यम्' इति नास्ति ग. घ.।
१७. 'किमपि श्रृणातीति' इति क.।
१८. 'धान्यशूकः' इति क.।

आ० । जरामेतीति[1] जरायुः—गर्भाशयः । कर्त्ता[2] ॥

## त्रो रश्च लः ॥६०॥ (पं० उ० १।५)

तॄ ऋ इत्येताभ्यां ञुण् प्रत्ययो भवति अनयोश्च कृतवृद्ध्यो रेफस्य लकारादेशः[3] । तॄ प्लवनतरणयोः भ्वा० । तरन्त्यनेन वर्णा इति तालुः—वक्त्रैकदेशः । करणम् । ऋ गतौ भ्वा० जु० । ऋच्छति, इयर्त्ति, अर्यते वा आलुः[4]—श्लेष्मातकम् । शाकमित्येके । कर्त्ता कर्म च ॥

## कृके वचः कश्च ॥६१॥ (पं० उ० १।६)

कृकशब्द उपपदे वचेर्धातोर्ञुण् प्रत्ययो भवति कश्चान्तादेशः । वच परिभाषणे[5] अ०[6], ब्रूञ् व्यक्तायां वाचि अ० । कृकेण गलेन[7] वक्ति ब्रवीति वा कृकवाकुः—कुक्कुटः । कर्त्ता ॥

## भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ॥६२॥ (पं० उ० १।७)

एभ्यो धातुभ्य उः प्रत्ययो भवति । डुभृञ् धारणपोषणयोः जु०, भृञ् भरणे भ्वा० । बिभर्ति भरति वा प्राणिन इति भरुः—समुद्रः । कर्त्ता । भ्रियतेऽसाविति भरुः । कर्म । मृङ् प्राणत्यागे तु०[8] । म्रियन्तेऽस्मिन् प्राणिनः[9] सलिलार्थिन इति मरुः—जलतृणविवर्जितो देशः । अधिकरणम् । शीङ् स्वप्ने

---

१. 'प्राप्यते येन वेति' इत्यधिकं क. ।

२. 'गर्भशयनम् । कर्त्ता करणं च' इति क. ।

३. 'भवति' इत्यधिकं क. । ४. 'आलुः गलैकदेश' इति नारायणः [पृ० ३] । भोजस्तु—'आलुः गलान्तिकम् । ऋ इत्यत्र केचित् [ऋदन्तं मन्यन्ते] तेन शृणातेः शालुः हिंस्रः । मृङो मालुः' इत्याह [पृ० २] ।

'इयर्त्ति अर्यते वा ऋच्छति जलमत्रेति आलुः घटी, गागर इति भाषा' इति व्युत्पत्तिसारे [पृ० ३] । उज्ज्वलदत्तस्तु—'दृतन्यादिसूत्रे तलिग्रहणे कर्त्तव्ये सूत्रमिदमन्यतोऽपि ऋकारान्ताद्भावार्थम् .... आलुः घटी भक्ष्यद्रव्यं च' इत्येवमाह [पृ० ६] । हर्षवर्धनस्तु—'आलुः शाकविशेषः' इत्याह [लिङ्गा०, का० ६६] ।

५. 'भाषणे' इति क. । ६. 'अ०' नास्ति क. ।

७. 'कृकम्' इति क. । ८. 'घनि' इत्यधिकं च. ।

९. 'भ्वा०' इति क. । १०. 'प्राणिनः' नास्ति ग. घ. ।

आ० । शेतेऽत्यर्थमिति[1] शयुः–अजगरः । कर्त्ता । तॄ प्लवनतरणयोः भ्वौ०[2] । तरन्ति तं[3] छायापुष्पफलार्थिन[4] इति तरुः–वृक्षः । कर्म । चर गत्यर्थ भ्वौ० । चरन्ति तस्माद्देवर्षिपितृभूतानीति चरुः–उपहारः । अपादानम् । त्सर छद्म[5]-गतौ० भ्वौ[6] । त्सरतीति त्सरुः–आयुधग्रहणैकदेशः । कर्त्ता । तनु विस्तारे ता०[7] । तनोत्याहारजातं प्राप्ये[8]ति तनुः–देहः । कर्त्ता । डुमिञ् प्रक्षेपणे सौ० । मीयतेऽसाविति[9] मयुः[9]–तुरङ्गवदनः[10], प्राकृतम् । कर्म । टुमस्जो शुद्धौ तौ०[11] । मज्जत्यम्भसीति मद्गुः–पक्षी । न्यङ्क्वादि[12]पाठात्कुत्वम्[13], जश्त्वेन सस्य दत्वम्[14] । कर्त्ता ॥

## अणश्च[15] ॥६४॥ (पं०उ० १।८)

अण[16] धातोरुः प्रत्ययो भवति । अण शब्दे[17] भ्वौ०[6] । अणतीति अणुः-सूक्ष्मः । कर्त्ता ॥

## धान्ये नित् ॥६४॥ (पं० उ० १।६)

धान्ये गम्यमाने अण[6] धातोरुः प्रत्ययो भवति नित्संज्ञकः । अण्यते[18] प्राणिभिरिति अणुः–धान्यविशेषः । कर्म । नित्करणमाद्युदात्तार्थम्[19] ।

---

१. 'एतम्' इति ग. । २. 'भ्वौ०' नास्ति क. ।

३. 'तीर्यते छायापुष्पफलार्थिभिः' इति घ. । ४. 'छायापुष्पार्थिन' इति क. ।

५. 'छद्म' इति नास्ति क. । ६. 'भ्वौ०' नास्ति क. ।

७. 'ता०' नास्ति क. । ८. 'प्राप्नोति' इति ग. घ. ।

९. बाहुलकादत्र 'मीनातिमिनोतिदीङां ल्यपि च' [अ० ६।१।५०] इत्यात्वं न भवति ।

१०. 'तुरङ्गवदनः' नास्ति क. । 'किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः' इत्यमरकोशः [१।१।७१] ।

११. 'भ्वौ०' इति क. । १२. 'न्यङ्क्वादीनां च' [अ० ७।३।५३] इत्यनेनेति भावः ॥ १३. 'गत्वम्' इति क. ।

१४. 'झला जश् झशि' [अ० ८।४।५३] इत्यनेनेति भावः । क. ग. पुस्तकयोरेतद्वाक्यं नोपलभ्यते । १५. 'अणेश्च' इति क. ।

१६. 'अणेः' इति क. । १७. 'शब्दार्थः' इति क. ।

१८. इतः पूर्वं 'अण शब्दार्थः भ्वौ' इत्यधिकं क. ।

१९. 'ञ्नित्यादिर्नित्यम्' [अ० ६।१।१९७] इत्यनेनेति भावः । 'निद्ग्रहणं 'फलिपाटि' [द० उ० १।१०३] इत्यादिसूत्रमभिव्याप्य सम्बध्यते' इति दीक्षितः । [सि० कौ० पृ० ५१७] ।

उणादयो बहुलम् [अ० ३।३।१] इति बहुल[1]वचनादन्यतोऽप्युः प्रत्ययो भवति । कटी गतौ भौ०[2] । कटतीति कटुः—रसः । कर्त्ता ॥

## शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनि-भ्यश्च ॥६५॥ (पं० उ० १।१०)

एभ्यो धातुभ्य उः प्रत्ययो भवति नित्सञ्ज्ञकः । शॄ हिंसायाम् क्रै० । शृणातीति शरुः—क्रोधः । कर्त्ता । स्वृ शब्दोपतापयोः भौ० । स्वरतीति स्वरुः-वज्रम् । कर्त्ता । स्निह प्रीतौ दै०[3] । स्निह्यतीति स्नेहुः-चन्द्रमाः[4] कर्त्ता । त्रपूष् लज्जायां भौ० । धातूनामनेकार्थत्वात्[5] त्रपते तेजसा स्पृष्ट[6]मिति त्रपु—

उज्ज्वलदत्तोऽपि—'निद्ग्रहणमिदं स्वरार्थं फलिपाटि इत्यादि सूत्रं यावदनुवर्तत इति 'वोतो गुणवचनात्' [अ० ४।१।४४] इत्यत्र सूत्रे न्यासः' इत्याह [पृ० ८] ।

तत्र न्यासकारस्य त्वेतावद् वाक्यम्—'फलिपाटि······ इत्युप्रत्ययः । पाटेश्च पटिरादेशः । धान्ये नित् इत्यनुवृत्तेर्नित्त्वादाद्युदात्तत्वम्' इति [अ०४।१।४४ पृ० ८४५] । नैतावता कथमपि 'फलिपाटि' इति यावदेव निद्ग्रहणमनुवर्तते न्यासकारमत इति शक्यमूहितुम् ।

दशपादीवृत्तिकारस्तु 'यो द्वे च' [१।१०६] इति यावदनुवर्त्तयति निद्ग्रहणम् । यदाहोत्तरसूत्रे [१।१०७] 'निदिति निवृत्तम्' इति । युक्तं चैतत् 'ययुर्नामासि' शिशुर्नामासि' [यजु० २२।१९] इत्यादौ ययुशिशुपदयोरुभयोरप्याद्युदात्तत्वस्यैव दर्शनात् । प्रक्रियाकौमुदीटीकाकारोऽप्यत्रैवानुकूलः । लिङन्तः क्रियावाची ययुः शब्दस्त्वन्तोदात्त एव ।

[शिशुः] 'सन्वद्भावाद् द्विर्भवित्वे । अत एव नित्त्वादाद्युदात्तत्वम्' । सायणभाष्य [ऋ० १।६५।९,१०] । ययुः [अथर्व० ४।२४।२] इति अन्तोदात्तः, परं स पाठः प्रामादिकः । पाठान्तरे युयु इति पाठः शुद्धः सायणानुसारी च ।

अपरे तत्र (अजिवृशि०१।११२) 'धान्ये नित्' इत्यनुवर्तयन्ति । (श्वेत० उ० वृ० पृ० ३३); (द्र०—टि० दश० पृ०८३) । दश० १।११३ सूत्रसिद्धो मृगुशब्दः (यजु० १। १८) आद्युदात्तो दृश्यते । तदर्थं निदनुवर्त्तनीयम् । वृषादित्वाद् बाहुलकत्वाद्वाद्युदात्तः । द्र०—यजुर्वेदभाष्य-विवरणम् । (यजु० १।१८) पृ० ९६, संस्क० २ ।

१. 'बहुलं' नास्ति ग. घ. । २. 'भौ०' नास्ति क. ।
३. 'दै०' नास्ति क. ।
४. दीक्षितस्तु—'स्नेहुर्व्याधिः' 'चन्द्र इत्यन्ये' इत्याह [सि० कौ० पृ० ५१७] ।
५. 'धातू···त्वात्' नास्ति क. । ६. 'स्पृष्टं' नास्ति ग. घ. ।

धातुद्रव्यम् । कर्त्ता । असु क्षेपणे दै० । अस्यन्ति कलेवरमिति असवः—प्राणाः[1] । कर्त्ता[2] । वस निवासे भ्वौ०, वस आच्छादने अा० । वसति सुकृत[3] इति वसु[4] हिरण्यम् । कर्त्ता । वस्ते वा भाग्यवतो[5] जनानिति वसुः धनम् । कर्त्ता[6] । हन हिंसागत्योः अा० । हन्त्याहारजात[7]मिति हनुः—वक्त्रैकदेशः । कर्त्ता । क्लिदू आर्द्रीभावे दै० ण्यन्तः । क्लेदयति चक्षुर्मनांसीति[8] क्लेदुः—चन्द्रमाः[9] । कर्त्ता । बन्ध बन्धने क्र्यै० । बध्नाति स्नेहेन बन्धुः—स्वजनः । कर्त्ता । मन ज्ञाने दै०, मनु अवबोधने ता० । मन्यते मनुते वा मनुः—प्रजापतिः । कर्त्ता ॥[10]

## स्यन्देः सम्प्रसारणं धश्च ॥९६॥ (पं० उ० १।११)

स्यन्देर्धातोरुः प्रत्ययो भवति नित्संज्ञकः[11], सम्प्रसारणं भवति[12] धश्चान्तादेशः । स्यन्दू प्रस्रवणे भ्वौ० । स्यन्दतेऽत्यर्थमिति सिन्धुः—समुद्रः, प्रतीता नदी च[13] । कर्त्ता ॥

## उन्देरिच्चादेः ॥९७॥ (पं० उ० १।१२)

उन्देर्धातोरुः प्रत्ययो भवति निच्च इकारश्चादेः[14] । उन्दी क्लेदने रौ० ।

---

१. 'अस्यतेऽस्यामस्यां जातौ जीर्णं कलेवरमित्यसुः प्राणः' इति क. ।

२. 'अधिकरणम्' इत्यधिकं क. ।

३. 'सुकृतम्' इति ग. घ. । 'सुकृतेन' इति क. ।

४. वसव एतेषु हीदं सर्वं वसुहितम्, एते हीदं सर्वं वासयन्ते, तद् यदिदं सर्वं वासयन्ते तस्माद् वसवः । शत० १४।६।९।४; ११।६।३।६।। 'बहुलमन्यत्रापि संज्ञाछन्दसोः' (द० उ० ८।४.) इत्यनेन 'ड' प्रत्ययेऽपि णेर्लुक् द्रष्टव्यः ।

५. 'भाग्ययुक्तान्' इति क. । ६. 'कर्म' इति ख. ग. घ. ।

७. 'आहारजातं' नास्ति ग. घ. । 'आहारं' इति क ।

८. 'चक्षुर्मनसीति' इति ग. घ. ।

९. 'क्लेदयतीति क्लेदुश्चन्द्रमा इत्यन्ये' इति हेमचन्द्रः [उणा० वृ० सू० ७१७ पृ० १२१] । १०. 'मन ··· कर्त्ता' नास्ति ख. ।

११. 'निच्च' इति क. । १२. 'च' इति क. ।

१३. 'स्यन्दतीति सिन्धुः नदः' इति क. ।

१४. 'इदादे' इति ख. । 'आदेः. इत्येव ग. ।

उनत्ति[1] तेजसा चक्षुर्मनांसीति इन्दुः— चन्द्रमाः, हरचूडामणिः[2]। कर्त्ता ॥

## ईषेः[3] किच्च ॥ ९८॥ (पं० उ० १।१३)

ईषेर्धातोरुः प्रत्ययो भवति किच्च, निच्च[4], आदेरिकारादेशः[5]। ईष उञ्छे भ्वा०। ईष्यत इति इषुः[6]—शरः कर्म ॥

## स्कन्देर्लोपश्च[7] ॥ ९९॥(पं० उ० १।१४)

आदेरित्यनुवर्तते[8]। स्कन्देर्धातोरुः प्रत्ययो भवति निच्च, आदेर्लोपश्च[9]। स्कन्दिर् गतिशोषणयोः[10] भ्वा०। स्कन्दन्त्य[11]स्यस्मिन् तक्षजातय इति कन्दुः भोगस्थानम्[12]। अधिकरणम् ॥

## सृजेरसुं च[13] ॥ १००॥(पं० उ० १।१५)

सृजेर्धातोरुः प्रत्ययो भवति नित्संज्ञकः, असुं[14] चागमः, आदिलोपश्च[15]। सृज विसर्गे तौ०[16]। सृजन्ति तां सृज्यते वासाविति रज्जुः—आम्रेडितक्रिया।

---

१. 'उन्दन्ति' इति क.। २. 'हरचूडामणिः' नास्ति क.।

३. 'इषेः' इति ज.। ४. 'निच्च' इति नास्ति क.।

५. 'इकारश्चादेरादेशः' इति क.।

६. दयानन्दसरस्वतीस्वामिना'इषु' पदं 'इष आभीक्ष्ण्ये' 'इष इच्छायाम्' इत्यास्याम् धातुभ्यामपि साधितम्। तद्यथा—'प्राप्तिसाधनमिच्छाविशेषं वा' (ऋ० भा० १।६४।१०)। 'इष्णात्यभीक्ष्णं हिनस्ति शत्रुं येन तस्मै' (यजु० भा० १६।१)।

७. सलोपश्च' इति ङ। ८. 'आदेरित्यनुवर्तते' नास्ति ख.ग.घ.।

९. आदिलोपश्च भवति' इति क.। १०. 'शोषणे' इति क.।

११.कोशेषु 'स्कन्दत्य०' इति पाठः।

१२. 'मक्ष्यजातमिति कन्दुः पाकस्थानम्' इति क.। 'स्कन्दति' 'स्कन्दन्त्यस्यां जनता यस्मिन्निति व्युत्पत्या भोगस्थानं कन्दुरिति केचित्' इति सुबोधिनीकारः। (सि० च० भा० २ पृ० २८९) १३. 'सृजेरसुश्च' इति क.। 'सृजेरजुं च' इति च.।

१४. 'नित्संज्ञः असुः' इति क.।

१५. असुमागमः सकारलोपश्च, इति ख. ग. घ.।

१६. 'भौ' इति क.।'सृजन्ति वा सृज्यते वा।

कर्म[1] ॥

## कृतेराद्यन्तविपर्ययश्च ॥ १०१॥ (पं० उ० १।१६)

कृतेर्धातोरुः प्रत्ययो भवति निच्च, आद्यन्तवर्णविपरीतत्वं च[2]। कृती वेष्टने रौ०[3]। कृत्यतेऽनेनेति तर्कुः—सूत्रवेष्टनम्। करणम्॥

## नावञ्चेः ॥ १०२॥ (पं० उ० १।१७)

नावुपपदेऽञ्चेर्धातोरुः प्रत्ययो भवति निच्च। अञ्चु गतिपूजनयोः भौ० निपूर्वः। नियतमञ्चतीति न्यङ्कुः-मृगः। कर्ता[4]। न्यङ्क्वादित्वा[5]त्कुत्वम्॥

## फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च[6] ॥१०३॥ (पं० उ० १।१८)

एभ्यो धातुभ्य उः प्रत्ययो भवति निच्च[7], यथासंख्यं चैषां गुगागमः, पटि, नाकि[8], ध, त इत्येते चादेशा भवन्ति। त्रिफला विशरणे भौ०[9]। फलतीति फल्गुः-असारः। कर्ता। पट गतौ भौ० ण्यन्तः। पाटयतीति पटुः-चतुरो जनः। कर्त्ता। णम[10] प्रह्वत्वे शब्दे च[11] भौ०। नम्यतेऽनेनेति नाकुः-वल्मीकम्[12]। करणम्। मन ज्ञाने दै०। मन्यते तदतिशयेन[13] इति मधु-माध्वी[14] क्षौद्रं वा। कर्म[15] जनी प्रादुर्भावे दै०। जायते तदिति जतु-लाक्षा काष्ठनिर्यासः[16]। कर्त्ता।

---

१. 'सृजन्ति वा सृज्यते वारज्जुः आपीडनक्रिया कर्त्ता कर्म च' इति क.।

२. '०विपर्ययो भवति' इति क.।

निरुक्तमहाभाष्ययोरप्यत्राद्यन्तविपर्ययः प्रदर्शितः। यथा—'**अथाप्याद्यन्तविपर्ययो भवति। स्तोका, रज्जुः, सिकताः, तर्क्विति**' (नि०२।१)।

'**वर्णव्यत्यये—कृतेस्तर्कः, कसेः सिकताः, हिंसेः सिंहः**' इति (म० भा० हयवरट्-सूत्रे)। 'ता' इति क.। ३. 'तो०' इति ख. ग.।

४. 'कर्त्ता' नास्ति क. ५. अ० ७।३।५३।

६. 'फलिपाटिनममनजनां गुक्पटिनाकिधताश्च' इति क.। '०पटनाकधताश्च' इति च.। ७. 'निच्च' नास्ति ग.घ.। ८. 'गुक् पट् नाक्' इति क.।

९. 'भौ०' नास्ति क.। १०. 'नमु' इति क.। 'णमु' इति ख.।

११. शब्दे च' नास्ति क.। १२. 'व्यलीकम्' इति क.।

१३. इतोऽग्रे 'जनः' इति क.। १४. मान्द्वीकम्' इति क.।

१५. 'कर्म' नास्ति क.। १६. 'निर्यासेः' इत्येव क.।

## वलेगुक् च ॥१०४॥ (पं० उ० १।१९)

वलेर्धातोरुः प्रत्ययो भवति निच्च[1], गुक्चागमः । वल संवरणे भ्वा० । वलतीति वल्गुः-सरसः[2], दर्शनीयं च । कर्त्ता ।

## शः कित् सन्वच्च ॥१०५॥ (पं० उ० १।२०)

शो इत्येतस्माद्धातोरुः प्रत्ययो भवति किच्च निच्च, सन्वच्चास्मिन्[3] कार्यं भवति । शो तनूकरणे दै०[4] । श्यति मातुस्तनं[5] पीत्वेति[6] शिशुः[7]—बालः । कर्त्ता ।।

## यो द्वे च ॥१०६॥ (पं० उ० १।२१)

या इत्येतस्माद्धातोरुः प्रत्ययो भवति किच्च[8] [निच्च] द्वे[9] चास्य[10] रूपे भवतः । या प्रापणे अ० । यान्ति तेन सुकृतकर्माण[11] इति ययुः[12]—अश्व-मेधीयोऽश्वः,[13] स्वर्गमार्गश्च[14] । करणम् ।।

## कुभ्रश्च[15] ॥१०७॥ (पं० उ० १।२२)

भृ[16] इत्येतस्माद्धातोः कुः प्रत्ययो भवति द्वे चास्य रूपे भवतः प्रकृतेः । द्वेग्रहणमनुवृत्तम्, निदिति निवृत्तम्[17] । डुभृञ् धारणपोषणयोः जु०, भृञ्

---

१. निच्च' नास्ति ख. ग. घ. ।

२. 'असारं' इति क. । 'सरत्योद०' इति ख. । ३. चास्मिन्' नास्ति ख. ।

४. 'दै०' नास्ति ख. ग. घ. । ५. मातरं स्तनं' इति क. ।

६. 'प्राप्य' इति ख. । 'पिबति' इति ग. घ. ।

७. (शिशुः) 'सन्वद्भावाद् द्विर्भावित्वे । अत एव नित्वादाद्युदात्तत्वं' (ऋ० सायणभाष्य १।६५।९,१०) श्वसित्यप्सु मन्त्रे । ८. 'किच्च'नास्ति ग.घ. ।

९. सन्वदधिकाराद् द्विर्वचने सिद्धे द्वे ग्रहणं सन्वद्भावनिवृत्यर्थम् ।

१०. 'च' इति क. । ११. 'सकलं पुण्यकर्माणः' इति क. ।

१२. 'कादिष्विति वक्तव्यम् । इहापि यथा स्यात्—बभ्रुः ययुरिति ।' (महा० ६।१।१२) ।

१३. 'अश्व' इति नास्ति ख. ग. घ. । १४. 'स्वर्गकर्माणश्च' इति ख. ।

१५. 'भृञः' इति क. ख. छ. । १६. 'भृञ्' इति क. ।

१७. 'प्रकृतेः......निवृत्तम्' नास्ति क. ख. ।

भरणे भौ०। बिभर्त्ति भरति वा तेज इति[1] बभ्रुः[2]—कपिलो वर्णः, नकुलो वा[3]।

प्रकृतेः[4] प्राक्प्रत्ययनिर्देशश्चक्र्वादीनां प्रसिद्ध्यर्थः[5]। डुकृञ् करणे ता०। करोत्यसाध्या[6]न्यपि कर्माणीति चक्रुः—विष्णुः। कर्त्ता। हन हिंसागत्योः अ०। हन्तीति जघ्नुः—इन्द्रः। कर्त्ता। तॄ प्लवनतरणयोः भौ०। तरतीति ततिरुः[7]—पतङ्गः[8]। कर्त्ता। पॄ पालनपूरणयोः क्र्यै०। पृणातीति पपुरुः[9]—चन्द्रः, समुद्रश्च। कर्त्ता[10]। पूर्यतेऽसाविति पपुरुः। कर्म॥

## पॄभिदिव्यधिगृधिधृषिहृषिभ्यः ॥१०८॥ (पं० उ० १।२३)

एभ्यो धातुभ्यः कुः प्रत्ययो भवति[11]। पॄ पालनपूरणयोः क्र्यै०[12]। पृणाति पूर्यते वा पुरुः—विस्तीर्णम्[13], लोकश्च। कर्त्ता कर्म[14] [च]। भिदिर् विदारणे रौ०। भिनत्तीति भिदुः—वज्रम्। कर्त्ता। व्यध ताडने दै०। विध्यतीति विधुः—नामायुधः, शशिवाय्वग्नयः, विष्णुश्च[15]। कर्त्ता। गृधु अभिकाङ्क्षायाम् दै०। गृध्यतीति गृधुः—अभिलाषकः[16]। कर्त्ता। ञिधृषा

---

१. 'इति' नास्ति क.।

२. 'पिङ्गलो नकुलश्चैव खलतिर्विष्णुरेव च। चतुर्ष्वर्थेषु मेधावी बभ्रुशब्दं प्रयोजयेत्'। इति श्वेतवनवासिनोद्धृतः श्लोकः [पृ० १३]

३. 'कर्त्ता' इत्यधिकं क.। ४. 'प्रकृतेः' नास्ति क. ख.।

५. प्रक्रियाकौमुदीटीकाकृदपि—'प्राक्प्रत्ययनिर्देशोऽन्येषां सिद्धये' [भा० २ पृ० ६१०] इत्याह। ६. 'असत्यान्यपि' इति ख.।

७. 'ततरुः' इति क. ग. घ.। 'तितिरुः' इति ख.। प्रत्ययस्य कित्वाद् गुणे प्रतिषिद्धे 'ॠत इद्धातोः' [अ० ७।१।१००] इति इत्वे रपरत्वे च 'इत्येव सम्यक्। ८. 'पतत्री तरङ्गश्च' इति क.।

९. 'उदोष्ठ्य पूर्वस्य' [अ० ७।१।१०१] इत्युत्वम्।

१०. 'कर्त्ता' नास्ति क,।

११. 'पॄ पालन····· भवति' इति नास्ति ख.। १२. 'क्र्यै०' नास्ति क.।

१३. 'विस्तीर्णः' इति कः। १४. 'कर्त्ता कर्म' नास्ति क.।

१५. 'विधवो नामायुधानि शशिवाय्वग्न्यश्च' इति क.।

१६. 'अभिलाषः' इति क.।

प्रागल्भ्ये सौ० । धृष्णोतीति धृषुः—प्रगल्भः, उत्साहो वा । कर्त्ता । हृष तुष्टौ दै० । हृष्यतीति हृषुः—हर्षः[1], हृषवो नाम सूर्याग्निशशिनः राहुर्वा[2] । कर्त्ता ॥

## कृग्रोरुच्च[3] ॥१०९॥ (पं० उ० १।२४)

कृ गृ इत्येताभ्यां कुप्रत्ययो भवति, उकार[4]श्चान्तादेशः । कृ विक्षेपे[5] भौ० । कीर्यन्तेऽनेन धर्मविजययशांसीति[6] कुरुः—राजर्षिः । कर्ता । गृ निगरणे तौ०[7], गृ शब्दे क्र्यै०[8] । गिरति गृणाति वा तांस्तानर्थविशेषा[9]निति गुरुः—आचार्यः, । पूज्यो जनश्च । कर्त्ता ॥

## अपदुःसुषु स्थः ॥११०॥ (पं० उ० १।२५)

एषूपपदेषु स्था इत्येतस्मात्कुः प्रत्ययो भवति । ष्ठा गतिनिवृत्तौ भौ० । अपतिष्ठतीति अपष्ठु । दुस्तिष्ठतीति दुष्ठु । सुतिष्ठतीति सुष्ठु[10] । कर्त्ता ॥

## रपेरिच्चोपधायाः ॥१११॥ (पं० उ० १।२६)

रपेः कुः प्रत्ययो भवति, इच्चोपधायाः । रप वचसि वैक्लव्ये[11] । अनिष्टं

---

१. 'हर्षः' नास्ति क. ।

२. 'ऋजुर्वा' इति क. । ३. 'कृगृभ्यामुरुश्च' इति क. ।

४. 'उरुश्च' इति क. । ५. 'पादविक्षेपे' इति ग. घ. ।

६. 'कीर्णमनेन धर्मजीवयशांसीति' इति ग.घ. । 'कीर्णमनेन किरति जीवयशांसीति वा' इति ख. । ७. 'भौ' इति क. ।

८. 'तौदादिकेन किरतिना साहचर्याद् गिरतेरेव ग्रहणम्, न गॄ शब्दे इति क्र्यादिकस्य, इति श्वेतवनवासी [पृ० १३, १४,]। ९. 'विशेषान्' नास्ति ख. ग. घ. ।

१०. 'सुष्ठु दुष्ठु ·· मृगय्वादयश्च (दश० उ० १।१२१) इति कुप्रत्ययान्तौ'- इति न्यासकारः [८।३।९८] ।

'एषां त्रयाणां मृगय्वादिपाठेन सिद्धत्वात् सूत्रमिदं न्यासकारस्यासम्मतमिति सुषामादिषु च [अ०८।३।९८] इत्यत्र रक्षितः' इत्युज्ज्वलदत्तः [पृ० १३] ।

११. सम्प्रति 'रप लप व्यक्तायां वाचि' इत्येवं धातुपाठेषूपलभ्यते । श्वेतवनवासिना रपेर्हिंसार्थत्वमाश्रित्य रिपुशब्दो निरुक्तः । तथाहि—रपति हिनस्ति इति रिपुः

रपतीति रिपुः—वैरी। कर्त्ता[1]॥

**अर्जिदृशिकम्यमिपशि[2] बाधामृजिपशितुग्धुग्दीर्घ-हकाराश्च ॥११२॥ (पं० उ० १।२७)**

एभ्यो धातुभ्यः कुः प्रत्ययो भवति, यथासंख्यं चैषामृजिपशितुग्धुग्दीर्घ-हकारा[3] इत्येत आदेशागमा[4] भवन्ति[5]। अर्ज सर्ज अर्जने भ्वा०। ण्यन्तः। अर्जयति यत्नेन[6] धर्मशीलयशांसीति **ऋजुः** आर्जवयुक्तः[7]। कर्ता। दृशिर् प्रेक्षणे भ्वा०। सर्वानविशेषेण[8] पश्यतीति **पशुः**[9]—मन्त्रबाह्यो जनः। कर्त्ता[10]। कमु कान्तौ भ्वा० प्रकृत्यन्तरं, ण्यन्तो वा। कामयते काम्यते वासाविति[11] **कन्तुः**—कामी [कामश्च]। कर्त्ता कर्म च। अम गत्यादिषु भ्वा०। अमतीति **अन्धुः**—नीरम्[12]। कर्त्ता[13]। पशिः[14] सौत्रो धातुर्नाशने[15]। पश्यते[16]ऽसावल्पेनापि वायुनेति **पांशुः**[17]—रेणुः। कर्म।

---

शत्रुः। संज्ञाशब्देषु धातोरर्थान्तरवृत्तित्वमस्ति। तथाह्युक्तम् — धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमिति' [पृ० १४, १५] इति।

'इच्चो······क्लैव्ये' इति नास्ति ग. घ.।

१. 'अपदुःसुषु स्थः······ कर्त्ता' इति नास्ति क.।

२. 'पसि' इति ख.। 'पांसि' इति क.ख.। 'पसि, इति च.ज.छ. वस्तुतः 'पशि' इत्येव पाठः साधुः। यदि 'पसि' इति पाठोऽभविष्यच्चेत् 'पसि' सौत्रो धातुः' इत्यग्रे नावक्ष्यत्। 'पडि पसि नाशने' इत्यस्य चुरादौ विद्यमानत्वात्।

३. 'ऋज्पग्तुक्धुक्दीर्घहकाराश्च' इति क.।

४. 'आगमा' नास्ति क. ग. घ.।

५. एभ्यो भवन्ति' इत्यस्य स्थाने 'एतेषामेते आदेशागमा भवन्तिः' इति क. पाठः। ६. 'प्रयत्नेन' इति क.। 'बलेन' इति ग. घ.।

७. 'अर्जनशील·' इति ग. घ.। ८. नास्ति क. ख.।

९. 'असत्ववाचिनः पशुशब्दस्य चादिषु [अ० १।४।५७] पाठान्निपातसंज्ञा। तथा च दृश्यते प्रयोगः 'लोधं नयन्ति पशु मन्यमानाः' (ऋ० ३।५३।२३) इति श्वेतवनवासी।

१०. 'कर्त्ता' नास्ति क.।

११. 'कामयते······विति' इत्यस्य स्थाने 'कम्पत असाविति' इति क.।

१२. 'उदपानम्' इति क.। १३. 'अम्यते वा अंभु। कर्म' इत्यधिकं क.।

१४. 'द्र०—पूर्व पृष्ठ टि० ३। १५. 'धातुः' इति क.।

१६. 'पंस्यते' इति ख.। 'पांस्यते' इति क.। १७. 'पांसुः' इति क. ख.।

बाधृ विलोडने[1] भौ० । बाधते परानिति बाहुः—शरीराङ्गम् । कर्त्ता ॥

**प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च ॥११३॥ (पं० उ० १।२८)**

एभ्यो धातुभ्यः कुः प्रत्ययो भवति सम्प्रसारणं च, यथासम्भवं[2] सलोपश्च । प्रथ प्रख्याने भौ० । प्रथतेऽसाविति **पृथुः** राजा । कर्त्ता । प्रथनं वा **पृथु**–विस्तीर्णम् । भावः । म्रद मर्दने भौ० । म्रद्यतेऽसाविति **मृदुः**–अकठिनः । कर्म । भ्रस्ज पाके तौ० । भ्रष्टाद्रेतस उत्पन्न[3] इति **भृगुः**–ब्रह्मणः सुतः[4] । न्यङ्क्वादित्वात्[5] कुत्वम् । अपादानम् ॥

**लङ्घिबंह्योर्नलोपश्च ॥११४॥ (पं० उ० १।२९)**

आभ्यां धातुभ्यां कुः प्रत्ययो भवति नकारलोपश्च । लघि गत्यर्थः भौ० । लङ्घ्यतेऽसौ बालैरिति **लघुः**—गौरववर्जितः । कर्म । बहि वृद्धौ भौ० । बंहत इति **बहुः**—प्रभूतम्[6] । कर्त्ता । बंहनं बहु । भावः ॥

---

१. 'राठने' इति क. ।  २. 'यथादर्शनम्' इति क. ।

३. 'जातः' इति क. ।

४. अत्राह निरुक्तकारः—'**अर्चिषि भृगुः सम्बभूव । भृगुर्भृज्यमानो न देहे**' इति [३।१७] ।

**भृगुः पञ्चतपः प्रभृतिना तपसा भृज्यमानोऽपि न देहे**' इति स्कन्दः [निरु०टी०-भा० २ पृ० १८०] ।

श्वेतवनवासी तु—'**भृज्जति परिपक्वविज्ञानो भवति इति भृगुः**'[पृ०१६] इत्याह । नारायणोऽपि—'**परिपक्वधीः भवति भृगुः**' [पृ० ८] इत्याह ।

यत्तु दशपादीवृत्तिकृता '**भ्रष्टाद्रेतस उत्पन्नः**' उत्युक्तं तत्पौराणिककथास्मरणमूलमप्रमाणमेव । एवं हि क्वचित्पठ्यते—

**यज्ञे देवस्य वितते महतो वरुणस्य हि ।**
ब्रह्मणोऽप्सरसं दृष्ट्वा रेतश्चस्कन्द कर्हिचित् ।
ततोऽर्चिषोऽभूद्भगवान् भृगुः...... ॥ इति ॥

नहि सदसद्विवेकिनां परमविदुषां जितेन्द्रियाणामूर्ध्वरेतसां ब्रह्मादीनां महर्षीणामेवंभूतः कदाचरः सम्भावयितुं शक्यते । नोचेत् सदाचारो धर्मे प्रमाणमेव न स्यात् ।

५. अ० ७।३।५३ ।  ६. नास्ति ग. घ. ।

## ऊर्णोतेर्णु लोपश्च ॥११५॥ (पं० उ० १।३०)

ऊर्णोतेर्धातोः कुः प्रत्ययो भवति णुलोपश्च[1]। ऊर्णुञ् आच्छादने[2] अ०। ऊर्णोतीति ऊरुः—शरीराङ्गम्। कर्त्ता। ऊर्णूयते वा ऊरुः। कर्म॥

## महति ह्रस्वश्च ॥११६॥ (पं० उ० १।३१)

महत्यर्थे[3] गम्यमान ऊर्णोतेर्धातोः कुः प्रत्ययो भवति णुलोपश्च भवति ह्रस्वश्च। ऊर्णुञ् आच्छादने[2] अ०। ऊर्णोतीति उरु—विस्तीर्णम्। कर्त्ता। ऊर्णवनं वा उरु। भावः।

## श्लिषेः कश्च ॥११७॥ (पं० उ० १।३२)

श्लिषेर्धातोः कुः प्रत्ययो भवति कश्चान्तादेशः। श्लिष आलिङ्गने दै०। श्लिष्यतीति श्लिकुः—सेवकः[4]। कर्त्ता॥

## आङ्परयोः खनिशॄभ्यां डिच्च ॥११८॥ (पं० उ०१।३३)

आङ्पर इत्येत[5]योरुपपदयोर्यथासंख्यं खनि शॄ इत्येताभ्यां कुः प्रत्ययो भवति डिच्च। खनु अवदारणे भ्वा० आङ्पूर्वः। आखनतीति आखुः—मूषकः। कर्त्ता। शॄ हिंसायां क्र्या० परपूर्वः। परान् शृणातीति परशुः—[6] आयुधम्। कर्त्ता॥

## हरिमितयोर्द्रुवः ॥११९॥ (पं० उ० १।३४)

हरि मित[7] इत्येतयोरुपपदयोर्द्रु इत्येतस्माद्धातोः कुः प्रत्ययो भवति डिच्च। द्रु गतौ भ्वा० हरिशब्दपूर्वः। हरिभिर्द्रूयत इति हरिद्रुः[8] वृक्षः। कर्म। हरयोऽस्मिन् द्रवन्तीति वा हरिद्रुः। अधिकरणम्। मित[7]शब्दपूर्वः। मितं[7] द्रवतीति मितद्रुः[8]—समुद्रः। कर्त्ता॥

---

१. 'णुकारस्य च लोपः' इति क.। 'नानर्थके अलोन्त्यविधिः' इति सर्वस्य णु शब्दस्य लोपो भवति।

२. 'छादने' इति क.। ३. 'महदर्थे' इति क.।

४. 'सेवकः' नास्ति ग. घ.। ५. 'आङ्परयोः' इति ग. घ.।

६. श्वेतवनवासी तु परा पूर्वाच्छृणातेर्निरवोचत्। तद्यथा—'पराश्शृणातीति···। ङ्याापोः संज्ञाछन्दसोर्बहुलम् [६।३।६३] इति बहुलवचनादन्त्योऽपि ह्रस्वः' इति [पृ० १८]। ७. 'सित' इति क.। ८. 'वृक्षः' इत्यधिकं पूर्वं क.।

बहुलवचनादन्यत्रापि[1] कुः प्रत्ययो दृश्यते[2]। शत[मनेक]धा[3] द्रवतीति शतद्रुः[4]—नदी[5]। कर्त्ता॥

## खरुशङ्कुपीयुनीलङ्गुलिगु[6] ॥१२०॥ (पं० उ० १।३६)

एते शब्दाः कुप्रत्ययान्ता [7]निपात्यन्ते निरुद्धलोपागमवर्णविकाराः[8]। खनु अवदारणे भ्वा०। अस्य रेफादेशो [9]निपात्यते। खनतीति **खरुः**—क्रूरः, मूर्खश्च[10]। खोर्ऋ गतिप्रतिघाते भ्वा०। अस्योपधाया अत्वं निपात्यते। खोरतीति **खरुः**। कर्त्ता। शकि शङ्कायाम् भ्वा०। शङ्कतेऽस्माज्जना इति **शङ्कुः**—बाणः, कीलको वा। अपादानम्। शक्लृ शक्तौ स्वा०। अस्य नुम् निपात्यते। शक्यतेऽनेन खनितुमिति **शङ्कुः**। करणम्। पा पाने भ्वा०। अस्य ईत्वं निपात्यते युडागमश्च। पिबति तेज इति **पीयुः**-सुवर्णम्। कर्त्ता। गम्लृ गतौ भ्वा०[11]। अस्य नीलशब्द उपपदे टिलोपो निपात्यते उपपदस्य च नुमागमः[12]। नीलं गच्छतीति **नीलङ्गुः**[13]—कृमिजातिः शृगालो वा। कर्त्ता। लगे सङ्गे भ्वा०। अस्यो-

---

१. 'अन्यभ्योऽपि' इति ग. घ.। 'अन्यतोऽपि' इति क.।

२. 'भवति' इति क.। ३. 'शतं' इति क.। 'शतेषु इति ख.।

४. शतद्रुशब्दनिर्वचनाय पञ्चपाद्यां **'शते च'** [पं० उ० १।३५] इति सूत्रान्तरं दृश्यते। महाभारतेऽपि—

**'शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता'**। इति [आदि० प० १७९।९]।

५. 'नदः' इति क.।

६. नारायणः '०लिग्वङ्गुपङ्गुहिङ्ग्वंशवः' इति [पृ० ९] अधिकं पपाठ।

श्वेतवनवासी तु **'अविभक्तिकनिर्देशोऽपरिसमाप्तत्वज्ञापनाय। तेन हन्तेरुपधाया इत्वं गुगागमः कुप्रत्ययश्च। हन्तीति हिङ्गुः रामठः। तथा गड सेचने गड्डुः वदनैकदेशः'** [पृ० १९] इत्याह। ७. नास्ति क.।

८. 'निरुद्ध...विकाराः' इति नास्ति ख. ग. घ.।

९. 'रेफः' इति ग.घ.। 'रेफोऽन्त्यस्य' इति क.।

१०. **'खरुशब्दस्य क्रूरो मूर्ख इत्यर्थद्वयं दशपादीवृत्त्यनुसारेणोक्तम्'** इति मनोरमा [पृ० ७५१]। ११ नास्ति क.।

१२. 'चामुमागमः' इति ख.। 'नकारागमः' इति क.।

१३. **'केचित्तु नीलशब्द उपपदे गमेः कुप्रत्यये टिलोपः पूर्वपदस्य मुम् पाक्षिकः'**

पधाया इत्वं निपात्यते। श्लिषेर्वा[1] शकारलोपो[2] गश्चान्तादेशः। लगतीति **लिगुः**-मूर्खः। श्लिष आलिङ्गने[3]। श्लिष्यतीति वा **लिगुः**। कर्त्ता॥

**मृगय्वादयश्च**[4] ॥१२१॥ (पं० उ० १।३७)

मृगयु इत्येवमादयः शब्दा निपात्यन्ते कुप्रत्यये निरुद्धाः[5]। या प्रापणे आ० मृगशब्द उपपदे[6]। मृगं यातीति **मृगयुः**-लुब्धकः। कर्त्ता। अस्यैव अश्मानं यातीति **अश्मयुः**[7]- जिह्मः। कर्त्ता। अस्यैव भूशब्द उपपदे कुप्रत्ययस्य अण्युजादेशो धातुलोपो रुडा[8]गमश्च निपात्यते ह्रस्वत्वमुपपदस्य च। भुवं यातीति **भुरण्युः**-अग्निः। कर्त्ता। अस्यैव[9] चरशब्द[10] उपपदे प्रत्ययस्य अण्युजादेशो निपात्यते धातुलोप उपपदान्तलोपश्च। चरं यातीति **चरण्युः**-[11] वायुः[12]। कर्त्ता॥

**सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्** ॥१२२॥ (पं० उ० १।६५)

एभ्यो धातुभ्यस्तुन् प्रत्ययो भवति। षिञ् बन्धने सौ०। सिन्वन्ति तमिति **सेतुः**-नदीसंक्रमः। कर्म तनु[13] विस्तारे ता०। तन्यत इति **तन्तुः**-सूत्रम्।

---

दीर्घश्च निपात्यत इत्याहुः।...नीलरपि नीलङ्गुः। इति विश्वः' इति व्युत्पत्तिसारे [पृ० १३] सुबोधिन्यां [सि० चं० टी० भा०२, पृ० २६२] च।

१. 'श्लिषेर्धातोः' इति क.। २. 'निपात्यते' इत्यधिकं क.।

३. श्लिष आलिङ्गने' इति नास्ति ख. ग. घ.।

४. सूत्रोऽयं नास्ति ज.। ५. 'शब्दाः कुप्रत्ययान्ता निपात्यन्ते' इति ख. ग. घ.। ६. 'मृगशब्द उपपदे' इति नास्ति ख. ग. घ.।

७. 'अश्वेन अश्वं वा यातीति अश्वयुः' इति ग. घ.। 'अश्माद्यातीति अश्मयुः' इति प्रक्रियाकौमुदीटीकाकृत् [भा० २, पृ० ६११]।

८.'रुगागमः' इति ख.। 'नुमागमः' इति ग. घ.। ९. नास्ति क.।

१०. 'वरे शब्दे' इति ग. घ. ११. 'वरे यातीति वरेण्युः' इति ग. घ.। प्रक्रियाकौमुदीटीकाकृदपि—'वरे यातीति वरेण्युः आदित्यमरुतौ' इत्याह [भा० २ पृ० ६११]। ख. पुस्तके चरण्युशब्दव्युत्पत्तिर्भुरण्युशब्दात्प्राग्वर्तते।

१२. 'अन्ये कमण्डल्वादयोऽप्यत्रैव द्रष्टव्या.' इति श्वेतवनवासी [पृ० २०]। 'एवं निघण्टुपलाण्डुकर्करेटुकरेटुपेरुडमरुप्रभृतयोऽप्यत्रैव द्रष्टव्या आकृतिगणत्वात्' इत्युज्ज्वलदत्तः [पृ० १८]।

१३. 'सनोतीति सेतुः। तनु' इति ख.।

कर्म । गम्लृ गतौ भ्वा०[1] । गच्छतीति गन्तुः[2]--पथिकः । कर्त्ता । मसी परिणामे दि०। मस्यतेऽनेनेति[3] मस्तु—दध्यवयवः । करणम् । षच सेचने भ्वा० । सच्यन्तेऽमीभिः[4] प्राणा इति सक्तवः[5]—यवविकाराः । करणम्[6] । अव रक्षणादिषु भ्वा० । अवतीति ओतुः—बिडालः । कर्त्ता । बाहुलकादूठ्[7] । डुधाञ् धारण-

---

१. नास्ति क. । २. 'आङ्पूर्वादागन्तुः अतिथिः' इति श्वेतवनवासी [पृ० २६] ।
३. 'अनेन दधीति' इति क. । ४. 'एभिः' इति ग. घ ।
५. 'षद षदने भ्वा० । सद्यन्तेऽमीभिः प्राणा इति सक्तवः । बहुलवचनादस्य कत्वम्' इति क. ।

अत्राह श्वेतवनवासी— 'अन्यस्त्वाह "कसतेः सक्तुः" इति । तथा च भाष्यम्—सचतेः सक्तुः, कसतेर्वा विपरीताद् विकसितो भवतीति क्वचापि [पस्पशाह्निके] अस्मादपि भाष्यात् कर्मणि भूते तुन् प्रत्यय इति दृश्यते' इति [पृ० ३०] ।

६. नास्ति क. ।

७. 'बाहुलकात् क्वचिदूठ् भवति' इति ख. । 'बहुलवचनादोठ्भवति' इति क. । ज्वरत्वर [६।४।२०] इत्यूठ् बाहुलकात् अक्ङित्त्वादप्राप्तेः' इत्युज्ज्वलदत्तः [पृ० २६]।

अत्राह श्वेतवनवासी—'ज्वरत्वर [६।४।२०] इत्यादौ सूत्रे क्ङिद्ग्रहणमनुवर्तते; कथमत्र ऊठ् भवति ? उच्यते—क्ङिद्ग्रहणं केचिन्नानुवर्तयन्ति । तथा च वृत्तावुक्तम्—केचिदत्र क्ङितीति नानुवर्तयन्ति । कथं द्युभ्यां द्युभिरिति ? ऊठि कृते दिव उत् [६।१।१३१] इति तपरत्वान्मात्राकालो भविष्यति [का० वृ० ६।४।१९] इति' इति [पृ० ३०] ।

इदमत्रावधेयम्—यदि 'च्छ्वोः शूड्' [६।४।१९] इत्यत्र क्ङिद्ग्रहणं नानुवर्तते तर्हि दिविप्रभृतीनां वकारान्तानां यङ्लुगन्तानां तिप्सिपोरीडभावपक्ष ऊठि सति देद्योति देद्योषि इत्येवं रूपाणि प्राप्नुवन्ति । अनुवृत्तौ तु ऊठोऽभावे वलि वलोपे देदेति देदेषीति ।

तत्र त्वेष निर्णयः—वकारान्तानामूठ्भाविनां भाषायां यङ्लुगेव नास्ति 'च्छ्वोः शूड्' इति सूत्रस्थभाष्यस्वारस्यात् । तदुक्तं माधवेन—"वकारान्तानामूठ्भाविनां भाषायां यङ्लुङ् नास्ति । च्छ्वोः शूड्' इत्यत्र क्ङिद्ग्रहणानुवृत्त्यननुवृत्ती प्रस्तुत्य 'तत्र त्वेतावानेव विशेषः—अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यम्' इति भाष्य [६।४।१९] उक्तत्वात् । छः षत्वमित्यक्ङिति झलादौ षत्वार्थं 'व्रश्चभ्रस्ज' [८।२।३६] इत्यत्र छग्रहणं कर्त्तव्यं, क्ङिदधिकाराभावे तु झलादिमात्रे छः षत्वं शकारान्तत्वादेव सिद्धमित्यर्थः । यदि च वकारान्तानामपि यङ्लुक् स्यात् तत्रापि क्ङिद्ग्रहणानुवृत्तौ ऊठा न भाव्यम्, अन्यदा

पोषणयोः[1] जौ० । दधात्यर्थं धीयते वाऽस्मिन्नर्थ इति **धातुः**—शब्दप्रकृतिः, पर्वतनिस्रावो वा[2]। कर्त्ता अधिकरणं च। क्रुश आह्वाने रोदने च भौ०। क्रोशत्यत्यर्थमिति **क्रोष्टा**—शृगालः । कर्त्ता[3] ॥

## पः किच्च[4] ॥१२३॥ (पं० उ० १।६६)

पा इत्येतस्माद् धातोस्तुन् प्रत्ययो भवति किच्च । पा पाने भौ०, पा रक्षणे आ०, पै ओवै शोषणे भौ०। पिबति पाति पायति वा **पातुः**—आदित्यः, चक्षुश्च। कर्त्ता ॥

## अर्त्तेश्च तुः[5] ॥१२४॥ (पं० उ० १।६८)

अर्त्तेर्धातोस्तुः प्रत्ययो भवति किच्च। ऋ गतौ भौ० । ऋच्छत्यर्यते वा **ऋतुः**—कालो ग्रीष्मादिः, स्त्रीणां च पुष्पकालः। कर्त्ता कर्म च ॥

## कमिमनिजनिगाभापायाहिभ्यश्च ॥१२५॥ (पं० उ० १।६९)

एभ्यो धातुभ्यस्तुः प्रत्ययो भवति । कमु कान्तौ भौ० णिजन्तः। कामयते काम्यते वा **कन्तुः**[6]—कामी। कर्त्ता कर्म च[7]। मन ज्ञाने दै०, मनु अव-

---

तु भाष्यमिति विशेषस्य विद्यमानत्वात् 'तत्रैतावान् विशेषः' इत्यादि भाष्यं कथं संगच्छेत। स्पष्टं चैतत्तत्र कैयटे" इति [तेवृ देवृ देवने इत्यत्र पृ० १०१]।

१. 'दानधारणयोः' इति क.।

२. 'दधात्यर्थं धीयते शोभाऽस्मिन्निति वा धातुः-शब्दप्रकृतिर्भूप्रभृतिः पर्वतनिसारो वा' इति खपाठः। ३. नास्ति क.। ४. सूत्रोऽयं नास्ति छ.।

५. '०तुः' नास्ति छ.।

६. अत्राहोज्ज्वलदत्तः—"कमि ग्रहणं प्रपञ्चार्थम्। 'अर्जिदृशि' [द० उ० १।११२] इत्यादिना कुप्रत्यये तुकि सिद्धत्वात्" इति [पृ० २६]।

श्वेतवनवासी तु—'कन्तुशब्दः पञ्चपाद्यामेव व्युत्पादितः, 'अर्जिदृशिकम्यमिपंसिबाधाम्' [पं० उ० १।२७।। द० उ० १।११२ इति, किमर्थं पुनरिदं व्युत्पाद्यते ? स्वरभेदोऽप्यनयोर्नास्ति। तथाहि—तत्र कुप्रत्ययः कृतः प्रत्ययस्वरेण स उदात्तः। अयमपि। अत्रोच्यते—उणादीनां संज्ञाशब्दत्वाद् बहुधा व्युत्पादनमिति केचित्। संज्ञाशब्देषु व्युत्पत्तेरनियमः, अर्थानुगमाभावात्। तथा च इन्द्रियशब्दोऽप्यनियमेन निरुक्तं भगवता पाणिनिना 'इन्द्रियमिन्द्रलिङ्ग' [५।२।९३] इत्यादिसूत्रेण। अन्ये तु प्रपञ्चार्थं पुनर्व्युत्पादनमित्याहुः। अपरे तत्र सूत्रे 'धान्ये नित्' [द० उ० १।९४] इत्यनुवर्तयन्ति" [पृ० ३३] इत्याह।

७. 'कमिमनि········कर्म च' इति नास्ति ग.।

बोधने ता० । मन्यते मनुते वा मन्तुः—कविः[1] पर्यायनाम[2] । कर्त्ता । जनी प्रादुर्भावे दै०, जन जनने जौ०[3] । जायते जजन्ति[4] जन्यते वा जन्तुः—प्राणी । कर्त्ता कर्म च । गै० शब्दे भौ० । गायतीति गातुः—गायकः[5] । कर्त्ता । भा दीप्तौ ग्रा० । भातीति भातुः—प्रकाशः[6] । कर्त्ता । पै० शोषणे[7] भौ०, पा रक्षणे ग्रा० । पायति[8] पीयते पातीति वा पातुः—रक्षिता । कर्त्ता कर्म च[9] । या प्रापणे ग्रा० । यातीति यातुः—पावकः[10] कर्त्ता । हि गतौ सौ० । हिनोतीति हेतुः—निमित्तम् । कर्त्ता । हायतेऽनेनार्थाद् इति हेतुः । करणम् ॥

## चायः की[11] च ॥१२६॥ (पं० उ० १।७०)

चायो धातोस्तुः प्रत्ययो भवति की चास्यादेशः । चायृ पूजानिशामनयोः भौ० । चाय्यत इति केतुः—ध्वजः, ग्रहश्च[12] । कर्म ॥

## आप्नोतेर्ह्रस्वश्च ॥१२७॥ (पं० उ० १।७१)

आप्नोतेर्धातोस्तुः प्रत्ययो भवति ह्रस्वश्च[13] । आप्लृ व्याप्तौ सौ० । आप्नोतीति अप्तुः—यज्ञियोऽग्निः । कर्त्ता ।

बहुलवचनादन्यतोऽपि भवति । अम रोगे भौ०[14] । अमतीति अन्तुः—रक्षिता[15] ॥

---

१. 'मनः' इति क. ।

२. 'परयथा नाम' इति ख. । 'पर्यागतो नाग' इति ग. घ. ।

३. 'चौ०' इति क. । ४. नास्ति क. ।

५. 'भौ०, गा स्तुतौ छन्दसि जौ० । गायति जागर्तीति वा गातुः-उद्गाता' इति क. । ६. 'अग्निर्विद्वांश्च' इति क. । ७. 'पा पाने' इति क. ।

८. 'पायति' नास्ति क. ।

९. पातुशब्दनिर्वचनग्रन्थो यातुशब्दानन्तरमुपलभ्यते क. पुस्तके ।

१०. 'मनः' इति क. ।

११. 'अन्ये तु 'चायः कि च' इति ह्रस्वान्तमेव पठन्ति' इति श्वेतवनवासी [पृ० ३३] । १२. नास्ति क. ।

१३. 'अचश्च [१।२।२८] इत्यज्ग्रहणमुपस्थितं धातुना विशेष्यते' इति श्वेतवनवासी [पृ० ३४] ।

१४. 'भौ०' नास्ति क. । १५. 'कर्त्ता' इत्यधिकं क. ।

वसेस्तुन् ॥१२८॥ (पं० उ० १।७२)

वसेर्धातोस्तुन् प्रत्ययो भवति। वस निवासे भ्वौ०। वसन्त्यस्मिन्नर्थविशेषा[1] इति वस्तुः—प्रकारविशेषः[2]। अधिकरणम् ॥

अगारे णिच्च ॥१२९॥ (पं० उ० १।७३)

अगारे गम्यमाने वसेर्धातोस्तुन् प्रत्ययो भवति णिच्च। वस निवासे भ्वौ०। वसन्त्यस्मिन्निति[3] वास्तुः—गृहम्[4]। अधिकरणम् ॥

कृञः क्तुः ॥१३०॥ (पं० उ० १।७४)

कृञो धातोः क्तुः प्रत्ययो भवति। डुकृञ् करणे ता०[5]। क्रियतेऽसौ धर्मार्थिभिरिति क्रतुः—यज्ञः। कर्म[6] ॥

एधिवह्योश्चतुः[7] ॥१३१॥ (पं० उ० १।७५)

एधि वहि इत्येताभ्यां धातुभ्यां चतुः प्रत्ययो भवति। चः स्वरार्थः। एध वृद्धौ भ्वौ०।[8] एधत इति एधतुः—पुरुषः। कर्त्ता। वह प्रापणे भ्वौ०। वहतीति वहतुः[9]—अग्निः, अनड्वांश्च। कर्त्ता ॥

जीवेरातुः ॥१३२॥ (पं० उ० १।७६)

जीवेर्धातोरातुः प्रत्ययो भवति। जीव प्राणधारणे भ्वौ०[10]। जीवन्त्यनेन

---

१. 'वसति तस्मिन्नर्थविशेषः' इति ख.। '०विशेषाः' इति ग. घ.।

२. 'प्रकाशविशेषः' इति ग. घ.।

३. 'वसन्ति तस्मिन् देवताः' इति ग. घ.। 'वसन्त्यस्मिन् देवता इति' इति क.।

४. 'गेहं' इति ग. घ.। ५. 'ता' नास्ति क.।

६. 'बाहुलकात् ला आदाने अतोऽपि भवति लतुः। गर्गादि[४।१।१०५]त्वात् लातव्यः इत्युपाध्यायसर्वस्वम्' इत्युज्ज्वलदत्तः [पृ० ३०]।

७. 'एधिवहोश्चतुः' इति क. च. ज.।

८. 'चः स्वरार्थः'। एध वृद्धौ भ्वौ० नास्ति क.।

९. अत्राह श्वेतवनवासी—"चित्प्रत्ययान्तस्य समुदायस्यान्तोदात्तत्वमिष्यते, 'चितः सप्रकृतेर्बह्वकजर्थम्' [भाष्ये ६।१।१६३] इति वचनात्। तथा च वेदेऽन्तोदात्तस्य वहतुशब्दस्य प्रयोगो दृश्यते–'वहतुं धक्ष्मा यन्ति' [ऋ० १०।८५] इति। एवं च कृत्वा ये 'एधिवह्योरतुः' इति पठन्ति तेऽनादरणीयाः" इति [पृ० ३५]।

१०. 'भ्वौ०' नास्ति क.।

प्राणिन इति **जीवातुः**—जीवनौषधम्, अन्नं च[1]। करणम्॥

**कृहृभ्यामेणुः[2] ॥१३३॥ (पं० उ० २।१)**

आभ्यां धातुभ्यामेणुः प्रत्ययो भवति। डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् करणे भौ०। करोति कृणोति करतोति[3] वा **करेणुः**[4]—करिणी[5]। कर्त्ता। हृञ् हरणे भौ०, हृ प्रसह्यकरणे जौ०। हरति जिहर्तीति वा **हरेणुः**—गन्धद्रव्यम्। कर्त्ता।

बाहुलकादन्यतोऽपि[6] भवति। गमेण्वादीनां प्रसिद्ध्यर्थं कृतणत्वस्य प्रत्ययस्य निर्देशः। गम्लृ सृप्लृ गतौ भौ०। गच्छतीति **गमेणुः**—पन्थाः[7], अनादितश्चायं पथि वर्तमानः। कर्त्ता। डुपचष् पाके भौ०। पचतीति **पचेणुः**—पाचकः। कर्त्ता। यज देवपूजादिषु भौ०। यजतीति **यजेणुः**—याजकः, ऋत्विक्। कर्त्ता[8]॥

**यजिमनिशुन्धि[9]दसिजनिभ्यो युच् ॥१३४॥ (पं० उ० ३।२०)**

एभ्यो धातुभ्यो युच् प्रत्ययो भवति। यज देवपूजादिषु भौ०। यजतीति **यज्युः**—अध्वर्युः। कर्त्ता। मन ज्ञाने दै०, मनु अवबोधने ता०[10]। मन्यते मनुते वा **मन्युः**—अन्तर्गतः क्रोधः। कर्त्ता। शुन्ध[11] शुद्धौ भौ०। शुन्धतीति **शुन्ध्युः**[12]—अग्निः[13]। कर्त्ता। दसु उपक्षये दै०। दस्यतीति **दस्युः** तस्करः। कर्त्ता। जनी

---

१. 'जीव्री वनौषधमन्नं वा' इति ख.। 'ओषधमन्नं वा' इति क.। '**अन्नं जीवनौषधं च**' इति प्रक्रियाकौमुदीटीकाकारः [भा० २, पृ० ६११]।

२. 'कृहृञ्भ्यां' इति ख.। ३. 'कृणुते करते' इति ग. घ.।

४. '**स्त्रियां करेणूरित्यपि दृश्यते**' इत्युज्ज्वलदत्तः [पृ० ६१]।

५. 'हस्तिनी' इति क. ख.। ६. 'अन्यत्रापि' इति ख.।

७. प्रक्रियाकौमुदीटीकायां '**पान्थः**' इत्युपलभ्यते स एव चात्र सम्यक्। लेखकप्रमादादत्र पाठो भ्रष्टः।

८. 'गमेण्वादीनां .....कर्त्ता' इत्यस्य स्थाने 'गमेनुप्रभृतीनां सिद्धिर्भवति' इत्येव क. पाठः। ९. '**शुधि**' इति क. ख. ग. घ. ज.।

१०. 'मनु अवबोधने ता०' इति नास्ति ख. ग. घ.।

११. 'शुध' इति सार्वत्रिकः पाठः।

१२. 'शुध्यतीति शुध्युः' इति ख. ग. घ। 'स हि शुचिश्शतपत्रस्सशुन्ध्यूः' [तै० ब्रा० २।५।५।४] '**शुन्ध्यूरसि**' [तै०सं० १।३।३।१]; [यजु० ५।३२] इति दीर्घान्तोऽप्युपलभ्यते। १३. 'अग्निः' नास्ति क.।

प्रादुर्भावे दै०। जायत इति **जन्युः**—भूतग्रामश्च[1]। कर्त्ता।

बाहुलकादादेशानित्यत्वाच्च[2] योरनादेशो न भवति[3]॥

## भुजिमृङ्भ्यां युक्त्युकौ ॥१३५॥ (पं० उ०३।२१)

आभ्यां धातुभ्यां यथासंख्यं युकत्युक् इत्येतौ प्रत्ययौ भवतः। भुज पालनाभ्यवहारयोः रौ०। भोजनं **भुज्युः**—भोगः[4]। भावः। मृङ् प्राणत्यागे तौ०। मरणं[5] **मृत्युः**—प्राणैर्वियोगः। भावः॥

## सर्त्तेरयुः ॥१३६॥ (पं० उ० ३।२२)

सर्त्तेर्धातोरयुः प्रत्ययो भवति। सृ गतौ भौ० जौ०। सरति सिसर्त्ति वा[6] **सरयुः**[7]—नदी, वायुर्वा। कर्त्ता॥

## क्न्युः[8] क्षिपेश्च ॥१३७॥ (पं० उ० ३।५०)

---

१. समुच्चेतव्यस्याभावादत्र पाठस्त्रुटितो भवेत्।

२. '**आदेशानित्यत्वाच्च**' इति नास्ति क.।

३. वस्तुतस्तु यकारस्य निरनुनासिकत्वात् '**युवोरनाकौ**' [७।१।१] इत्यनादेशो न भवति। तदुक्तं भाष्ये—'**सिद्धन्तु युवोरनुनासिकत्वात्**' [म० भा० ७।१।१] इति।

४. 'नाग' इति घ.। ५. 'म्रियन्ते जना अनेनेति' इति ग. व.।

६. 'भौ० जौ०। सिसर्त्ति धावतीति' इति क.। अत्र 'ससर्त्ति' इति शुद्धः पाठः।

७. अत्राह श्वेतवनवासी—'**अप्राणिजातेश्च** [४।१।६६ भा० वा०] इत्यूङ् प्रत्ययः। **सरयूः नदीविशेषः**' [पृ० १०४] इति।

माधव [सृधातौ पृ० १७८] नारायणौ [पृ० ५८] '**सरतेरयूः**' इति पठित्वा सरयूः पदं साधयतः।

उज्ज्वलदत्तस्तु '**ऊङुतः** [४।१।६६] इत्यूङि···**सरयूः**·····। **सरतेरयूरिति पारायणे दृश्यते**' इत्याह [पृ० १०६, १०७]।

व्युत्पत्तिसारे [पृ० ७६] सिद्धान्तचन्द्रिकायां [भा० २ पृ०३१७] च '**सरतेरय्वयू**' इति सूत्रं दृश्यते। तेन '**सरयुः सरयूः**' इति द्वे अपि पदे सिध्यतः। व्युत्पत्तिसारकारस्त्वाह—'**अत्र अयु–अयू इति पदच्छेदः। अयू इति सांकेतिकप्रथमा**' [पृ० ७६] इति।

८. '**कण्युच्**' इति ङ.। तत्राग्रिमसूत्रेऽपि 'भवण्युः' पदं साध्यते [प्र० कौ० टी० भा० २) पृ०६१२]।

क्षिपेर्धातोः कन्युः प्रत्ययो भवति। क्षिप् प्रेरणे तौ०। क्षिपति क्षिप्यते वा क्षिपण्युः—वायुः, कालश्च[1]। कर्त्ता कर्म च॥

भुवश्च[2] ॥१३८॥

भुवो धातोः कन्युः प्रत्ययो भवति। भू सत्तायां भौ०। भवतीति भुवन्युः—ईश्वरः। कर्त्ता॥

चनुक्[3] नदेश्च[4] ॥१३९॥ (पं० उ० ३।५१)

चनुक्[5] प्रत्ययो भवति नदेः क्षिपेश्च[6]। णद अव्यक्ते शब्दे भौ०। नद-

---

देवराजस्तु 'विपन्यवः' [निघ० ३।१५।१७] इति पदव्याख्यान आह—"विपनेः 'कन्युच् क्षिपेश्च' इत्यत्र प्राक्प्रत्ययनिर्देशस्याधिकविध्यर्थत्वात् कन्युच् प्रत्ययः" इति [पृ० ३४२]।

पञ्चपाद्यां सर्वत्र 'कन्युच्' प्रत्यय एव विधीयते।

इदं चात्रावधेयम्—कन्युप्रत्यये प्रत्ययस्वरेण मध्योदात्ते पदे भवतः। कन्युचि तु चित्त्वादन्तोदात्ते। तत्र पाठशुद्धिः स्वरतोऽध्यवसेया।

१. 'कालश्च' इति नास्ति ख. ग. घ.।

२. पञ्चपाद्यामेतत्सूत्रं नास्ति। तत्र 'भुवो भिच्' (३।४९) इति सूत्राच्चकारेण भूधातुमनुकृष्य भुवन्युपदं साध्यते। तत्क्रमे 'कन्युच् क्षिपेश्च' (३।५०) इत्यत्र चग्रहणं सप्रयोजनं भवति। दशपाद्यां चकारस्य प्रयोजनं मृग्यम्।

३. 'चनुन्' इति ग. घ.। 'चनुट्' इति च.। 'अनुन्' इति क.। 'अनुङ्' इति ङ.।

४. नारायणश्वेतवनवासिनौ 'चनुङ् नुदेश्च' इति पठित्वा नुदनुपदं साधयतः। अन्ये तु 'अनुङ् नदेश्च' इत्येवं पठन्ति। स च 'यदा कृणोषि नदनु' (ऋ० ८।२१।१४) 'मृगा इव क्षिपणोरीषमाणाः' (ऋ० ४।५८।६) इत्यादौ नदनुक्षिपणुपदयोरन्तोदात्तत्वदर्शनादपपाठः।

भोजस्तु—'क्षिपिनदिपदिपतिवाभूभ्यश्चनुक्' (स० क० २।१।७९) इति पठित्वा 'क्षिपनुनदनुपदनुपतनुदनुभुवनु' एतान् शब्दान् साधयति।

५. 'चनुन्' इति ग. घ.।

६. 'नदेर्धातोरनुन् प्रत्ययो भवति' इति क.। अत्र क्षिप्धातोरनुवृत्तिर्न संभवति

तीति नदनुः—मेघः, सिंहो वा । कर्त्ता । क्षिप प्रेरणे तौ० । क्षिपति क्षिप्यते वा क्षिपणुः[1]—बाहुः । कर्त्ता कर्म च ॥

## स्तनिहृषिपुषिगदिमदिघुषिगन्धि[2]मण्डिजनि-नन्दिभ्यो[3] णेरित्नुच् ॥१४०॥ (पं० उ० ३।२९)

एभ्यो धातुभ्य इत्नुच् प्रत्ययो भवति, णेः—ण्यन्तेभ्यः । स्तन शब्दे[4] चौ० ण्यन्तः । स्तनयतीति स्तनयित्नुः—मेघः । कर्त्ता । हृष तुष्टौ दै० । सर्व एव ण्यन्ताः । हर्षयतीति हर्षयित्नुः[5]—आनन्दः । कर्त्ता । पुष पुष्टौ दै० क्रै०[6] । पोषयतीति पोषयित्नुः—भर्त्ता[7] । कर्त्ता । गद व्यक्तायां वाचि भौ० । गदयतीति गदयित्नुः—भ्रमरः, कामश्च । कर्त्ता । मदी हर्षे दै० । मदयतीति मदयित्नुः—मदिरा । कर्त्ता[8] । घुषिर् अविशब्दने[9] भौ० । घोषयतीति घोषयित्नुः—शब्दः । कर्त्ता । गन्ध सेचने[10] चौ० । गन्धयतीति गन्धयित्नुः—बलाहकः[11] । कर्त्ता । मडि भूषायां भौ० । मण्डयतीति मण्डयित्नुः—मण्डयिता । कर्त्ता । जनी प्रादुर्भावे दै० । जनयतीति जनयित्नुः—पिता । कर्त्ता । टुनदि समृद्धौ भौ० । नन्दयतीति नन्दयित्नुः—आनन्दः, प्रमुदितश्च । कर्त्ता[8] ॥

## कृहनिभ्यां क्नुः[12] ॥१४१॥ (पं० उ० ३।३०)

---

'भुवश्च' (१।१३८) इति सूत्रव्यवधानात् । चकारस्यानुक्तसमुच्चायकत्वमूरीकृत्य कथंचित् संग्रहीतुं शक्यते । पञ्चपाद्यां तु 'भुवो झिच् । कन्युच् क्षिपेश्च । चनुङ् नुदेश्च' (३।४९-५१) इत्येवं क्रमेण पाठ उपलभ्यते । तत्रानुवृत्तिसामञ्जस्यं सम्यक् प्रकल्पते ।

१. 'क्षेपणुः' इति ग. घ. ।  २. 'गडि' इति क. ।

३. 'स्तनिदृषिपुषिगदिमदिहृदिभ्यः' इति ङ. । 'घुषिगन्धिमण्डिजनिनन्दिभ्य इति दशपाद्यामधिकं पठितमित्यन्यदेतत्' इति (मनो० पृ० ८०९ । तत्त्व० ५६६) ।

४. 'देवशब्दे' इति क. ।  ५. 'दृषिस्थाने हृषिं पठन्ति । हर्षयित्नुर्हर्षक इत्युदाहरन्ति केचित्' इति प्रसादकारः (प्र० कौ० टी० भा० २ पृ० ६०३) ।

६. 'क्रै०' नास्ति क. ।  ७. 'भर्त्ता' नास्ति क. ।

८. 'कर्त्ता' नास्ति क. ।  ९. 'अविशब्दार्थे' इति क. ।

१०. धातुपाठे 'गन्ध अर्दने' इति पाठः ।

११. 'गडु सेचने भौ० । गडयतीति गडयित्नुः बलम्' इति क. ।

१२. उज्ज्वलदत्तादयः 'क्त्नुः' इत्येवं पठन्ति । नारायणश्वेतवनवासिनौ तु 'क्नुः' इत्येव पठतः । 'क्नुः नलोपश्च' इति क. ।

आभ्यां धातुभ्यां क्नुः प्रत्ययो भवति[1]। डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् करणे भ्वा०। करोति कृणोति करति वा कृणुः—कारुः। कर्त्ता। हन हिंसागत्योः अ०। हन्त्याहारमिति हनुः[2]—वक्त्रैकदेशः। कर्त्ता। बाहुलकान्नलोपः[3]॥

## गमेः सन्वच्च ॥१४२॥ (पं० उ० ३।३१)

गमेर्धातोः क्नुः प्रत्ययो भवति सन्वच्चास्य[4] कार्यं भवति। गम्लृ गतौ भ्वा०। गच्छत्याशिवति जिगनुः[5]—प्राणः, मीनो वा।

---

१. 'हनेर्नलोपश्च' इत्यधिकं क.। २. 'शृस्वृस्निहि' (द० उ० १।६५) इत्यत्र व्युत्पादितो हनुशब्द आद्युदात्तः, इह त्वन्तोदात्तः।

३. 'बाहुलकान्नलोपः' इति नास्ति क.।

अत्राह भट्टोजिदीक्षितः—"दशपादीवृत्तौ तु 'क्नुः' इति तकाररहितं पठित्वा 'कृणुः कर्त्ता हनुर्वक्त्रैकदेशः, बाहुलकान्नलोपः। गमेस्तु जिगनुः' इत्युदाहृतम्। तत्सर्वं प्रामादिकं लक्ष्यविसंवादनात्। तथा च श्रूयते—सुरूपकृत्नुमूतये [ऋ० १।४।१] ज्येष्ठराजं भरे कृत्नुम् (ऋ० ८।१६।३) अयं कृत्नुरभिगृभीतः (ऋ० ८।७९।१) मानो बधाय हत्नवे (ऋ० १।२५।२) मृगं न भीम उपहत्नुमुग्रम् (ऋ० २।३३।११) यो नः सनुत्य उत वा जिगत्नुः (ऋ० २।३०।९) [वेदे तु जिघत्नुपदमस्ति, अत्रास्योद्धरणं विस्मरणमूलकमेव। 'दिव्यां जिगत्नुम्' [ऋ० ६।६७।१७] इत्यत्र जिगत्नुपदमुपलभ्यते 'सं०'] इत्यादि। अत एव हन्तिधातुं विवृण्वता माधवेन 'उपहत्नुः' इत्युदाहृत्य क्त्नोः कित्वादनुनासिकलोप इत्युक्तम्। यत्तु तेनैव सुरूपकृत्नुम् (ऋ० १।४।१) इति मन्त्रे विवृण्वता तकारोपजनश्छान्दस इत्युक्तम्, तद्दशपादीवृत्तिमनुसृत्य, न तु वस्तुस्थितिमनुरुद्ध्येति सहृदयैराकलनीयम्" इति (मनो० पृ० ७७५)। तत्त्वबोधिनीकारोऽत्र शब्दशोऽनुवदति (पृ० ५३९)। भोजोऽपि 'कृणुजिगनु' इत्येतौ शब्दौ साधयति (स० क० २।१।७४,७६)। सायणस्तु 'हत्नवे कृहनिभ्यां क्नुः इति क्नुः प्रत्ययः' धातोर्नकारस्य तकारः' (ऋ० भा० १।२५।२) इत्याह। ४. 'अस्य च सन्वत्, इति क.।

५. 'जिगन्नुः' इति क. ख.।

अत्राह श्वेतवनवासी—"नु प्रत्यये 'अनुदात्तोपदेश' (६।४।३७) इत्यादिनाऽझलादावपि बाहुलकादनुनासिकलोपः" (पृ० १६८) इति।

'होर्ह्रलोपश्च। जह्नुः—मुनिविशेषः' इति भोजः (२।१।७५)। पञ्चपाद्यामपि ३।३६ द्र०।

कर्त्ता[1] ॥

## दाभाभ्यां नुः ॥१४३॥ (पं० उ० ३।३२)

दा भा इत्येताभ्यां नुः प्रत्ययो भवति । डुदाञ् दाने जौ० । दीयत इति **दानुः**—दक्षिणार्थं धनम् । कर्म । भा दीप्तौ अ० । भातीति **भानुः**—आदित्यः । कर्त्ता ॥

**बहुलवचनाच्चित्रादिपूर्वान्नु**[2] प्रत्ययो भवति । चित्रं[3] भातीति **चित्रभानुः**—आदित्यः, अग्निश्च[4] । कर्त्ता । स्वर्भातीति **स्वर्भानुः**—राहुः । कर्त्ता[5] । विश्वं भातीति **विश्वभानुः**—आदित्यः । कर्त्ता ॥

## वचेर्गश्च ॥१४४॥ (पं० उ० ३।३३)

वचेर्धातोर्नुः प्रत्ययो भवति गश्चान्तादेशः । वच परिभाषणे अ०, ब्रूञ् व्यक्तायां वाचि अ० । वक्ति ब्रवीति वा शोभनं[6]मिति **वग्नुः**—वाचकः । कर्त्ता[7] ॥

## धेट[8] इच्च ॥१४५॥ (पं० उ० ३।३४)

धेटो धातोर्नुः प्रत्ययो भवति इच्चा[9]न्तादेशः । धेट् पाने भ्वा० । धयति तामिति **धेनुः**— नवप्रसूता[10] गौः । कर्म ॥

## षूङः[11] किच्च ॥१४६॥ (पं० उ० ३।३५)

षूङ् इत्येतस्माद्धातोर्नुः प्रत्ययो भवति । किच्च । षूङ् प्राणिगर्भविमोचने अ० । सूयत इति **सूनुः**—पुत्रः । कर्म ॥

## स्थो णुः ॥१४७॥ (पं० उ० ३।३७)

---

अत्र बाहुलकाद् हन्तेः क्नुप्रत्यये जिघत्नुपदमपि सिद्ध्यति । तथा च दृश्यते प्रयोगः 'यो नः सनुत्य उत वा जिघत्नुः' (ऋ० २।३०।९) इति ।

१. 'कर्त्ता' नास्ति क. । २. 'चित्रादपि भा इत्येतस्माद् नु' इति क. ।
३. 'चित्रे भातीति' इति ग. व. । ४. 'भानुः' इत्येव ख. ।
५. 'कर्त्ता' नास्ति क. । ६. 'साधु शोभनं' इति क. ।
७. इतोऽग्रे 'वावदूकः कर्त्ता' अधिकं क. । ८. 'ई च' इति क. च. ।
९. 'ई च' इति क. । अत्र तकार उच्चारणार्थस्तेन गुणस्य प्रतिषेधो न भवति ।
१०. 'प्रत्यग्रप्रसूता' इति क. । 'प्रथमप्रसूता' इति ख. । 'धेनुः प्रत्यग्रप्रसूता' इति काशिका (२।१।१३५) । ११. 'सूवः कित्' इति ङ. । 'सुवः' इति क. ।

ष्ठा इत्येतस्मद्धातोर्णुः प्रत्ययो भवति । ष्ठा गतिनिवृत्तौ भौ० । तिष्ठतीति स्थाणुः—ईश्वरः, अचलद्रव्यं च[1] । कर्त्ता ॥

## अजिवृरीभ्यो निच्च ॥१४८॥ (पं० उ० ३।३८)

एभ्यो धातुभ्यो णुः प्रत्ययो भवति निच्च । अज गतिक्षेपणयोः भौ० । अजति वीयते वा[2] वेणुः वं—शः[3] । कर्त्ता कर्म च । वृञ् वरणे सौ० । वृणोति व्रियते वा वर्णुः—देशविशेषः कर्ता कर्म च । रीङ् स्रवणे[4] दै०, री गतिक्षेपणयोः[5] क्रै० । रीयते रिणाति वा रेणुः—पांसुः[6] । कर्त्ता कर्म च ॥

## विषेः किच्च ॥१४९॥ (पं० उ० ३।३९)

विषेर्धातोर्णुः प्रत्ययो भवति किच्च निच्च । विष्लृ व्याप्तौ जौ० । वेवेष्टि कृत्स्नमिति विष्णुः[7]—अधोक्षजः[8] ( ? ) । कर्त्ता ॥

## कुडिकुषिभ्यां काकुः ॥१५०॥ (पं० उ० ३।७४)

आभ्यां धातुभ्यां काकुः प्रत्ययो भवति । कुड इति सौत्रो धातुः । कुडतीति कुडाकुः—अन्त्रम्[10] । कर्त्ता । कुष निष्कर्षे क्रै० । कुष्णातीति कुषाकुः—मूषकः । कर्त्ता ॥

## सर्त्तेर्मुक्[11] च ॥१५१॥ (पं० उ० ३।७५)

सर्त्तेर्धातोः काकुः प्रत्ययो भवति मुक्[11] चागमः । सृ गतौ भौ० । धावत्यत्यर्थ[12] मिति सृमाकुः[13]—मृगजातिः । कर्त्ता ॥

---

१. 'अविचलं च द्रव्यम्' इति क. । २. 'वीयते वा' इति नास्ति ख. ग. घ. ।
३. 'तनुकाष्ठम्' इति क. । ४. 'रक्षणे' इति ग. घ. । धातुपाठे 'रीङ् श्रवणे' इति पाठः । ५. 'गतिरेषणयोः' इति क. । धातुपाठे 'रीङ् गतिरेषणयोः' इति पाठः । ६. 'शंसु' इति ग. घ. ।

७. अत्राहोज्ज्वलदत्तः—'केचित् विश प्रवेशने इत्यस्य ग्रहणमिच्छन्ति । तथा च विष्णुपुराणम्—

यस्माद् विष्णुमयं सर्वं यच्चराचरमुच्यते ।
तस्माद् गीयते धिष्णुः स विशधातोः प्रवेशनात् ॥" इति (पृ० १११) ।

८. नास्ति ङ. । ९. 'कुठि' इति क. ।
१०. 'शुभ्रम्' इति क. । ११. 'दुक्' इति क. । पञ्चपाद्यामप्येवम् ।
१२. 'सरत्यर्थम्' इति ग. घ. । १३. 'सृदाकुः' इति क. ।

## पर्देर्नित् सम्प्रसारणमलोपश्च ॥१५२॥ (पं० उ० ३।७६)

पर्देर्धातोः काकुः प्रत्ययो भवति निच्च सम्प्रसारणं[1] चास्य धातोरलोपश्च[2]। पर्द कुत्सिते शब्दे भ्वौ०। पर्दतोति पृदाकुः—पर्दकः कुत्सितशब्दकृत्[3] सर्पश्च[4]। कर्त्ता ॥[5]

## ह्रियः कुग् रश्च लो वा ॥१५३॥ (पं० उ० ३।८१)

ह्री इत्येतस्माद्धातोः कुक्[6] प्रत्ययो भवति रफस्य च लकारो वा। ह्री लज्जायां जौ०। जिह्रेतोति ह्रीकुः, ह्लीकुः—त्रपुः[7], लज्जावांश्च। कर्त्ता ॥

## क्सुश्चेषेः ॥१५४॥ (पं० उ० ३।१५१)

इषेर्धातोः क्सुः प्रत्ययो भवति। इषु हिंसायां[8] तौ०। इच्छन्ति तमिति इक्षुः—गुडादिप्रकृतिः। कर्म[9] ॥

## अर्त्तेररुः ॥१५५॥ (पं० उ० ४।८३)

अर्त्तेर्धातोररुः प्रत्ययो भवति। ऋ गतौ भ्वौ०। ऋच्छत्यर्यते वा अररुः—आयुधम्। कर्त्ता कर्म [च] ॥

---

१. 'सम्' नास्ति ख. ग. घ. ज.। २. 'च अकारलोपश्च' इति क.। 'अल्लोपः' इति ङ.। ३. 'पर्दकः कुत्सित०' नास्ति क.।

४. 'सर्पश्च' नास्ति ख. ग घ.। ५. ख. पुस्तक इतोऽग्रे 'इकः क्षुट् च। इक् स्मरणे अस्मात् काकुः प्रत्ययो भवति क्षुडागमश्च। अध्येतीति इक्ष्वाकुः—राजा। कर्त्ता।' इत्यधिकः पाठः। च. पुस्तकेऽप्यत्र 'इकः क्षुट् च' इत्यधिकं सूत्रम्।

६. 'कुः' इति ख. ग. घ. च. छ. ज.।

७. 'ह्रकुः, ह्लकुः—त्रपु, जतु' इति क.। 'पुत्रजननी' इति ख.।

८. 'इच्छायां भ्वौ०' इति क.। धातुपाठे 'इषु इच्छायाम्' इति पाठः।

९. अत्राह प्रक्रियाकौमुदीटीकाकारः—'आदौ प्रत्ययोच्चारणादशेरपि। अश्नाति अश्नुते वा अक्षुः—अर्कः। वहेरपि वक्षुर्नटः' इति (भा० २, पृ० ६१३)।

इदमत्रावधेयम्—नारायणश्वेतवनवासिनौ 'इष्यशिभ्यां क्सुः' इति (श्वे० ३।१५१। ना० ३।१५७) पठतः। अन्ये तु 'इषेः क्सुः' इत्येव।

## कुटः कित्[1] ॥१५६॥ (पं० उ० ४।८४)

कुटो धातोररुः प्रत्ययो भवति किच्च[2]। कुट कौटिल्ये तौ०। कुटतीति कुटरुः—मर्कटः[3]। कर्त्ता॥

## मापो रुरी च[4] ॥१५७॥ (पं० उ० ४।११०)

मा पा इत्येताभ्यां धातुभ्यां रुः प्रत्ययो भवति ई[5] चान्तादेशः। मा माने अ०, माङ् माने सौ०[6], माङ् शब्दे जौ०। माति मिनोति[6] [मिमीते] मीयते वा सूर्येन्दुभ्यां मेरुः—सुरगिरिः[7]। [कर्त्ता] कर्म। पा रक्षणे अ०। पा पाने भौ०। पाति पिबति पीयते वा पेरुः—वायुः[8], आदित्यो वा। कर्त्ता कर्म च॥

---

१. 'किच्च' इति ङ.। २. अत्राह श्वेतवनवासी—'कुटादित्वात् ङित्त्वेनैव गुणाभावे सिद्धे तस्यानित्यत्वज्ञापनार्थं पुनः कित्त्वविधानम्। तेन घवित्र (३। २।१८४ इत्रः)मित्यत्र गुणो भवति' इति (पृ० १५७)। कुटधातौ माधवोऽप्येवम् (पृ० ३३४)।

नारायणोऽप्याह—

'कुटेर्ङित्त्वेन सिद्धेऽपि यदयं क्विद्ग्रहः कृतः।
तेन कोटरकोटीराद्युणादौ ज्ञापितो गुणः'॥ इति (पृ० ६७)।

वयं तु ब्रूमः—आतिदेशिकस्य धर्ममात्रस्यानित्यत्वज्ञापनार्थं किद्ग्रहणम्, न कुटादिङित्त्वस्यैव। ज्ञापकान्तरं चात्र 'विदिभिदिच्छिदेः कुरच्' (अ० ३।२।१६२) इत्यत्र प्रकृतस्य घुरच एव कित्त्वे ङित्त्वे वा विधातव्ये प्रत्ययान्तरकरणम्।

उज्ज्वलदत्तस्तु—'कित्प्रयोजनं चिन्त्यम्' इत्याह (पृ० १६२)।

३. 'कर्मठः' इति ख.। ४. 'रीच्च' इति ग. घ.।

५. अत्राह श्वेतवनवासी—"इकारे विधातव्ये ईकारविधानमनर्थकम्। 'इ च' इत्येव वा सूत्रम्" इति (पृ० १६४)।

६. स्वादौ नायं धातुः पठ्यते। विग्रहेऽपि मिनोति इत्येव पाठो वर्तते। तदुभयत्र पाठाशुद्धिः प्रतीयते। यद्वा 'डुमिञ् प्रक्षेपणे सौ०' इति पाठः स्यात्। 'गामादाग्रहणेष्वविशेषः' इति परिभाषया 'मीनातिमिनोति' (६।१।५०) इत्यादिना कृतात्वस्यापि ग्रहणं शक्यते कर्तुम्।

७. 'मा माने‥ …… गिरिः' इत्यस्य स्थाने 'मा माने अ०, माङ् माने शब्दे च जौ०। मीयते सूर्येन्दुभ्यामिति मेरुः सुरपर्वतः' इति क. पाठः।

८. 'पायुः' इति ग. घ.। 'आदित्यो वायुर्वा' इति क.।

## जत्र्वादयश्च ॥१५८॥ (पं० उ० ४।१११)

जत्रु इत्यादयः[1] शब्दा निपात्यन्ते रुप्रत्यये निरुद्धाः[2]। जनी प्रादुर्भावे दै०, जन जनने जौ०। अस्य तकारोऽन्त्यस्य निपात्यते। जायते जजन्ति जन्यते वा जत्रुः—प्राणिग्रीवाया अधःप्रदेशः। कर्त्ता कर्म च। शॄ हिंसायां क्र्य०। शृणातेरकारोऽन्त्यस्य निपात्यते तकारश्चागमः[3]। शृणातीति शत्रुः—अरिः[4]। कर्त्ता[5]। अस्यैव इकारो गश्च निपात्यते। शृणातीति शिग्रुः—वृक्षः[6]। कर्त्ता। ऋ गतौ भ्वा०, ऋ सृ गतौ जौ०[7]। अर्त्तेः कृतगुणस्य तत्वं निपात्यते[8]। ऋच्छति इयर्त्तीति अत्रुः[9]—क्षुद्रजन्तुः। कर्त्ता। [हन हिंसागत्योः आ०]। हन्तेस्तकारोऽन्त्यस्य निपात्यते। हन्तीति हत्रुः—हिंस्रः कर्त्ता[10]॥

## रुशातिभ्यां[11] क्रुन् ॥१५९॥ (पं० उ० ४।११२)

आभ्यां धातुभ्यां क्रुन प्रत्ययो भवति। रु शब्दे अ०। रौति रूयते वा रुरुः—मृगः। कर्त्ता कर्म च। शदॢ शातने भ्वा० ण्यन्तः[12]। 'शदेरगतौ तः' [अ० ७।३।४२] इति तकारः। 'बहुलमन्यत्रापि संज्ञाछन्दसोः' [द० उ० ८।४०] इति वचनाण्णिचो[13] लुक्। 'लुग्लोपे न प्रत्ययकृतम्[14]' इति वचनाद्वृद्ध्यभावः। शातयति शात्यते वा शत्रुः[15]—रिपुः। कर्त्ता कर्म च॥

---

१. 'इत्येवमाद्याः' इति क.। २. 'निरूढाः' इति ख. ग. घ.।

३. रुप्रत्यये गुणोऽन्त्यस्य तत्वं निपात्यते। ४. 'अरिः' नास्ति ग. घ.। क. पुस्तके 'अरिः' स्थाने 'मर्मवित्' इति पाठः। ५. 'कर्म च' इत्यधिकम् ग. घ.।

६. 'अवकाशः' इति क.। ७. 'ऋ गतौ······जौ०' इति नास्ति क. ख.।

८. 'अर्त्तेस्तकारोऽन्त्यस्य निपात्यते' इति क.।

'अर्त्तेः प्रत्ययस्य तकारागमो निपात्यते' इति ख.।

९. 'अर्त्तीति अत्रुः' इति क. ख.। १०. 'हिंस्रः कर्त्ता' नास्ति क.।

११. 'रुशदिभ्यां' इति ख. ग. घ. च. छ. ज.।

१२. 'णिजन्तः' इति क. ख.। १३. 'कारितलुक्' इति क.। कारित इति णिचः पूर्वाचार्यसंज्ञा। १४. 'न लुमताङ्गस्य' (अ० १।१।६३) इति सूत्रेण। यद्वा पूर्वाचार्यसूत्रमेतत्स्यात्। १५. 'रुशतिभ्यां' इत्येवं सूत्रं पठित्वा 'शतिः सौत्रः' इति नारायण(पृ० १०२)श्वेतवनवासिनो (पृ० १६४) पठतः।

भट्टोजिदीक्षितस्तु 'रुशातिभ्यां' इति पठित्वा 'प्रज्ञादौ पाठाद्ध्रस्वत्वम्' इत्याह। उज्ज्वलदत्तोऽप्येवम्।

## तनोतेर्डउः सन्वच्च ॥१६०॥ (पं० उ० ५।७२)

तनोतेर्धातोर्डउः प्रत्ययो भवति सन्वच्च[1]। तनु विस्तारे ता०। तनोति पिष्टद्रव्याणीति **तितउः**[2]—चालनी। कर्त्ता[3]॥

## श्मनि श्रयतेडुन् ॥१६१॥ (पं० उ० ५।३०)

श्मन्युपपदे श्रयतेर्डुन् प्रत्ययो भवति। श्रिञ् सेवायाम् भ्वा०। श्मनि श्रयति[4] **श्मश्रुः**[5]—मुखजो[6] रोमसंघातः। कर्त्ता॥

## अश्र्वादयश्च ॥१६२॥ (पं० उ० ५।३१)

अश्रु इत्येवमादयः शब्दा निपात्यन्ते डुन् प्रत्यये निरुद्धाः। श्रिञ् सेवायाम् भ्वा० नञ्पूर्वः। न श्रयति न श्रीयते वा सत्त्ववद्भिर्जनैरिति **अश्रु**—शोकानन्दसमुत्पन्नं नेत्रजलम्[7]। कर्त्ता कर्म च। अशू व्याप्तौ स्वा०, अश भोजने क्र्या०। अश्नुते चक्षुरश्नाति वा **अश्रुः**। अनयोरुगागमः। कर्त्ता। स्रु

---

वस्तुतस्तु णिचो लुकि वृद्धिवत् तकारादेशोऽपि न प्राप्नोति सोऽपि बाहुलकाद् विधेयः।

'**जन्वादित्वाद्रूपे सिद्धे पुनर्वचनं स्वरार्थम्**' इति श्वेतवनवासी (पृ० १६४)। प्रक्रियाकौमुदीटीकाकृदपि (पृ० ६१३)।

१. 'सन्वच्चास्मिन् कार्यं भवति' इति क.।

२. '**तितउः परिपवनं भवति। ततवद्वा, तुन्नवद्वा, तिलमात्रं तुन्न इति वा**' इति निरुक्तकारः (४.६)।

भाष्यकारोऽपि '**तितउः......तुन्नवद्वा**' इत्याह (नवाह्निके)।

'**तितउः गुणो न**' इति ख.। '**प्रत्ययसामर्थ्याद् गुणो न**' इति प्रक्रियाकौमुदी-टीकाकारः (भा० २ पृ० ६१३)।

३. 'लोचनं परिपवनम्' इति क.।

४. 'श्रयते' इति क.।

५. निरुक्तकारोऽपि '**श्मश्रु लोम। श्मनि श्रितं भवति**' इत्याह (नि० ३।५)।

६. '**वक्रजो**' इति क.।

७. 'नञ्पूर्वः...... जलम्' इत्यस्य स्थाने 'नञ्पूर्वः। द्रु गतौ भ्वा०। अनयोरन्त्यलोपो निपात्यते। न श्रीयते न द्रूयते वा तत्त्वविद्भिर्जनैरिति अश्रु अद्रु शोकानन्दसमुत्थं वारिनेत्रयोः' इति क. पाठः।

गतौ भौ० नञ्पूर्वः । अस्यान्त्यस्वरलोपो[१] निपात्यते[२] । न स्रवति न स्रूयते वा दुःखहर्षाभ्यां विनेति[३] अस्रु[४]—वाष्पम् । कर्त्ता कर्म च । द्रु गतौ भौ०, दृ भये क्र्० । अनयोरन्त्यस्वरलोपो[१] निपात्यते दृणातेरुगागमश्च । विविधं द्रूयते दीर्यते वा[५] विद्रुः—दारुप्रकारः । कर्म । द्रवतेरेव कावुपपदे कुत्सितं[६] द्रवतीति कुद्रुः—विकलपादः । कर्त्ता । एवमन्येऽपि[८] ॥

## जीवे[७] रदानुक्[२] ॥१६३॥

---

१. प्रत्ययस्य ङित्वेऽन्त्यस्यस्वरलोपनिपातनं व्यर्थम् ।

२. 'निपात्यते' नास्ति क. । ३. 'दुःख······विनेति' नास्ति ख. ग. घ. ।

४. 'श्रु गतौ न शृणोति न श्रूयते वा अश्रु' इति ख. ग. घ. ।

५. 'विविधं द्रवति दृणाति वा' इति ख. ग. घ. ।

६. 'कौ द्रवति' इति ख. ग. घ. । ८. 'एवमन्यत्रापि' इति ग. घ. ।

७. **जीवेरदानुक्** अत्र 'जीवे+रदानुक्' 'जीवेः+अदानुक्' इत्युभयथा छेदो भवति, संहितायास्तुल्यत्वात् । तेन '**जीरदानुः**','**जीवदानुः**' इत्युभे अपि पदे सिद्धयतः । यत्तु यजुःपदपाठे '**जीवदानुमिति जीवऽदानुमि**'ति अवगृह्यते, तदयुक्तम् स्वरदोषात् । तथा सति '**गतिकारकोप**' (अ० ६।२।१३९) इत्युत्तरपदाद्युदात्तत्वं प्राप्नोति । जीरदानुः जीवदानुश्चोभावपि समानार्थौ । अत एव '**पृथिवीं जीवदानुम्**' (शु० य० १।२८) इत्यस्य '**पृथिवीं जीरदानुम्**' (तै० सं० १।१।९) इति पाठ उपलभ्यते ।

भाष्यकारेण तु सूत्रमिदं प्रत्याख्यायते । **तथा हि—'नैतज्जीवे रूपम, रक्येतज्ज्यः संप्रसारणम्**' (१।१।४) । तथा सति संगच्छतेऽवग्रहः । स्वरस्तु न सम्यगुपपद्यते । कैयटनागेशौ तु बहुव्रीहिस्वरमाहतुः । तदर्थविरोदादुपेक्ष्यम् । भट्टभास्करमिश्रस्तु—'**अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसंख्यानम्**' इति पूर्वपदस्यान्तोदात्तत्वमाह । पक्षान्तरे बहुव्रीहिस्वरमपि । (द्र०—तै० सं० १।१।९) । जीरशब्दश्च तेनैवानेकधा व्युत्पादितः । तथा हि—'**जोरी च**' (पं० उ० २।२६) जु धातो रक् ईत्वं च । यद्वा '**स्फायितञ्चिवञ्चि०**' इत्यादिना जीवेरपि रक् । '**लोपो व्योर्वली**'ति वलोपः । तत्प्रत्याख्यानपक्षे 'जीरदानुमिति छान्दसाद् वर्णलोपात् सिद्धम्' (भा० ६।१।६६) इति **भाष्यवचनाद्वकारलोपः** ।

२. पञ्चपाद्यामेतत् सूत्रं न दृश्यते । धातुवृत्तिकारोऽपि जीवधातौ नोद्धरति । भाष्यकारस्तु '**हयवरट्**' सूत्रे इदं सूत्रमुद्धरति । यथा—'**व्योश्च लोपो वक्तव्यः** । ······**जीवेरदानुक् जीरदानुः । वलीति लोपो न प्राप्नोति**' इति ।

जीवेर्धातो रदानुक् प्रत्ययो भवति। जीव प्राणधारणे भौ०। जीवति जीव्यते वा **जीरदानुः**—औषधम्। कर्त्ता कर्म च॥

॥ उकारः॥

## कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥१६४॥ (पं० उ० १।७८)

एभ्यो धातुभ्य ऊ. प्रत्ययो भवति। कृष विलेखने भौ० तौ०। कर्षति कृषति कृष्यते वा **कर्षूः**–गोमयाग्निसंघातः[1]। कर्त्ता कर्म च। चमु अदने भौ०। चमति परान् चम्यते वा परैरिति **चमूः**—सेना। कर्त्ता कर्म च। तनु विस्तारे ता०। तनोति तन्यते वा **तनूः**—शरीरम्। कर्त्ता कर्म च। धन धान्ये जौ०। दधन्तीति **धनूः**—धान्यनिचयः, पृथिवी, स्त्री, वाराही वा[2]। कर्त्ता। अर्ज सर्ज अर्जने भौ०। [सर्जति] सर्ज्यते[3] इति **सर्जूः**—शरीरम्[4]। कर्त्ता कर्म च[5]। खर्ज व्यथने भौ०। खर्जतीति **खर्जूः**—कण्डूः, विद्युत्[6]। कर्त्ता[7]॥

## मृजेर्गुणश्च ॥१६५॥ (पं० उ० १।७९)

मृजेर्धातोरूः प्रत्ययो भवति गुणश्च। मृजूष्[8] शुद्धौ आ०। मार्जनं **मर्जूः**[9]—शुद्धिः। भावः। गुणवचनं वृद्धिप्रतिषेधार्थम्[10]॥

## वहेर्धश्च[11] ॥१६६॥ (पं० उ० १।८१)

---

१. 'गोमयसंघातः' इति ख.।

२. 'अथवा स्त्री वरारोहा' इति क.। 'अवयति स्त्री वरारोही वा' इति ख.।

३. कोशेषु 'सर्जते' इति पाठः।

४. 'अर्थः' इति क. ख.।

५. नास्ति ख.। 'कर्त्ता, च' नास्ति क.।

६. 'अर्थः' इति क.।

७. **'बाहुलकात् कुह विस्मापने अतोऽपि चौरादिकादूः कुहूरिति धातुप्रदीपटीका' इत्युज्ज्वलदत्तः (पृ० ३१)।**

८. 'मृजूष् शौचालङ्कारयोः' इति भट्टभास्करस्तैत्तिरीयब्राह्मणभाष्ये (भा० १; पृष्ठ १०४)।

९. अत्राह श्वेतवनवासी—**'प्रायेण ऊप्रत्ययान्ताः स्त्रीलिङ्गाः। तथा च हर्षवर्धनः 'आदीदूतः स्त्रियां प्रायः' (लिङ्गा० १।४) इति। अन्यत्र च 'अन्यू-प्रत्ययान्तो धातुः' (पा० लिङ्गा० १।४) इति (पृ० ३६)।**

**१०. 'मृजेर्वृद्धिः' (अ० ७।२।११४) इति वृद्धिः प्राप्नोति।**

**११. 'वहो धश्च' इति ङ.। 'वहो ध च' इति क.।**

वहेर्धातोरूः प्रत्ययो भवति धश्चा[1]न्तादेशः। वह प्रापणे भौ०। वहति गृहकार्यमिति[2] वधूः[3]। कर्त्ता[4]॥

## कषेश्छश्च ॥१६७॥ (पं० उ० १।८२)

कषेर्धातोरूः प्रत्ययो भवति छ[5]श्चान्तादेशः। कष हिंसायाम् भौ०। कषति शरीरमिति कच्छूः—कुष्ठविकारः। कर्त्ता॥

## णिच्च कसिपद्यर्त्तेः ॥१६८॥ (पं० उ० १।८३)

एभ्यो धातुभ्य ऊः प्रत्ययो भवति णिच्च। कस गतौ भौ०। कसतीति कासूः—प्रस्थिता बुद्धिः, विकलता वा[6]। कर्त्ता। पद गतौ दै०। पद्यत इति पादूः—पादुका। कर्त्ता। ऋ गतौ भौ० जौ०[7]। ऋच्छत्यर्यते वा आरूः—फल-वृक्षजातिः। कर्त्ता कर्म च॥

## अणो[8] डश्च ॥१६९॥ (पं० उ० १।८४)

अण[8] ऊः प्रत्ययो भवति डश्चान्तादेशो णिच्च[9]। अण[8] शब्दार्थः भौ०। अण्यतेऽनेनोदकमिति आडूः[10]—जलभृङ्गारः। करणम्॥

## नञि लम्बेर्नलोपश्च ॥१७०॥ (पं० उ० १।८५)

नञ्युपपदे लम्बेर्धातोरूः प्रत्ययो भवति णिच्च न लोपश्च। लबि अव-स्रंसने भौ०। न लम्बत इति अलाबूः[11] तुम्बी। कर्त्ता॥

## के श्र[12] एरङ् चास्य ॥१७१॥ (पं० उ० १।८६)

---

१. 'धकारश्च' इति क.। २. 'गृहकार्यं' नास्ति ख.।

३. अत्राह निरुक्तकारः—'अथाप्यन्तव्यापत्तिर्भवति। ओघो मेघो नाधो गाधो वधूर्मध्विति' [ नि० २।२ ] इति।

४. 'वहन्ति तां विवाहकर्मणेति वधूः कुमारी जाया च। कर्म' इति क.।

५. 'छकारश्च' इति क.।

६. 'स्थिरबुद्धिः विकला च वाक्' इति क.। ७. 'जौ०' नास्ति क.।

८. 'अनः' क.।

९. 'णिच्च' नास्ति क.। १०. 'अडूः' इति क.।

११. अत्राह श्वेतवनवासी—अप्राणिजातेश्चारज्वादीनाम् [ वा० ४।१।६६ ] इत्यूङ् स्वरार्थम्' इति [ पृ० ३८ ]। 'नोङ्धात्वोः' [ ६।१।१७५ ] इति प्रतिषेधो यथा स्यात्। १२. 'श्रृ' इति ख. ग. घ.।

के उपपदे शॄ इत्येतस्माद् धातोरूः प्रत्ययो भवति एरङ् चास्या[1]देशः। शॄ हिंसायां क्र्॰। कं शृणातीति कशेरूः[2]—वीरुत्प्रकारः। कर्त्ता॥

## त्रो द्रुट् च ॥१७२॥ (पं॰ उ॰ १।८७)

तॄ इत्येतस्माद् धातोरूः प्रत्ययो भवति द्रुट् चागमः। तॄ प्लवनतरणयोः भ्वौ॰[3]। तरति तीर्यते वानयेति तर्द्रूः—नौका[4]। कर्त्ता करणं च॥

## दरिद्रातेर्यालोपश्च ॥१७३॥ (पं॰ उ॰ १।८८)

दरिद्रा इत्येतस्माद्धातोरूः प्रत्ययो भवति इश्च आश्च यौ तयो[5]र्लोपश्च। दरिद्रा दुर्गतौ अ॰। दरिद्र्यते शरीरमनयेति दर्द्रूः[6]—कुष्ठविकारः। करणम्॥

## नृतिशृध्योः कूः ॥१७४॥ (पं॰ उ॰ १।८९)

आभ्यां धातुभ्यां कूः[7] प्रत्ययो भवति। नृती गात्रविक्षेपे दि॰। नृत्यतीति नृतूः—नर्तकः, कृमिजातिर्वा। कर्त्ता। शृधु उन्दे, शृधु कुत्सायाम्। शर्धति शर्धते वा शृधूः—बुद्धिः। कर्त्ता॥

---

१. 'अस्य' नास्ति ग. घ. ङ।

अत्राह श्वेतवनवासी—'अस्य ग्रहणं धातोरादेशो यथा स्यात्। इतरथा हि प्रथमातिक्रमे हेत्वाभावादुपपदस्य प्राप्नोति। अस्य ग्रहणे तु सत्यनन्तरस्य सर्वनाम्ना परामर्शात् धातोरेवादेशः। कशब्दः प्रजापतेर्वाचकः। कस्येत् [अ॰ ४।२।२५] [भाष्यमत्रानुसंधेयम्] इति यथा। कथञ्चिदुपपदकल्पना। तेन कशब्दस्यार्थो न गम्यत इति न चोदनीयम्' इति [पृ॰ ३८]।

२. 'बहुलवचनादुप्रत्ययोऽपि भवतीति केचिद्' इति उज्ज्वलदत्तः [पृ॰ ३३]।

३. 'भ्वौ॰' नास्ति क.। ४. 'नौः' इति क.।

५. 'इकार आकार' इति क. ख.।

६. अत्राह भट्टोजिदीक्षितः—"भोजदेवस्तु 'र्यालोप' इति रेफादिकं पदं छित्वा द्वेधा व्याख्यातवान्। रिश्च आश्च इति व्याख्यया दद्रुः रश्च इश्च आश्च इति व्याख्याने तु 'अन्त्यबाधेऽन्त्यसदेशस्य' इति द्वितीयस्यैव रेफस्य लोपाद् दर्द्रूरिति" इति [मनो॰ ७५५]। तत्त्वबोधिन्यामपि [पृ॰ ५२२]।

उज्ज्वलदत्तोऽपि भोजमतमित्थमेवाह [पृ॰ ३३]।

मुद्रिते भोजोणादौ नैतदुपलभ्यते।

७. 'ऊप्रत्यये प्रकृते कूप्रत्ययविधानं कित्कार्यार्थम्' इति श्वेतवनवासी (पृ॰ ३९)।

## ऋतेरम् च ॥१७५॥ (पं० उ० १।९०)

ऋतेर्धातोः कूः प्रत्ययो भवति अम् चागमः । ऋत इति सौत्रो धातुः घृणार्थः[1] । ऋतीयत इति रत्नूः—नदी, सत्यवाक् च । कर्त्ता ॥

## अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥१७६॥ (पं० उ० १।९१)

एते शब्दाः कूः प्रत्ययान्ता[2] निपात्यन्ते । अम गत्यादिषु भौ० । अस्य दुगागमो निपात्यते । अमति अम्यते वानयेति अन्दूः[3]–बुद्धिः । दृभी ग्रन्थे तौ० । अस्य नुमागमो निपात्यते, निपातनाच्चाननुस्वारः[4] । दृभतीति दृन्भूः–कथकः[5] । कर्त्ता । दर्भणं वा दृन्भूः । भावः । जनी प्रादुर्भावे दै० । अस्य बुगागमो निपात्यते । जायत इति जम्बूः[6]–वृक्षः । कर्त्ता । फल निष्पत्तौ भौ०, ञिफला विशरणे भौ० । अनयोः किंशब्द उपपदे उपधाया इत्वं गुणश्च निपात्यते कादेशश्च किमः । किञ्चित् किंविधां वा फलतीति कफेलूः—श्लेष्मातकम्, यवलाजा,

---

१. 'घृणार्थः' इति नास्ति क. ख. ग. घ. ।

अत्राह श्वेतवनवासी—'ऋतिः सौत्रो धातुः घृणागतिस्पर्धासु वर्तते । आयादय आर्धधातुके वा (अ० ३।१।३१) इति यदा ईयङ् प्रत्ययो नास्ति तदा कूप्रत्ययो धातो रमागमश्च' इति (पृ० ३९) ।

२. 'प्रत्यये' इति क. । ३. 'केचित्तु अम गतौ अस्य दुक् । अन्दूः बुद्धि इति व्याचख्युः' इति तत्त्वबोधिनीकारः (पृ० ५२२) ।

'केचित्तु अम गतौ अस्य दुगागमे कूप्रत्यये च अन्दूः बुद्धिरिति व्याचख्युः' इति सुबोधिन्यां (सि० च० टी० भा० २, पृ० २९८) व्युत्पत्तिसारे (पृ० २५) च ।

४. 'नानुस्वारः' इति क. ख. ।

'अनुस्वाराभावोऽपि निपातनादित्येके दृन्भूः' इति कौमुदीकारः (पृ० ५२३) ।

'क्वचिद्गुणादिवृत्तौ दृभी ग्रन्थे इत्यस्मात् कूप्रत्यये निपातनमित्युक्तम्' इति धातुवृत्तौ (पृ० ३३) ।

व्युत्पत्त्यन्तरं च तत्रैव—'दृढशब्द उपपदे (भुवः) कूप्रत्ययान्तो निपातितः । उपपदस्य च दृन्भावोऽस्मादेव निपातनात् । केचिदुपपदं नान्तं पठन्ति' इति (धा० वृ० ३३)।

५. 'ग्रन्थकारः' इति क. । 'दृम्भतीति दृम्भूः संदर्भकर्त्ता इत्यर्थः । कथक इत्यन्ये' इति तत्त्वबोधिनीकारः (पृ० ५२३) ।

६. 'चान्द्रव्याकरणे जम्बुरिति ह्रस्वान्तो दर्शितः' इत्युज्ज्वलदत्तः (पृ० ३४) ।

मधुपर्कश्च[1]। कर्त्ता। डुधाञ् धारणपोषणयोः[2] जौ०। अस्य कर्कशब्द उपपदे आकारलोपो[3] निपात्यते, उपपदस्य च नुक्[4]। कर्कं दधातीति **कर्कन्धूः**—बदरीवृक्षः[5]। कर्त्ता। धिष शब्दे जौ०। अस्य द्विर्वचनं निपात्यते। देधेष्टीति **दिधिषूः**—पुनर्भूर्भार्या। कर्त्ता। अथवा डुधाञ् धारणपोषणयोः[2] जौ०। अस्येत्वं द्विर्वचनं[6] षुगागमश्च निपात्यते। धातव्या[7]ऽसाविति **दिधिषूः**[8]। कर्म॥

## भ्रमेश्च डूः ॥१७७॥ (पं० उ० २।६६)

भ्रमेर्धातोर्डूः प्रत्ययो भवति चाद् गमेः[9]। भ्रमु चलने भौ०, भ्रमु अनवस्थाने दै०। भ्रमति भ्राम्यतीति वा **भ्रूः**—अक्षणोरुपरि रोमराजिः। कर्त्ता। गम्लृ गतौ भौ० अग्रशब्द उपपदे। अग्रे गच्छतीति **अग्रेगूः**—पुरःसर। कर्त्ता॥

॥ ऊकारः॥

॥ इति **दशपादी-उणादिवृत्तौ प्रथमः पादः**॥

---

१. मधुशर्कराश्च' इति क.। 'यवलाजमधुपश्च' इति ख.।

२. 'दानधारणयोः' इति क.।

३. आकारलोपनिपातनं चिन्त्यम्। प्रत्ययस्य कित्वाद् 'आतो लोपः' (अ० ६।४।६४) इत्यादिना सिद्धत्वात्। ४. 'अमागमोऽन्त्यलोपो निपात्यते' इति क.।

५. 'बदरः' इति क.। ६. 'अस्य द्विर्वचनं' इति नास्ति ग. घ.।

७. 'दधात्यसौ' इति ख. ग. घ.।

८. 'केश्चित्तु दधातेरित्वं द्वित्वं षुक् च निपात्यते दधात्यसाविति दिधिषूरिति व्याख्यातम्' इति सदानन्दः (सि० च० टी० भा० २, पृ० २९८)।

**'केचित्तु दधातेरित्वं षुक् च निपात्यते कूप्रत्यये सन्वच्च, दधात्यनया वंशादिकमिति दिधिषूः'** इति व्युत्पत्तिसारकारोऽपि (पृ० २६)।

९. चकारस्यानुक्तसमुच्चयार्थत्वाद् गमेः संग्रहः। पञ्चपाद्यां तु 'गमेर्डोः'(२।६८) इति सूत्रं पुरस्तात् पठ्यते। तत्रानुवृत्त्यर्थश्चकारः। नारायणश्वेतवनवासिनौ तु न चकारं पठतः, नापि 'अग्रेगू'पदं साधयतः।

# ॥ अथ द्वितीयः पादः ॥

## तृन्तृचौ शंसिक्षदादिभ्य संज्ञायां चानिटौ ॥१॥ (पं० उ० २।९४)

तृन् तृच्[1] इत्येतौ प्रत्ययौ भवतः शंसेः क्षदादिभ्यः[2] क्षदप्रकारेभ्यश्च संज्ञायां गम्यमानायामनिटौ भवतः। शंसु स्तुतौ भौ०। शंसतीति **शंस्ता**—यज्ञकर्मविद् ऋत्विग्विशेषः[3]। कर्त्ता। क्षद गतौ भौ०[4]। क्षदतीति **क्षत्ता**—विदुरः। कर्त्ता। शासु अनुशिष्टौ अा० प्रपूर्वः। प्रशास्तीति **प्रशास्ता**—राजा, गुरुर्वा[5]। कर्त्ता[6]॥

## बहुलमन्यत्रापि[7] ॥२॥ (पं० उ० २।९५)

बहुलमन्येभ्यो धातुभ्यस्तृन्तृचौ प्रत्ययौ भवतः, अनिटौ च संज्ञायां विषये। ष्टुञ् स्तुतौ अा० प्रपूर्वः। प्रस्तौतीति **प्रस्तोता**—ऋत्विक्[8]। कर्त्ता। हृञ् हरणे भौ० प्रतिपूर्वः[9]। प्रतिहरतीति[10] **प्रतिहर्त्ता**[11]। हन हिंसागत्योः अा० प्रतिपूर्वः। प्रतिहन्तीति **प्रतिहन्ता**। दृशिर् प्रेक्षणे भौ० उपपूर्वः[12]। उपपश्यतीति **उपद्रष्टा**। गै शब्दे भौ० उत्पूर्वः। उद्गायतीति **उद्गाता**। हु

---

१. 'तृंश्च तृच्च तौ तृन्तृचौ' इति क.।

२. भट्टोजिदीक्षितं विहायान्ये पञ्चपादीवृत्तिकारा उभाभ्यामादिशब्दं संबध्नन्ति।

३. 'ऋत्विग्विशेषः' इति नास्ति क. ख.।

४. अत्राह देवराजः—'क्षद स्थैर्ये इति स्कन्दस्वामी। क्षद गतिहिंसनयोरिति सुबोधिनीकारः' इति (पृ० ९८)। 'सौत्रो धातुः' इत्यन्ये वृत्तिकाराः।

५. 'गुरुर्वा' इति नास्ति क.।

६. 'क्षदादिराकृतिगणः' इति श्वेतवनवासिवृत्तौ क्वाचित्कः पाठः (पृ० ८७। B. पाठः)।

७. 'प्रपञ्चार्थमिदं सूत्रं पूर्वेणैव सिद्धत्वात्' इत्युज्ज्वलदत्तः (पृ० ९२)। केचिदिदं सूत्रं न पठन्ति। ८. 'ऋत्विक्' नास्ति क.।

९. 'प्रतिपूर्वः' नास्ति ग. घ.। १०. 'प्रतिहरति' इति नास्ति ग. घ.।

११. 'हृञ् हरणे······प्रतिहर्त्ता' नास्ति क.। १२. 'उपशब्दपूर्वः' इति क.।

त्वाद् अच्[1] प्रत्ययो भवति वधादेशश्च। तेन[2] वृत्रं हन्तीति **वृत्रवधः**—इन्द्रः। कर्त्ता[3]। तृन्तृचोर्लुटः प्रथमैकवचने वा **वधिता**। कृत्ये—हन्तव्योऽसाविति **वध्यः**। ल्युटि—**वधनम्**[4]॥

तथा ध्मश्चान्यत्रापि धमादेशो भवति[5]। '**धमः**[6] **काञ्चनस्येव राशिः**[7]' इत्येवमादिसिद्धं भवति[8]॥

## कृषेर्वृद्धिश्चोदीचाम् ॥१०॥ (पं० उ० २।४०)

कृषेर्धातोः क्वुन् प्रत्ययो भवति वृद्धिश्च भवति उदीचां मतेन[9]। कृष विलेखने भ्वा० तु०[10]। कर्षति कृषति वा **कार्षकः**—क्षेत्रोपजीवी। अन्यत्र[11] **कृषकः**। कर्त्ता॥

## उदकम्[12] ॥११॥ (पं० उ० २।४१)

उदकमित्ययं शब्दो[13] निपात्यते क्वुन्प्रत्यये निरूढः। किं निपात्यते? खनतेरञ्चतेर्वा उत्पूर्वस्य धातुलोपो निपात्यते। खनु अवदारणे भ्वा०, अञ्चु गतिपूजनयोः भ्वा० उत्पूर्वौ[14]। उत्खायते उदञ्च्यते वा तद्वायुना विभज्यमानमिति **उदकम्**—अम्भः। कर्म॥

## वृश्चि[15]कृषोः[16] किकन्[17] ॥१२॥ (पं० उ० २।४२)

आभ्यां धातुभ्यां किकन् प्रत्ययो भवति। ओव्रश्चू छेदने तु०। वृश्च-

---

१. 'अल्' इति क.। २. 'तेन' नास्ति क.।
३. 'इन्द्रः कर्त्ता' नास्ति क.। ४. 'इति कृत्यम्' इत्यधिकं क.।
५. 'तथाऽन्यत्रापि ध्मश्च बधादेशो भवति निष्ठायां ध्मातो' इति ख. ग. घ.।
६. 'धाता' इति ग. घ.।
७. 'धातुकाञ्चनारस्य राशिः' इति क.। अनुपलब्धमूलमिदम्।
८. 'भवति' नास्ति क.।
९. 'मते' क.। १०. 'कृष·····तु०' नास्ति ग. घ.।
११. 'अत्य' इति ख. ग. घ.। १२. 'उदकं च' इति ङ.।
१३. 'उदकशब्दोऽयं' इति क.। १४. 'खनु·····पूर्वौ' नास्ति क. ख.।
१५. 'व्रश्चि०' इति शुद्धः पाठः (द्र०—क्षीर० १।७१६)।
१६. '०कृष्योः' इति ङ.। १७. सूत्रमिदं नास्ति छ.।

तीति **वृश्चिकः**—क्षुद्रजन्तुः। कर्त्ता। कृष विलेखने भौ० तौ०। कर्षति कृषति वा **कृषिकः**—लाङ्गलम्[1] कर्त्ता॥

**प्राङि पणिकषः[2] ॥१३॥ ( पं० उ० २।४३ )**

प्राङ्युपपदे[3] 'पणिकष' आभ्यां धातुभ्यां[4] किकन् प्रत्ययो भवति। पण व्यवहारे स्तुतौ च भौ० प्र[5]आङ्पूर्वः। प्रापणते[6] इति **प्रापणिकः**—वणिक्। कर्त्ता। कष हिंसार्थः भौ० [प्रआङ्पूर्वः[7]]। प्राकषतीति **प्राकषिकः**[8]—हिंस्रः। कर्त्ता॥

**मुषेर्दीर्घश्च ॥१४॥ ( पं० उ० २।४४ )**

मुषेर्धातोः किकन् प्रत्ययो भवति दीर्घश्च धातोः। मुष स्तेये क्र्यै०। मुष्णातीति **मूषिकः**[9]— आखुः। कर्त्ता॥

**स्यमेः सम्प्रसारणं च[10] ॥१४॥ (पं० उ० २।४५)**

स्यमेर्धातोः किकन् प्रत्ययो भवति,[11] सम्प्रसारणं च धातोः, दीर्घश्च प्रत्ययादेः[12]। स्यमु शब्दे भौ०। स्यमतीति **सिमीका**[13]—सूक्ष्मा कृमिजातिः। कर्त्ता॥

---

१. 'लाङ्गलम्' नास्ति ग. घ.। 'कार्षकः' इति क.।

२. 'आङि पणिकषः' इति ख. ग. घ. च. ज.। 'पणिकषोः किकन्' इति छ.।

३. 'आङ्यु०' इति ख. ग. घ.। ४. 'इत्येताभ्यां' इति क.।

५. 'प्र' नास्ति ख. ग. घ.।

६. 'आपणायते' इति ग. घ.। 'आपणते' इति ख.। 'प्रापणति' इति क.। 'आपणिकः' इति ख. ग. घ.।

७. नास्ति क. ग. घ.। 'आङ्पूर्वः' इति ख.।

८. 'आकषतीति आकषिकः' इति ख. ग. घ.।

९. अत्राह श्वेतवनवासी—'मूष स्तेये भौवादिकः। तस्मात् किकन् प्रत्यये दीर्घवचनमन्तरेणापि मूषिकशब्दस्य सिद्धत्वात् दीर्घवचनं विस्पष्टार्थम्। एवं च मूषेर्वुलि मूषक इत्यपि साधुः' इति (पृ० ७३)। १०. 'च' नास्ति क. ङ.।

११. 'दीर्घश्च प्रत्ययस्य सम्प्रसारणं च धातोः' इति क.।

१२. 'दीर्घं च प्रत्ययस्य' इति ग. घ.।

१३. 'सिमीकः' इति ग. घ.। पञ्चपाद्यां सम्प्रसारणस्यैव दीर्घत्वं विधाय 'सीमिकः' इति साधयन्ति।

## क्रिय इकन् ॥१६॥ ( पं० उ० २।४६ )

क्रियो धातोरिकन् प्रत्ययो भवति। डुक्रीञ् द्रव्यविनिमये क्र्या०। क्रीणातीति **क्रयिकः**—पण्यसंगृहीता[1]। कर्त्ता[2]॥

## आङिपणिपनिपतिखनिभ्यः ॥१७॥ ( पं० उ० २।४७ )

आङ्युपपदे एभ्यो धातुभ्य[3] इकन् प्रत्ययो भवति। पण व्यवहारे स्तुतौ च भ्वा०[4]। आपणत इति **आपणिकः**[5]—वणिक्। कर्त्ता। पन च भ्वा०। अस्याप्युक्तप्रकारः[6]। पत्लृ गतौ भ्वा०। आपततीति **आपतिकः**—पथिवर्त-मानः। कर्त्ता। खनु अवदारणे भ्वा०। आखनतीति **आखनिकः**[7]—वराहः। कर्त्ता॥

## कृदाधारार्चिकलिभ्यः कः ॥१८॥ (पं० उ० ३।४०)

एभ्यो धातुभ्यः कः प्रत्ययो भवति। डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् करणे भ्वा०। करोति कृणोति करतीति **कर्कः**—अग्निः, सारङ्ग-

---

अत्राह हेमचन्द्राचार्यः—'**केचित् ··· प्रत्ययस्य दीर्घत्वमिच्छन्ति। सिमीकः—सूक्ष्मकृमिः**' इति। हैमोणा० सू० ४४। पृ० १२।

१. नास्ति क.। २. 'कर्त्ता' नास्ति ख. ग. घ।

३. 'एभ्यो धातुभ्य आङ्युपपदे' इति क.। ४. 'च पन च भ्वा०' इति क.।

५. यत्त्वत्र नारायणेनोक्तम्—

'**ये तद्धितादिभिः सिद्धाः क्रयिकापणिकादयः।**
**ते व्युत्पत्तेर्बाहुविध्यं वक्तुमुक्ता महर्षिणा**'॥

इति (पृ० ४२)। तदयुक्तम्, स्वरभेदात्। ठकः कित्त्वादन्तोदात्तत्वम्, इह तु प्रत्ययस्य नित्त्वादुत्तरपदाद्युदात्तत्वमिति स्पष्टः स्वरभेदः। तदुक्तमुज्ज्वलदत्तेन—'**आपणेन व्यवहरतीत्यर्थे ठकि सिद्धे नित्स्वरार्थमिदम्**' इति (पृ० ७७)।

६. अस्य कोऽभिप्राय इति न ज्ञायते। अस्याप्यापणिक इत्येवरूपमित्यर्थः कथंचित् सम्भवति परं कथं तत्र णत्वमिति न ज्ञायते। पञ्चपादीवृत्तिकारस्तु 'आपनिकः' इत्युदाहरन्ति।

'पनः······प्रकारः' इति नास्ति क.।

७. यत्त्वत्र श्वेतवनवासिना '**खनो घ च** (अ० ३।३।१२५) इत्यत्र **इको वक्तव्य इत्याखनिकशब्दः सिद्ध इति तस्यैवायं प्रपञ्चः**' इत्युक्तम् (पृ० ७४)। तच्चिन्त्यम्, स्वरभेदात्। तत्र हि प्रत्ययस्वरः, इह तु नित्स्वर इत्यस्ति विशेषः।

श्च । कर्त्ता । क्रियत इति **कर्कः**—दर्भः । कर्म । डुदाञ् दाने जौ० । ददातीति **दाकः**—यजमानः । कर्त्ता । डुधाञ् धारणपोषणयोः[1] जौ० । दधातीति **धाकः**—स्तम्भः[2] । कर्त्ता । रा दाने अ० । रातीति **राकः**[3]–दाता । कर्त्ता[4] । रायते वा **राका**—अर्थः । कर्म । अर्च पूजायां चौ० । अर्च्यतेऽसावर्चयन्ति वा तमिति **अर्कः**—भास्करः, पुष्पजातिश्च । कर्म[5] । कल क्षेपे भौ० । कलत[6] इति **कल्कः**—पापः, द्रव्यक्षोदश्च । कर्त्ता[7] ।

उत्तरत्र कित्करणात् ककारस्येहानुबन्धत्वं नास्ति[8] ॥

## सृवृभूशुषिमुषिभ्यः कित् ॥१९॥ (पं० उ० ३।४१)

एभ्यो धातुभ्यः कः प्रत्ययो भवति किच्च । सृ गतौ भौ०, जौ० । धावति सर्त्ति वा **सृकः**—वायुः, वाणो वा । कर्त्ता । वृञ् वरणे सौ० । वृणोति व्रियते वा **वृकः**—श्वापदः, क्षुद्रश्च[9] । कर्त्ता कर्म च । भू सत्तायां भौ० । भवति भूयते वा **भूकः**—कालः । कर्त्ता भावश्च । शुष शोषणे दै० । शुष्यतीति **शुष्कम्**[10]—निर्मांसम् । कर्त्ता । मुष स्तेये क्र्यौ० । मुष्णातीति **मुष्कः**—चौरो, मांसलो वा; मुष्कौ वृषणौ[11] । कर्त्ता ॥

---

१. 'दानधारणयोः' इति क. । २. 'यजमानः' इति ख. ।

३. 'एषु (दाकः, धाकः, राकः) त्रिषु **केऽणः** (अ० ७।४।१३) इति **ह्रस्वो न भवति बहुलवचनादेव**' इत्युज्ज्वलदत्तः (पृ० १११) ।

४. 'रा दाने ⋯ कर्त्ता' इति नास्ति ख. ।

५ 'कर्त्ता च' इत्यधिकं ग.घ.पुस्तकयोः । ६. 'कल्यत' इति क. ।

७. 'कर्त्ता' नास्ति क. । 'कल बन्धनाङ्गीकरणयोः भौ० । कलते कल्कः । कर्त्ता' इति ख. । ग.घ.योस्तु 'कल⋯⋯भौ०' इति नास्ति । शिष्टं ख.वत् ।

८. '⋯⋯करस्य हेतो संज्ञा नास्ति' इति ग. घ. ।

यत्वत्र नारायण(पृ० ६१) श्वेतवनवास्यु (पृ० १०९)ज्ज्वलदत्ताः (पृ० १११) '**बाहुलकात् ककारस्येत्संज्ञा नेति**' वदन्ति तच्चिन्त्यम् ।

९. 'क्षुद्रश्वापदः' इति क. ख. ।

१०. नारायणस्त्वाह—'**निष्ठया सिद्धेऽपि उक्तिः अभूतकाले सिद्ध्यर्थम्**' इति (पृ० ६२) ।

११. अत्राह हेमचन्द्रः—'**मुष्कश्चौरो मांसलो वा मुष्कौ वृषणौ**' इति (हैमोणा० सू० २२, पृ० ६)

## शुकवल्कोल्काः ॥२०॥ ( पं० उ० ३।४२ )

एते शब्दा निपात्यन्ते कप्रत्यये निरूढाः[1]। शुभ शुम्भ[2] शोभार्थे तौ०[3], शुभ दीप्तौ भ्वा०[3]। अनयोर्भलोपो[4] निपात्यते। शुभति शोभते वा **शुकः**—पक्षी, ऋषिश्च। कर्त्ता। वल संवरणे[5] [भ्वा०]। वलति वल्यते वा **वल्कः**—वासः, त्वक् च[3]। कर्त्ता। उष दाहे भ्वा०[3]। अस्य षकारस्य लत्वं निपात्यते। ओषतीति **उल्काः**—अग्निज्वाला,[6] उत्पातश्च। कर्त्ता॥

## इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥२१॥ ( पं० उ० ३।४३ )

एभ्यो धातुभ्यः कन् प्रत्ययो भवति। इण् गतौ अ०। एतीति **एकः**—संख्यावाची, केवलार्थः, प्रधानवाची च[7]। कर्त्ता। ञिभी भये जौ०। बिभेतीति **भेकः**—मण्डूकः। कर्त्ता। कै शब्दे भ्वा०। कायतीति **काकः**—वायसः। कर्त्ता[8]। पा पाने भ्वा०। पिबति स्तनमिति **पाकः**—बालः। कर्त्ता। पा रक्षणे अ०। पातीति **पाकः**—असुरः[9]। कर्त्ता। शल गतौ भ्वा०। शलति शल्यते वा **शल्कः**[10]—काष्ठत्वक्, मलिनं च काष्ठम्[11]। कर्त्ता कर्म च। अत सातत्यगमने [भ्वा०] अततीति **अत्कः**—वायुः, आत्मा च। कर्त्ता। मर्च इति सौत्रो धातुः। मर्चयतीति **मर्कः**—वायुः। कर्त्ता। निरनुनासिकत्वाद्वा प्रयोजनाभावाद्वा[12]।

---

१. 'निरुढाः' इति क.। २. 'शुम्भ' इति नास्ति क.।

३. नास्त्ययं पाठः ख. ग. घ.। ४. '०रन्त्यलोपो' इति क.।

५. 'संचलने' इति ग. घ.। 'संधारणे' इति ख.।

६. 'वह्निज्वाला' इति ख.।

७. महाभाष्यकारोऽप्याह—"एकशब्दोऽयं बह्वर्थः। अस्त्येव संख्यापदम्। तद्यथा—एको द्वौ बहव इति। अस्त्यसहायवाची। तद्यथा—एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति। असहायैरित्यर्थः। अस्त्यन्यार्थे वर्तते। तद्यथा—'प्रजामेका रक्षत्यूर्जमेका' इति। अन्येत्यर्थः। 'सधमादो द्युम्न एकास्ताः' अन्या इत्यर्थः।" इति (१।१।२३)। ८. 'ञिभी……कर्त्ता' इति नास्ति ग. घ.।

९. 'सुर' इति घ.। 'आतुर' इति ख.। १०. 'शल्कम्' इति क.।

११. 'मलिनं च काष्ठम्' इति नास्ति ख. ग. घ.।

१२. यत्त्वत्र 'निरनुनासिकत्वाद्वा प्रयोजनाभावाद्वा' इत्युक्तं तच्चिन्त्यम्। नहि ककारस्येत्संज्ञायामनुनासिकत्वमाश्रीयते, अपि च ककारोऽनुनासिकोऽपि न भवति। यत्तु 'प्रयोजनाभावादित्युक्तं तदपि न। ककारस्येत्संज्ञायां सत्याम् 'एकः' इत्यत्र गुणो न स्यात् 'क्ङिति च' (अ० १।१।५) इति प्रतिषेधात्। तथा चोत्तरसूत्रे 'निहाकः'

बाहुलकाद्वा ककारस्येत् संज्ञा न भवति[1] ॥

## नौ हः ॥२२॥ ( पं० उ० ३।४४ )

नावुपपदे हा इत्येतस्माद् धातोः कन् प्रत्ययो भवति । ओहाक् त्यागे जौ० निपूर्वः । नियतं हीयते जहाति वा **निहाकः**—स्नेहः । **निहाका**—गोधा । कर्त्ता कर्म च ॥

## स्यम ईट्[2] च ॥२३॥ ( पं० उ० ३।४५)

स्यमेः धातोः कन् प्रत्ययो भवति ईट् चागमः । स्यमु शब्दे भ्वौ० । स्यमतीति **स्यमीका**[3] कृमिजातिः । कर्त्ता ॥

## अजिसुयुधूञ्भ्यो[4] दीर्घश्च ॥२४॥ ( पं० उ० ३।४६ )

एभ्यो धातुभ्यः कन् प्रत्ययो भवति दीर्घश्चैषाम् । अज गतिक्षेपणयोः भ्वौ० । अजतीति **वीकः**—वायुः[5] । कर्त्ता । षुञ् अभिषवे सौ० । सुनोतीति **सूकः**—[अभिषवः] । कर्त्ता[6] । यु मिश्रणे आ० । यौतीति **यूकः**—क्षुद्रजन्तुः स्वेदजः[7] । कर्त्ता । धूञ् कम्पने सौ० क्र्०[8] । धुनोति धुनातीति[9] **धूकः**—[वायुः] । कर्त्ता । दीर्घश्चेति दीर्घकरणसामर्थ्यादगुणत्वं व्याख्यातम्[1] ।

बाहुलकात्—नयतीति **नीका**—उदकहारिका । कर्त्ता ॥

---

इत्यत्र **'आतो लोप इटि च'** (अ० ६।४।६४) इत्याकारलोपः प्रसज्येत । तस्माद् 'बाहुलकत्वादेवेत्संज्ञा न भवति' इति सम्यक् ।

१. **'संज्ञा नास्ति'** इति ग. **घ.** । 'ककारस्यानुबन्ध ······ इति' इति क. ।

२. **'स्यमेरिट् च'** इति ङ. च. ।

३. अत्राहोज्ज्वलदत्तः—**'ह्रस्व इडागमो भवतीति केचित् । तेषां स्यमिकः'** इति (पृ० ११३) । ४. 'सूञ्धूञोः' इति ङ. ।

५. 'वीकः अजेर्वी आदेशः वायुर्मनो वा' इति क. ।

६. 'षुञ्······कर्त्ता' नास्ति क. ।

७. 'क्षुद्रजन्तुः स्वेदजः' इति नास्ति ख ग. घ. । ८. नास्ति **ख.** ग. घ. ।

९. **'तद् (दीर्घ)सामर्थ्याद् गुणो न'** इत्युज्ज्वलदत्तः (पृ० ११४) ।

**'दीर्घवचनसामर्थ्याद् गुणो न भवति । गुणनिवारणाय दीर्घान्तानामपि दीर्घः** इति श्वेतवनवासी (पृ० १११) ।

'दीर्घ······तम्' अयं पाठः ख.ग.घ.पुस्तकेषु 'षुञ् अभिषवे' इत्यतः प्राग् वर्तते ।

## ह्रियो रश्च लो वा ॥२५॥ (पं० उ० ३।४७)

ह्री इत्येतस्माद् धातोः कन् प्रत्ययो भवति रेफस्य च लकारो वा दीर्घः। पुनर्दीर्घकरणं गुणप्रतिषेधार्थम्[२]। ह्री लज्जायां जौ०[१]। जिह्रेतीति ह्रीकः, ह्लीकः—लज्जावान्। कर्त्ता[३]॥

## आनकः शीङ्भियः ॥२६॥ (पं० उ० ३।७८)

शीङ् भी इत्येताभ्यामानकप्रत्ययो भवति। शीङ् स्वप्ने अ०। शेतेऽत्यर्थमिति शयानकः—अजगरः। कर्त्ता। ञिभी भये जौ०[४]। बिभ्यति तस्मादिति[५] भयानकः—भीषणः। अपादानम्॥

## आणको लूधूशिङ्घिधाञ्भ्यः ॥२७॥ (पं० उ० ३।७९)

एभ्यो धातुभ्य आणकः[७] प्रत्ययो भवति। लूञ् छेदने क्र्०। लूयते तेन लुनाति वा[८] लवाणकम्—दात्रम्। करणं कर्त्ता च[९]। शिघि आघ्राणे दै०। शिङ्घ्यत इति शिङ्घाणकम्[१०]—नासास्रावः। कर्म। डुधाञ् धारणपोषणयोः[११] जौ०। दधाति धीयते वा धानकः—सुवर्णपरिमाणम्। कर्त्ता कर्म च। बाहुलकाण्णस्य[१२] नत्वम्॥

## वृतेस्तिकन् ॥२८॥ (पं० उ० ३।१४०)

वृतेर्धातोस्तिकन् प्रत्ययो भवति। वृतु वर्तने भ्वा०। वर्तत इति वर्त्तिका[१३]

---

१. 'रस्य' इति ग. घ.।

२. 'पुन .... धार्थम्' नास्ति ख. ग. घ.। ३. नास्ति ग. घ.।

४. नास्ति ख. ग. घ.। ५. '०त्यस्माज्जन इति' इति क.।

६. '०शिघि०' इति ग. घ. च. छ.।

७. श्वेतवनवासी तु 'आनकच्' प्रत्ययं विधाय 'चकारः स्वरार्थः' इति ब्रूते (पृ० ११८)। ८. 'लुनाति लूयते वा तेन' इति क.।

९. 'कर्त्ता करणं च' इति क.।

१०. अत्राहोज्ज्वलदत्तः—'पृषोदरादित्वादत्र वा ककारलोपः। शिङ्घाणः फेन ......' इति (पृ० १२३)। ११. 'दानधारणयोः' इति क.।

१२. 'णकारस्य' इति ग. घ.।

उज्ज्वलदत्तस्तु 'धाणको दीनारभागः' (पृ० १२३) इति कृतणत्वमेवोदाहरति।

१३. अत्राह श्वेतवनवासी—'वर्त्तिका व्याख्याग्रन्थविशेषः, शकुनिविशेषश्च। वृतेः

—पक्षिजातिः। कर्त्ता। वृत्यत इति वा **र्वात्तका**—द्रव्यगुटिका[1]। कर्म॥

## कृतिभिदिलतिभ्यः कित् ॥२६॥ (पं० उ० ३।१४१)

एभ्यो धातुभ्यस्तिकन् प्रत्ययो भवति किच्च। कृती वेष्टने रौ०। कृणत्तीति **कृत्तिका**—नक्षत्रनाम[2]। कर्त्ता। भिदिर् विदारणे रौ०। भिनत्तीति **भित्तिका**—कुड्यस्थानम्। कर्त्ता। भिद्यते वा **भित्तिका**। कर्म[3]। लत सौत्रो धातुः[4] अवपूर्वः। अवलतति अवलत्यते वा **अवलत्तिका**—गोधा, गन्धर्वभाण्डम्[5] [च]। कर्त्ता कर्म च॥

## इष्यशिभ्यां तकन् ॥३०॥ (पं० उ० ३।१४२)

आभ्यां धातुभ्यां तकन् प्रत्ययो भवति किच्च। इषु इच्छायां तौ०[6]। इच्छति तामिष्यते वा श्रेयोऽर्थिभिरिति **इष्टका**[7]—महीमध्यश्चैत्यगृहसाधिन्यः[8]। कर्म। अशु भोजने क्र्०। अश्नन्ति तस्यां पितर[9] इति **अष्टका**[10]

---

ण्वुलि गुणे 'वर्तका शकुनौ प्राचाम्' (अ० ७।३।४५ वा०) इति 'प्रत्ययस्थात्' (अ० ७।३।४४) इत्यादिना प्राप्तस्येत्त्वस्य प्रतिषेधे यद्यपि सिद्धचति तथापि प्राचामपि वर्त्तिकासिद्धये तिकन् प्रत्ययो विधीयते। बहुभिः वर्त्तिका इति इकारस्य श्रवणार्थं तिकन् प्रत्ययो विधीयते (?)' इति (पृ० १३३, १३४)।

उज्ज्वलदत्तस्तु—'वर्तका शकुनौ प्राचाम् (अ० वा० ७।३।४५) इत्यकारस्येत्वेऽविधेये वार्त्तिकारम्भाद् वृतेर्ण्वुल् वर्त्तिकेति च व्याख्यातत्वादस्यानार्षता लक्ष्यते (?)' इति (पृ० १३६) आह।

१. '०गुणिका' इति ख.। '०गुलिका' इति ग. घ.।

२. 'नक्षत्रम्' इति क. ख.।

३. 'भिनत्तीति भिद्यते वा भित्तिका—कुड्यस्थानम्। कर्त्ता कर्म च' इति क.।

४. 'लत इति सौत्रः' इति श्वेतवनवासी (पृ० १३४)। 'लतिः सौत्रः' इति नारायणः (पृ० ८१)। 'लत सौत्रः' इत्युज्ज्वलदत्तः (पृ० १३६)।

५. 'गन्धर्वभाण्डम्' इति नास्ति क. ख.। ६. 'भौ०' इति क. ख.।

७. अत्राहोज्ज्वलदत्तः—'मृदस्तिकन् (अ० ५।४।३९) इति ज्ञापकादनित्यत्वेन 'प्रत्ययस्थात् कात्' (अ० ७।३।४४) इतीत्वं न भवति' इति (पृ० १३६)।

८. 'महीमप्यश्चैत साधिन्यः' इति ग. घ.। 'मही यस्य चितिसाधिन्यः' इति ख.।

९. 'आशयन्ति तामाशुरः' इति ग. घ.। 'अश्नन्त्यस्यां ' इति क.।

१०. अत्राह श्वेतवनवासी—'कनि अष्टका पितृदेवत्ये [अ० ७।३।४५ वा०]

श्राद्धतिथिः। तिस्रोऽष्टकाः। अधिकरणम्[1]॥

**खजेराकः[2] ॥३१॥ (पं० उ० ४।१३)**

खजेर्धातोराकप्रत्ययो भवति। खज मन्थे भौ०। खज्यते खजति वेति **खजाकः**—पक्षी बन्धकी च। [कर्म] कर्त्ता[3] [च]॥

**बलाकादयश्च[4] ॥३२॥ (पं० उ० ४।१४)**

बलाकादयः शब्दा निपात्यन्ते आकप्रत्यये निरूढाः[5]। बल संवरणे भौ०। बलतीति **बलाका**—पक्षिजातिः। कर्त्ता। **मन** ज्ञाने दै०[6]। मन्यत इति **मनाका**—हस्तिनी। कर्त्ता। पूङ् पवने [भौ०]। पवत इति[7] **पवाका**[8]—वात्या[9]। कर्त्ता। मव्य बन्धने भौ०[10]। अस्य **यलोपो** निपात्यते। मव्यति मव्यते वा **मवाका**—करेणुबन्धनम्[11]। कर्त्ता कर्म च॥

**शलिपटिपतिभ्यो नित् ॥३३॥ (पं० उ० ४।१५)**

---

इति इत्वनिषेधेन रूपे सिद्धे ततोऽन्यत्रापि यथा स्यादिति अशेरुपादानम्' इति [पृ० १३४]।

१. 'अधिकरणम्। श्राद्धतिथिः। तिस्रोऽष्टकाः' इति क.।

२. अत्र श्वेतवनवासी 'खञ्जेराकः' इत्येव सूत्रं पठित्वाह—"खञ्जाकः मन्थः। केचित् किदित्यनुवर्तयन्ति। अन्ये बाहुलकान्नलोपमिच्छन्ति। अपरे 'खजेराकः' पठन्ति ......युक्तञ्चैतत्, अवयवार्थेनानुगमात्। रूढिशब्दानामपि सत्येवावयवार्थे व्युत्पत्तेर्न्याय्यत्वात्। यत्र तु सर्वात्मनार्थानुगमो नास्ति तैलपायिकादौ तत्रैवासदर्थाश्रयणम्। तस्मात् 'खजेराक' इति सूत्रपाठः" इति [पृ० १४१]।

३. 'खजतीति खजाकः पक्षी बन्धकी च। कर्त्ता' इति क.। 'खजति खानीति खजाकः पक्षी आयुधाकी बधकी च। कर्त्ता' इति ख.।

४. केचित् 'बलाकादयश्च' इति पठन्ति।

५. 'निरुद्धलोपाः' इति क.।

६. 'मनु अवबोधने' इति ग. घ.।

७. 'इति' नास्ति ख.। 'पवतीति' इति क.। धातुपाठेषु नायं धातुर्भ्वादावुपलभ्यते।

८. अत्राह श्वेतवनवासी—'पवाकप्रभृतीनि रूपाणि केचित् बलाकादिषु पठन्ति' इति [पृ० १४२]।

९. 'वन्यपीत संघातः' इति ग. घ.। 'वेत्यकातः' इति ख.।

१०. 'भौ'० नास्ति ग. घ.।

११. 'करेणुबन्धनम्' नास्ति क.।

एभ्यो धातुभ्य आक प्रत्ययो भवति निच्च । शल गतौ भौ०[1] । शलति शल्यते वा **शलाका**—लोहवर्तिका कर्त्ता कर्म च । पट गतौ भौ०[1] । पटति पट्यते वा **पटाका**—पक्षिजातिः । कर्त्ता कर्म च । पत्लृ गतौ भौ० । पतति पत्यते वा वायुनेति **पताका**—प्रांशुयष्टयग्ररचितः[2] प्रलम्बः पटः । कर्त्ता कर्म च ॥

## पिनाकादयश्च ॥३४॥ ( पं० उ० ४।१६ )

पिनाकादयः शब्दा निपात्यन्ते आक[3]प्रत्यये निरूढाः[4] । पिष्लृ संचूर्णने रौ० । अस्य नकारोऽन्त्यस्य निपात्यतेऽगुणत्वं च । पिनष्टयनेन शत्रून्[5] इति **पिनाकः**—रौद्रं धनुः शूलं वा । करणम् । तड आघाते भौ० । तड्यते तद् गवादिभिरिति[6] **तडाकम्**[7]—पुष्करिणी । कर्म । भदि कल्याणे सुखे च भौ०[8] । अस्य रुगागमो निपात्यते नकार[9]लोपश्च । भन्दत इति **भद्राकः**—अकुटिलः । कर्त्ता । भा दीप्तौ आ० नञ्पूर्वः । न भातीति **नभाकः**[10]—तमः कर्त्ता । पिष्लृ

---

१. 'भौ०' नास्ति ग. घ. ।

२. 'प्रांशुपश्वग्ररचितः' इति ग. घ. । 'प्राग् यष्टयाग्ररचितः' इति ख. ।

३. 'आकन्' इति ग. घ. । अत्र सूत्रे 'निद्' ग्रहणमनुवर्तते । तदाह श्वेतवनवासी —'निदित्येव ······ अत एव नित्त्वाद् बलाकादिभ्यः पृथक् निपातिताः, नित्त्वमुपजीवितुम्' इति [ पृ० १४२ ] ।

उज्ज्वलदत्तस्तु 'शलिपटिपतिभ्यो नित्' [ दश० उ० ३।३३ ] इति सूत्रमपठित्वैव 'पिनाकादयश्च' इति पठति । तत्र स्वराभेदे पृथक्पाठस्य प्रयोजनं चिन्त्यम् । यद्वा ग्रन्थपातः सञ्जातः स्यात् ।

४. 'निरुद्धलोपाः' इति क. । ५. 'शत्रुम्' इति क. । 'शक्रम्' इति ग. घ. ।

६. 'चौ० । तड्यते तस्माद् गवादिभिरिति' इति क. ।

७. अत्राह नारायणः—

"तड आघात इत्यस्मात् तडाकोऽत्र वृत्तिकृत् ।
तडागं मन्यते भोजः तडेरागजितीरयन् ॥
टीका सर्वस्वकारस्तु तटाकमपि रक्षितुम् ।
आके कृते तडेरेव बाहुल्यात्टत्वमिच्छति ॥"

इति [ पृ० ८७ ] ।

८. 'सुखे च भौ०' इति नास्ति ख. । ९. 'पंचम०' इति क. ।

१०. 'नभाकम्' इति क. ।

संचूर्णने[1] रौ०[2]। अस्य युगागमो निपात्यते णकारोऽन्त्यस्यागुणत्वं च। पिष्यत इति **पिण्याकः**—तिलपिष्टपीडितः कल्कः। कर्म। कु शब्दे अा०, कुङ् अव्यक्ते शब्दे भौ०। कौति कवत कूयते वा **कवाकः**—पक्षी। कर्त्ता कर्म च। श्यैङ् गतौ भौ०। अस्य मुमागमो निपात्यते[3]। श्यायत इति **श्यामाकः**—जघन्यो व्रीहिः। कर्म।'

## कषिदूषि[4]भ्यामीकन् ॥३५॥ ( पं० उ० ४।१७ )

आभ्यां धातुभ्यामीकन् प्रत्ययो भवति। कष हिंसार्थः भौ०। कषन्त्यनयेति **कषीका**—खनित्रम्। करणम्। दुष वैकृत्ये[5] चौ० णिजन्तः[6]। दूषयति लोचनमिति[7] **दूषीका**[8]—अक्षिमलसंघातः। कर्त्ता॥

## [9]चङ्कणेः किङ्कण[10]श्च[11] ॥३६॥ ( पं० उ० ४।१८ )

चङ्कणेर्धातोरीकन् प्रत्ययो भवति किङ्कण[10] इत्ययञ्चादेशः। कण शब्दे भौ०, चङ्कण इति यङ्लुगन्तः। पुनः पुनः भृशं वा कणतीति **किङ्कणीका**[12]—सूक्ष्मघण्टिका[13]। कर्त्ता॥

---

१. 'संकर्षणे' इति ग. घ.। २. 'दै०' इति ख.। नास्ति ग. घ.।

३. 'अस्य ···· त्यते' इति नास्ति ख. ग. घ.।

४. 'दुषि' इति क. ख. ग. घ. च. छ ज.।

५. 'वैकल्ये' इति ख.। ६. 'णिजन्त' इति नास्ति ख. ग. घ.।

७. 'लोचनानीति' इति क.।

८. **'माधवेन तु इकन्नुक्त्वा दूषिका साधिता। तस्योत्तरत्रानुवृत्तिर्न विद्मः'** इति नारायणः (पृ० ८७)।

**'बाहुलकादुषेर्ण्यन्तादीकन्। तस्मिन् 'दोषो णौ' (अ० ६।४।९०) इत्यूत्वम्'** इति श्वेतवनवासी (पृ० १४२)।

९. उज्ज्वलदत्तादयः केचन **पञ्चपादीवृत्तिकारा इतः** पूर्वम् **'अनिदृषिभ्यां किच्च'** इति पठन्ति। तद्दशपाद्याम् **'ऋजेश्च'** (दश० उ० ३।४०) इत्यतोऽनन्तरं पठ्यते। नारायणश्वेतवनवासिनौ त्वितः पूर्वं पठतः। १०. 'किङ्किण' इति क.।

११. 'किङ्किणच्' इति च. ज.। केचन वृत्तिकाराः **'कङ्कण'** आदेशं विधाय **'कङ्कणीका'** इत्युदाहरन्ति।

१२. **'किङ्किणी तु पृषोदरादित्वात् वार्धूषिवत्'** इति नारायणः (पृ० ८७)। **'किङ्किणीका'** इति क.। १३. 'सूक्ष्मघण्टोलिका' इति क.।

## शॄपॄवृञां द्वे रुक् चाभ्यासस्य ॥३७॥ ( पं० उ० ४।१९ )

एभ्यो धातुभ्य ईकन् प्रत्ययो भवति द्वे चषां रूपे भवतो रुगागमश्चाभ्यासस्य। शॄ हिंसायाम् क्र्यै०। शृणाति रक्षांसीति[1] **शर्शरीका**—मङ्गल्याभरणम्। कर्त्ता। पॄ पालनपूरणयोः क्र्यै०। पृणाति पूर्यते वा **पर्परीका**—सूर्यः, अग्निः[2] जलाशयश्च[3]। कर्त्ता कर्म च। वृञ् सम्भक्तौ क्र्यै०। वृणीते व्रियन्ते वा **वर्वरीका**[4]—संवरणम्। कर्त्ता कर्म च[5]॥

## फर्फरीकादयश्च ॥३८॥ ( पं० उ० ४।२० )

फर्फरीकादयः शब्दा निपात्यन्ते ईकन् प्रत्यये निरूढाः[6]। द्वे रुक् चाभ्यासस्येत्यनुवर्तते[7]। स्फुर संचलने तौ०। अस्य[8] अभ्यासस्य फादेशोपधात्वसलोपा निपात्यन्ते[9]। स्फुरतीति **फर्फरीका**—किसलयम्। कर्त्ता। दृ भये क्र्यै०। अस्य द्वे रुक् चाभ्यासस्य, दीर्यत इति **दर्दरीकम्**—वादित्रम्। कर्म। जॄष् वयोहानौ दै०। अस्य द्वे रुक् चाभ्यासस्य तृतीयस्य चतुर्थभावो निपात्यते। जीर्यत इति **झर्झरीकम्** शरीरम्। कर्त्ता। तड आघाते भ्वा०। अत्राभ्यासस्येत्व[10]नुमागमावुपधेत्वं च निपात्यते। ताडयत इति **तिन्तिडीकम्**[11]—पक्षी, शाकजातिश्च। कर्म॥

---

१. 'रक्षांसीति' नास्ति क.। २. 'अग्निः' नास्ति क.।

३. 'सूर्य····· यश्च' इत्यस्य स्थाने 'संचरणम्' इति ख.।

४. 'वृङ् संविभक्तौ उदात्तः। वृणातीति व्रियते वा वर्वरीकम्' इति क.।

५. 'वृङ्·····कर्म च' इत्यस्य स्थाने 'वृणुते वर्वरीको युवा' इत्येव पाठः ख.।

६. 'निरुद्धाः' इति क,।

७, अयं पाठः क.पुस्तके 'स्फुर····· तौ०' इत्यनन्तरमस्ति।

८. 'स्फुर·····अस्य' अयं पाठो नास्ति ख, ग. घ.।

९. अत्राह प्रौढमनोरमाकारः—'फर्फरादेश इत्युज्ज्वलदत्त ( अन्ये पञ्चपादीवृत्तिकारा अप्येवमाहुः ) रीत्योक्तम्, वस्तुतस्तु धातोर्द्वित्वमुकारस्याकारः सलोपो रुक् चाभ्यासस्येति दशपाद्यामुक्तमेव न्याय्यम्। चरेर्नुम् च (गणसूत्रम्) इत्युत्तरग्रन्थानुरोधेन द्विरुक् च इत्याद्यनुवृत्तेर्न्याय्यत्वात्' (मनो० पृ० ७८७)।

तत्त्वबोधिनीकारोऽप्येवम् (पृ० ५४८)।

१०. 'तृतीय ·····भ्यासस्य' इति नास्ति ग. व.।

११ अत्राहोज्ज्वलदत्तः—'··· एवं तिन्तिडाशब्दोऽमरे न संगच्छते। उपदंशस्तृतीयायाम् (पा० ३।४।४७) इति तिन्तिड्योदशं भुङ्क्ते इति भाष्यप्रयोगात्।

ईषेः किद्ध्रस्वश्च ॥३९॥ ( पं० उ० ४।२१ )

ईषेर्धातोरीकन् प्रत्ययो भवति किच्च ह्रस्वश्च धातोः[1]। ईष उञ्छे भ्वा०। ईषतीति इषीका—दर्भशलाका[2] कर्त्ता ॥

ऋजेश्च ॥४०॥ ( पं० उ० ४।२२ )

ऋजेर्धातोरीकन् प्रत्ययो भवति किच्च। ऋज गत्यादिषु भ्वा०। अर्जते ऋज्यते[3] वा ऋजीकम्—उपकृतम्। कर्त्ता कर्म[4] च ॥

अनिदृशिभ्याञ्च ॥४१॥ ( पं० उ० ४।२३ )

आभ्यां धातुभ्यामीकन् प्रत्ययो भवति किच्च। अन प्राणने आ०। अन्यते तदिति अनीकम्—सेना। कर्म। दृशिर् प्रेक्षणे भ्वा०। पश्यन्ति तां विस्मितमनस[5] इति दृषीका—पुष्पवती। कर्म ॥

सर्त्तेर्नुक्[6] च ॥४२॥ ( पं० उ० ४।२४ )

सर्त्तेर्धातोरीकन् प्रत्ययो भवति किच्च नुमागमश्च। सृ गतौ [भ्वा०]। सरतीति[7] सृणीकः—वायुः। कर्त्ता ॥

अलीकादयश्च ॥४३॥ (पं० उ० ४।२५)

अलीकादयः शब्दा निपात्यन्ते ईकन् प्रत्यये निरूढाः[8]। अत सातत्यगमने भ्वा०। अस्य लकारोऽन्त्यस्य निपात्यते। अतन्त्यनेनाधोगतिमिति अलीकम्—असत्यम्। [करणम्]। वह प्रापणे [भ्वा०]। अस्यापि लकारोऽन्तादेशो[9] निपात्यते युडागमश्चोपधायाः[10]। वहन्ति हृदयेनेति व्यलीकम्[11]—मनसोविकारः[12]। करणम्[13] ॥[1]

---

तिन्तिडीत्यपि शब्दान्तरमिति गोवर्धनः' इति (पृ० १४७)। उज्ज्वलदत्तेनोद्धृतो भाष्यपाठोऽस्माभिर्न क्वचिदुपलब्धः।

१. 'धातोः' नास्ति क.। २. 'दन्तदर्भशलाका' इति क.।
३. 'अर्जनम्' इति ग. घ. ४. 'भावः' इति ग. घ.।
५. 'विस्मिताः' इति ख. ग. घ.। ६. 'नुम्' इति ङ. छ.।
७. 'धावतीति' क. ख.। ८. 'निरुद्धाः' इति क.।
९. 'अस्यान्त्यस्य लकारादेशो' इति क.। १०. 'यश्चोप०' इति क.।
११. 'असत्यं···व्यलीकम्' इति नास्ति ख.। १२. 'मनसो विघातः' इति क.।
१३. नास्ति ग. घ.। 'कर्त्ता' इति क.।

## मृकणिभ्यामूकोकणौ ॥४४॥ ( पं० उ० ४।४१ )

आभ्यां धातुभ्यामूक-ऊकण[1] इत्येतौ प्रत्ययौ भवतो यथासंख्यम्। मृङ् प्राणत्यागे तौ०। म्रियत इति **मरूकः**—प्राणी। कर्त्ता। कण निमीलने चौ०। कणयति कण्यते वा **काणूकः**[2]—पक्षेत्तमो वा [?]। कर्ता कर्म च॥

## वलूकः[3] ॥४५॥ ( पं० उ० ४।४२ )

**वलूक** इत्ययं[4] शब्दो निपात्यते ऊकप्रत्ययान्तः[5]। वल प्राणने भौ०। वलति वल्यते वा **वलूकम्**[5]—उत्पलद्रव्यम्[6]। कर्त्ता कर्म च॥

## उलूकादयश्च ॥४६॥ ( पं० उ० ४।४३ )

उलूकादयः शब्दा ऊकप्रत्ययान्ता निपात्यन्ते[7]। लोकृ दर्शने चौ०[8] उत्पूर्वः। अस्य ककरौकारतकारलोपा निपात्यन्ते। उत्क्रम्य दृष्टिविषयमा[9]लोकयतीति **उलूकः**[10]—कौशिकः। कर्त्ता। भल्ल[11] परिभाषणे भौ०। भल्लत इति **भल्लूकः**[12]—**ऋक्षः**[13]। कर्त्ता॥

## शलिमण्डिभ्यामूकण् ॥४७॥ ( पं० उ० ४।४४ )

आभ्यां धातुभ्यामूकण् प्रत्ययो भवति। शल गतौ भौ०। शलति शल्यते वा **शालूकम्**—जलजम्। कर्त्ता कर्म च। मडि भूषायां प्रकृत्यन्तरं ण्यन्तो

---

१. 'ऊकण्' इति क.।

२. 'कणूकः' इति क.। 'पक्षेत्तमो वा' इति नास्ति ख. ग. घ.।

३. ग.घ.पुस्तकयोः सर्वत्र 'व्यलूक' पदमस्ति। सूत्रमिदं ङ.पुस्तके नास्ति। 'वलूकम्' इति क.।

४. नास्ति क.।

५. अत्राह नारायणः—'वलूक इति क्वचिन्निपात्यते। तदुत्पलनाम' इति (पृ० ६१)।

६. 'जलद्रव्यम्' इति क.।

७. 'प्रत्यये निरुद्धाः' इति क.।

८. 'भौ०' इति क.।

९. 'वियद्दृष्टिमा०' इति क.।

१०. अत्राहोज्ज्वलदत्तः—'सर्वस्वे तु ऊर्ध्वौ कर्णावस्येति पृषोदरादित्वादूलूक इत्यपि साधितम्' इति (पृ० १५३)।

११. 'भल भल्ल' इति क.। ग.घ.योस्तु सर्वत्रैको लकारः।

१२. 'पृषोदरादित्वाद् भल्लुक इत्यपि। तथा भलतेरुको वृद्धिश्च धातोः भालूक इति शब्दार्णवः' इति उज्ज्वलदत्तः (पृ० १५३)।

१३. 'वानरः' इति क.।

वा । मण्डति मण्डते मण्डयति वा क्षितिमिति **मण्डूकः**—भेकः । [कर्त्ता][1] ॥

## कृञादिभ्यः संज्ञायां वुन् ॥४८॥

कृञादिभ्यो धातुभ्यः संज्ञायां विषये वुन् प्रत्ययो भवति । कृञ् करणे भौ०[2] । क्रियतेऽस्मिन्नुदकमिति [3]**करकः**—कमण्डलु । अधिकरणम् । सृ गतौ भौ० । स्रियतेऽसाविति **सरकः**—पानम्[4] । चर गत्यर्थः भौ० । चरति तानिति[5] **चरकः**—भिषगाचार्यः । कर्त्ता । दृ विदारणे भौ० क्र्या०[6] । दरति दृणाति वा **दरकः**—भीरुः कर्त्ता ॥

## ऋजः कीकन् ॥४९॥ ( पं० उ० ५।५८ )

अस्माद्धातोः कीकन् प्रत्ययो भवति । ऋजो भृजो भर्जने [ भौ० ] । अर्जत[7] इति **ऋजीकम्**—वलं स्थानं च । कर्त्ता[8] ॥

## अर्भकपृथुकपाका वयसि ॥५०॥ (पं० उ० ५।५९)

एते शब्दा अक उक[9] [क] प्रत्ययान्ता निपात्यन्ते[10] वयस्यर्थे निरुद्धाः[11] । ऋ गतौ भौ० । अस्य[12] अकप्रत्ययो भुगागमश्च निपात्यते । ऋच्छत्यर्यते वा **अर्भकः** । कर्त्ता कर्म च । प्रथ प्रख्याने भौ० । अस्य उक[13]प्रत्ययो निपात्यते सम्प्रसारणमगुणत्वं च । प्रथत इति **पृथुकः** । कर्त्ता । डुपचष् पाके भौ० । अस्य कप्रत्ययो निपात्यते उपधाया दीर्घश्च लोपश्च[14] । पचति पच्यते वा

---

१. इतोऽग्रे ख.पुस्तके— **मृडेः कीकन् कङ्कणौ । मृडेः कीकन् कङ्कणौ प्रत्ययौ भवतः । मृड स्तुतौ । मृडीकः मृडङ्कणः**' इत्यधिकः पाठः । स चापपाठः । दशमे प्रकीर्णपादे वक्ष्यमाणत्वात् । युक्तं च तत्रैव, कान्तणान्तशब्दयोः समुच्चितत्वात् ।

२. नास्ति ख. ग. घ. ।

३. '**करका वृष्टिपाषाणे । नेत्वं क्षिपकादि[अ० ७।३।४५ वा०]पाठात्**' इत्युज्ज्वलदत्तः (पृ० २१२) । ४. 'पानकम् कर्म' इति क. ।

५. 'वाग्व्रतानीति' इति क. । ६. 'भौ० दृ भये क्र्या०' इति क. ।

७. 'अर्ज्यंत' इति क. । ८. 'कर्म' इति क. ।

९. 'उकन्' इति ग. घ. । १०. 'एते शब्दा निपात्यन्ते यथेष्टप्रत्यये' इति क. ।

११. नास्ति ख. ग. घ. । 'वयसीत्यस्मिन्नर्थे' इति ग. घ. ।

१२. 'अस्मात्' इति ख. । १३. 'डकन्' इति ग. घ. ।

१४. 'अस्याकारप्रत्ययो निपात्यते उपधादीर्घः कश्चान्त्यस्य' इति क. ।

पाकः[1]। कर्त्ता कर्म च। सर्वमेते[2] बालाः प्रकीर्तिताः॥

॥ ककारः[3]॥

## डस्[4] खनेर्मुट्[5] चोदात्तः ॥५१॥ (पं० उ० ५।१८)

खनेर्धातोर्डस्[4] प्रत्ययो भवति मुट्[5] चागमः स च उदात्तः[6]। खनु अवदारणे भ्वौ०। खन्यते तत् सुखार्थिभिरिति[7] मुखम्—वक्त्रम्। कर्म[8]॥

## मुहेः खो[9] मूर्च ॥५२॥ (पं० उ० ५।२१)

मुहेर्धातोः खः प्रत्ययो भवति मूरित्ययं चादेशः। मुह वैचित्त्ये दै०। मुह्यतीति मूर्खः[10]—अज्ञो जनः। कर्त्ता॥

## नहेर्हलोपश्च ॥५३॥ (पं० उ० ५।२२)

नहेः खप्रत्ययो भवति हलोपश्च। णह बन्धने दै०। नह्यतीति नखः[11]—कररुहः, द्रव्यं च। कर्त्ता॥

## महेश्च ॥५४॥ (पं० उ० ५।२३)

---

१. अत्राह श्वेतवनवासी—'इण्भीकापाशल्यति-(दश० उ० ३।२१) इति कन्-प्रत्ययान्तः पाकशब्दो व्युत्पादितः। शक्यं पाकग्रहणमनर्थकम्' इति (पृ० २२८)।

२. 'एवम्' इति ग. घ.।

३. 'कान्ताः' इति ग. घ.। 'इति कान्ताः' इति ख.।

४. 'डन्' इति ख. ग. घ. ज.। 'डच्' इति घ.।

५. मुट उकारस्यानानुनासिकत्वादित् संज्ञा न भवति। 'अर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते' इति परिभाषया खनेरुदात्तवचने मुट एवोदात्तत्वं भवति, न खनतेरकारस्य। तद्धि प्रत्ययस्य डित्त्वाल्लुप्यते। श्वेतवनवासी त्वन्यथा व्याचष्टे। तथाहि—'मुट उदात्तश्च भवति। उदात्तवचनसामर्थ्यात् मुडागमे उकारः श्रूयते। अन्यथा अनच्त्वादुदात्तविधानमनुचितम्, तस्याजधर्मत्वात् इति (पृ० २१६)।

६. 'मुट् चागमः खनति उदात्तो भवति' इति क.।

७. 'सुभरार्थमिति' क.। 'सुरमिति' इति ग. घ.।

८. 'कर्त्ता कर्म च' इति क.। ९ 'खन्' इति च. छ. ज.।

१०. 'ऋतेरीयङ्' (अ० ३।१।२९) इति वचनं ज्ञापकम्, धातोर्विहितानामायन्नादयो न भवन्तीति (तु० महाभाष्ये ७।१।२) अन्ये तु बाहुलकान्नेति वदन्ति।

११. 'नभ्राण्नपात्' (अ०६।३।७५)इत्यादिना सिद्धे प्रपञ्चार्थं पुनर्व्युत्पादनम्'इति श्वेतवनवासी (तुलना० पृ० २१७)।

महेः खप्रत्ययो भवति हलोपश्च । मह पूजायाम् चौ०[1] । मह्यत इति मखः—अध्वरः । कर्म ॥

## शीङो निद्ध्रस्वश्च[2] ॥५५॥ ( पं० उ० ५।२४ )

शीङो धातोः[3] खप्रत्ययो भवति निच्च ह्रस्वश्च धातोः[4] । शीङ् स्वप्ने आ० । शेत इति शिखा[5]—केशबन्धः । कर्त्ता ॥

## वृक्षावयव आ च[6] ॥५६॥ ( पं० उ० ५।२५ )

वृक्षावयवे गम्यमाने शीङो धातोः खप्रत्ययो भवति निच्च, आकारोऽन्तादेशश्च[7] । शीङ् स्वप्ने आ०[8] । शेरतेऽस्यां पक्षिण इति शाखा[9]—वृक्षावयवः । अधिकरणम् ॥

## माङ उखा[10] ॥५७॥ (पं० उ० ५।२६[11] )

---

१. 'चौ०' इति नास्ति क. ।

२. पञ्चपाद्यां 'शीङः खो ह्रस्वश्च' इति पाठः । तत्राह नागेशभट्टः—"इदं दशपाद्यामुक्तम्, पञ्चपाद्यां तु 'शीङः खो ह्रस्वश्च' इति पठितम्" (ल० श० पृ० ९८३) इति । शिखाशब्दस्याद्युदात्तत्वदर्शनाद्दशपादीपाठ एव ज्यायान् । नारायणश्वेतवनवासिनौ तु दशपादीपाठमेव पेठतुः । सूत्रमिदं सिद्धान्तकौमुद्यां (पृ० ६२४) शब्दकौस्तुभे (भा० २, पृ० २२) टीकासर्वस्वे (भा० १, पृ० ४२) चोद्धृतम् ।

३. 'धातोः' नास्ति क. । ४. 'ह्रस्वश्च भवति' इति क. ।

५. 'ह्रस्वविधानसामर्थ्याद् गुणो न भवतीति' श्वेतवनवासी (पृ० २१७) ।

६. शाखाशब्दनिर्वचनप्रसङ्गे देवराज इदं सूत्रमुद्धृतवान् (पृ० १९८) । तत्र लेखकप्रमादात् 'यवाच्च' इति पाठः । पञ्चपाद्यां 'शाखा' इत्येव सूत्रम् । तदपि क्वचिदेव ।

७. 'अन्त्यस्याकारश्च' इति क. । 'आकारश्चान्तादेशः' इति ग. घ. ।

८. 'शीङ् स्वप्ने आ०' नास्ति ख. ग. घ. ।

९. अयं शब्दो निघण्टावङ्गुलिनामसु पठ्यते । तत्राह देवराजः—'बाहुलकाद् हस्तावयवेऽपि भवति' इति (पृ० १९८) । १०. सूत्रमिदं नास्ति ज. ।

११. अत्र श्वेतवनवासिवृत्तौ सूत्रपाठस्य त्रुटितत्वात् सम्पादकेनान्यथैव पाठः प्रकल्पितः । वस्तुतस्तु तत्रापि दशपादीवदेव सूत्रपाठः । नारायणकृतवृत्तौ तु सम्यङ् मुद्रितः ।

माङो धातोरुखाशब्दो निपात्यते । माङ् माने शब्दे च जौ० । मीयतेऽसाविति **उखा**[1]—ऊर्ध्वक्रिया च । कर्म ॥

## मीनातेरूखः ॥५८॥ ( पं० उ० ५।२५ उज्ज्व० )

मीनातेर्धातोरूखप्रत्ययो भवति । मीञ् हिंसायां क्रै० । मिनातीति **मयूखः**—किरणः । कर्त्ता ॥

॥ खकारः ॥

## पतेरङ्गच् पक्षिणि ॥५९॥ ( पं० उ० १।११९ )

पतेर्धातोरङ्गच् प्रत्ययो भवति पक्षिण्यभिधेये[2] । पत्लृ गतौ भौ० । पतत्यत्यर्थमिति **पतङ्गः**—पक्षी, आदित्यश्च[3] । कर्त्ता ॥

## त्रादिभ्यश्च ॥६०॥ ( पं० उ० १।११९ उज्ज्व० )

तॄ इत्येवमादिभ्यो धातुभ्योऽङ्गच् प्रत्ययो भवति । आदिशब्दः प्रकारे बोद्धव्यः[4] । तॄ प्लवनतरणयोः भौ० । तरन्त्यनेनेति **तरङ्गः**—ऊर्मिः । करणम् । एवमन्येऽपि द्रष्टव्याः[5] ॥

## विडादिभ्यः कित् ॥६१॥ ( पं० उ० १।१२० उज्ज्व० )

विडादिभ्यो धातुभ्योऽङ्गच् प्रत्ययो भवति किच्च । विड इति सौत्रो धातुः । वेडयत इति **विडङ्गः**—द्रव्यजातिः । कर्त्ता । एवमन्येऽपि[6] ॥

## गन् गम्यदेः[7] ॥६२॥ ( पं० उ० १।११३ )

---

१. अत्राह श्वेतवनवासी—'उख णख इतीगुपधलक्षणे के टापि उखा सिद्धम्' इति (पृ० २१८) ।

२. अत्र पक्षिग्रहणमनर्थकं सूर्येऽपि दर्शनात् । अपि चोणादिष्वर्थनिर्देशस्यातीव प्रयोजनं नास्तीत्युक्तम्, रूढित एवार्थनिश्चयाद्' इत्याह श्वेतवनवासी (पृ० ४५) । नारायणस्तु 'पक्षिणीत्यतन्त्रम्, सूर्यादावपि स्यात्' इत्याह (पृ० २५) ।

३. 'आदित्यश्च' नास्ति क. ।

४. 'आकृतिगणोऽयं' इत्युज्ज्वलदत्त (पृ० ४४) । तत्त्वबोधिनीकारोऽप्येवम् (पृ० ५२५) । 'आदि····· बोद्धव्यः' इति नास्ति क. ।

५. 'एवमन्येऽपि द्रष्टव्याः' इति नास्ति क. । ६. नास्ति क. ।

७. 'गम्यद्योः' इति ग. घ. ।

गम अद[1] इत्येताभ्यां धातुभ्यां गन् प्रत्ययो भवति । गम्लृ गतौ भ्वा० । गम्यतेऽसौ पुण्यार्थिभिरिति **गङ्गा**—जाह्नवी । कर्म । अद भक्षणे अ० । अत्तीति **अद्गः**—समुद्रः, अग्निश्च । कर्त्ता ।

प्राक्प्रत्ययनिर्देशो वर्गादीनां प्रसिद्ध्यर्थः । वृञ् वरणे सौ० । वृणोतीति वर्गः—संघातः । कर्त्ता[2] ॥

## भृञः किन्नुट् च ॥६३॥ ( पं० उ० १।११४ )

भृञो धातोर्गन् प्रत्ययो भवति किच्च नुट् चागमः[3] । भृञ् भरणे भ्वा०, डुभृञ् धारणपोषणयोः जु०[4] । भरति बिभर्त्ति[5] वा **भृङ्गः**—पक्षी, भ्रमरः [च] । कर्त्ता ॥

## शृणातेर्ह्रस्वश्च ॥६४॥ ( पं० उ० १।११५ )

शृणातेर्धातोर्गन् प्रत्ययो भवति किच्च नुट् च ह्रस्वश्च[6] । शॄ हिंसायां क्र्या० । शृणाति शीर्यते वा **शृङ्गम्**—विषाणं, गिरिप्रान्तश्च[7] । कर्त्ता कर्म च ॥

## गण् शकुनौ[8] ॥६५॥ (पं० उ० १।११६)

शृणातेर्धातोर्गण् प्रत्ययो भवति शकुनौ गम्यमाने नुट् चागमः[9] । शॄ हिंसायां क्र्या० । शृणातीति **शाङ्गः**—शकुनिः, धर्मपालः, ऋषिसुतः[10] । कर्त्ता ॥

## मुदिग्रोर्गग्गौ ॥६६॥ (पं० उ० १।११७)

मुद गॄ इत्येताभ्यां[11] धातुभ्यां यथासङ्ख्यं गक् ग इत्येतौ प्रत्ययौ भवतः ।

---

१. 'गमि अदि' इति ख. । २. 'प्राक्……कर्त्ता' इति नास्ति क. ।
३. 'आगमः' इति नास्ति ख. । 'किन्नुट् च' इति ग. घ. ।
४. पूर्वापरयोर्व्यस्तः पाठः क.पुस्तके । 'भ्वा०……जु०' इति नास्ति ग. घ. ।
५. अत्रापि व्यस्तः पाठः क.पुस्तके ।
६. 'ह्रस्वश्च किच्च नश्चागमः' इति क. । 'किच्च नुडागमश्च' इति ग. घ. ।
७. 'विषाणगिरिः प्राणश्च' इति ग. घ. । ८. सूत्रं नास्ति ज. ।
९. 'नुट् चागमः शकुनौ गम्यमाने' इति क. ।
१०. 'नट्पालसुतः' इति ग. घ. । 'मृडपालसुतः' इति ख. ।
११. 'मुद गॄ इति' इति नास्ति ख. ग. घ. ।

इदमेव गग्ग्रहणं[1] ज्ञापकं पूर्वसूत्रे गकारस्येत्संज्ञाप्रतिषेधस्य[2]। मुद हर्षे चौ०। मोदयन्त्यनेऽनेति[3] **मुद्गः**—सस्यजातिः। करणम्। गॄ शब्दे तौ० क्र्य०[4]। गिरति गृणाति गीर्यते वा **गर्गः**—ऋषिः। कर्त्ता कर्म च। बाहुलकाद् गकारस्येत्संज्ञा नास्ति[5]॥

## दहेर्लोपो[6] दश्च नः ॥६७॥ (पं० उ० ५।६१ उज्ज्व०)

दहेर्धातोर्गप्रत्ययो भवति ह्लोपश्च दकारस्य च नकारः[7]। दह भस्मीकरणे भौ०। दह्यतेऽसावग्न्यनिलै[8]रिति **नगः**—वृक्षः, पर्वतश्च। कर्म॥

## ना च ॥६८॥

दहेर्धातोर्गप्रत्ययो भवति [ह्लो]पश्च, दकारस्य च नकारादेशः। दह्यत इति **नागः**[9]—गजः, सर्पो वा[10]। [कर्म]॥

## छापूखडिभ्यो गक् ॥६९॥ (पं० उ० ५।६९)

एभ्यो धातुभ्यो गक् प्रत्ययो भवति। छो छेदने दै०[11]। छ्यतीति **छागः**—अजः। कर्त्ता। पूञ् पवने भौ०[11] [क्र्य०]। पवते पूयते वा **पूगः**—संघातः। कर्त्ता कर्म च। खडि भेदे चौ०। खण्डयतीति **खड्गः**[12]—निस्त्रिंशः। कर्त्ता॥

॥ गकारः ॥

---

१. 'कित्करणम्' इति ख.।

२. 'संज्ञाप्रतिषेधः' इति ख.। 'इदमेव ·····षेधस्य' इति नास्ति क.।

३. 'मोदयतीति' इति ख. ग. घ.।

४. 'गॄ निगरणे भौ० गॄ शब्दे क्र्य०' इति क.पाठः।

५. 'बाहुलकान्न गकारस्येत्संज्ञा' इति ग. घ.। नास्त्ययं पाठः क.पुस्तके।

६. 'दहेर्हलोपो' इति ख. च. छ. ज.। 'दहेर्गो लोपो' इति युक्तः पाठः स्यात्। अन्यथा 'ग'प्रत्ययानुवृत्तिः कुतः स्यात्।

७. 'लोपश्च हकारस्य दकारस्य च नकारादेशः' इति क.।

८. '०तेऽसौ दावाग्न्यनिलै०' इति क.।

९. अत्राहोज्ज्वलदत्तः—'बाहुलकान्नकारस्य नाकारोऽपि। नागः सर्पविशेष इति पुरुषोत्तमदेवः' इति (पृ० २१७)।

१०. सवृत्ति सूत्रं नास्ति क. ग. घ.।

११. नास्ति क. ग. घ.।

१२. बाहुलकादत्र नकारलोपो बोध्यः।

## जनेः को जङ्घ च ॥७०॥ (पं० उ० ५।३३)

जनेर्धातोः कप्रत्ययो भवति जङ्घ इत्ययमादेशश्च[1]। जनी प्रादुर्भावे दै०, जन जनने जौ०। जायन्तेऽस्यां[2] [जजनति वा] अतिशयेन रोमाणीति[3] जङ्घा—शरीराङ्गम्। अधिकरणम्॥

## दृणातेर्घक् च[4] ॥७१॥

दृणातेर्धातोर्घक्प्रत्ययो भवति। दॄ भये[5] क्र्या०। दृणातीति दीर्घः। कर्त्ता[6]॥

॥ घकारः ॥

॥ इति दशपादी-उणादिवृत्तौ तृतीयः पादः ॥

---

१. 'जङ्घादेशः' इति क.। २. 'अस्याम्' नास्ति ग. घ.।
३. 'रोमाण्यस्यामिति' इति ग. घ.। ४. 'च' नास्ति च. छ ज.।
५. साम्प्रतं 'दॄ विदारणे' इत्येवं पाठ उपलभ्यते।
६. क.पुस्तके तु सवृत्ति सूत्रं नोपलभ्यते।

## ॥ अथ चतुर्थः पादः ॥

### स्रु वश्चिक् ॥१॥ ( पं० उ० २।६३ )

स्रु इत्येतस्माद् धातोश्चिक्[1]प्रत्ययो भवति। स्रु गतौ भौ०। स्रवति तस्यां[2] हविरिति स्रुक् अग्निहोत्रभाण्डम्। अधिकरणम्॥

### तनोतेरनश्च वः ॥२॥( पं० उ० २।६४ )

तनोतेर्धातोश्चिक्प्रत्ययो भवति, अकारनकारयोश्च वकारादेशः। तनु विस्तारे ता०। तनोति तन्यते वा त्वक्[3]—चर्म[4]। कर्त्ता कर्म च॥

### कुवश्चट् दीर्घश्च ॥३॥ ( पं० उ० ४।६६ )

कुवो धातोश्चट्प्रत्ययो भवति दीर्घश्च। कु शब्दे आ०, कुङ् अव्यक्ते शब्दे[5] [भौ०]। कौति कवते[6] कूयते वा कूचः—हस्ती। स्त्रियाम्[7]—कूची—चित्रकरणभाण्डम्। कर्त्ता कर्म च॥

### समीणः ॥४॥ ( पं० उ० ४।१०० नारा० )

---

१. अत्र 'इकार उच्चारणार्थः, ककारः कित्कार्यार्थः' इत्युज्ज्वलदत्त(पृ० ८२) श्वेतवनवासिनौ (पृ० ७८)।

२. 'अस्मिन्' इति ख. ग. घ.। श्वेतवनवासी तु 'स्रवत्यस्मात्' इति निर्वक्ति (पृ० ७८)। इदमेव च युक्ततरं प्रतिभाति। अस्मिन् पक्षेऽपादाने प्रत्ययः।

३. अत्राह श्वेतवनवासी—"त्वच संवरणे इत्येतस्मादपि संपदादिक्विपि (अ० ३।३।९४ वा०) त्वक्शब्दः सिद्धचतीति प्रपञ्चार्थं पुनर्व्युत्पादनम्। अस्यां व्युत्पत्ताविष्ट-लिङ्गसिद्धिश्च। वासरूपविधानात्, त्वच्यते संव्रियते अनेनेति 'पुंसि संज्ञायां' (अ० ३।३।११८) घो भवति त्वच इति। अत एव 'सत्याप' (अ० ३।१।२५) इत्यादौ णिच्-सूत्रे 'अकारान्तस्त्वच्शब्दः' इति वृत्तिकारेणोक्तम्" इति (पृ० ७६)।

४. 'अधिकरणम्। तनोते⋯⋯चर्म' इति नास्ति ग. घ.।

५. 'कुङ्⋯⋯शब्दे' इति नास्ति ग. घ.।

६. 'कवते' इति नास्ति ख. ग. घ.। 'कवति' इति क.।

७. 'स्त्रियाम्' इति नास्ति क. ख.।

सम्युपपद इण्णो धातोश्चट्प्रत्ययो भवति दीर्घश्च । इण् गतौ आ० । संयन्ति तस्मिन्निति **समीचः**—संयोगः[1] । अधिकरणम् । संयन्ति तामिति **समीची**—भूमिः, स्त्री च । कर्म ॥

## सिवेष्टेरू च ॥५॥ ( पं० उ० ४।१०० )

सिवेर्धातोश्चट् प्रत्ययो भवति टेरूकारादेशश्च । षिवु तन्तुसन्ताने दै० । सीव्यतीति **सूचः**—पिशुनः । कर्त्ता । सीव्यतेऽनयेति **सूची**—सन्धानकरणी । करणम् ॥

॥ चकारः ॥

## कचेश्छः ॥६॥

कचेर्धातोश्छः प्रत्ययो भवति । कच दीप्तिबन्धनयोः[2] भौ० । कचतेऽनेनेति **कच्छः**—शरीरैकदेशः । करणम् ॥

॥ छकारः ॥

## पारेरजिः ॥७॥ ( पं० उ० १।१२६ )

पारेर्धातोरजिः प्रत्ययो भवति । पॄ पालनपूरणयोः क्र्° ० ण्यन्तः[3] । पारयतीति **पारक्**—सुवर्णं रत्नं वा । कर्त्ता ॥

## पणे[4] रिज्यादेश्च वः ॥८॥ ( पं० उ० २।७१ )

पणे[4]र्धातोरिजिप्रत्ययो भवति धात्वादेश्च वः[5] । पण व्यवहारे स्तुतौ च [ भौ० ] । पणत[6] इति **वणिक्**—वाणिजः । कर्त्ता ॥

## वशेः कित् ॥९॥ ( पं० उ० २।७२ )

वशेर्धातोरिजिप्रत्ययो भवति किच्च । वश कान्तौ आ० । वष्टि उश्य-

---

१. 'संभोगः' इति ख. । 'संन्तोगः' इति ग. घ. ।

२. 'दीप्तिदेवनयोः' इति ग. घ. । ३. 'णिजन्तः' इति ख. ।

४. 'पणायतेः' इति ग. घ. । ५. 'आदेश्च वकारादेशः' इति क. ।

६. 'पणायति' इति ख. । अपपाठोऽयं, पनेः साहचर्यात्स्तुत्यर्थादेवायप्रत्ययो भवति न तु व्यवहारार्थादित्येके । अन्ये तु व्यवहारार्थादप्यायप्रत्ययमाहुः ।

तेऽसौ श्रेयोऽर्थिभिरिति उशिक्—अग्निः[1]। कर्त्ता कर्म च ॥

भृञ उच्च ॥१०॥ (पं० उ० २।७३)

भृञो धातोरिजिप्रत्ययो भवति किच्च[2] उश्चादेशः[3]। डुभृञ् धारणपोषणयोः जौ०, भृञ् भरणे भौ०। बिभर्त्ति भरति वा मर्त्यान्[4] इति भुरिक्—भूमिः, वायुर्वा। कर्त्ता ॥

॥ जकारः ॥

॥ इति दशपादी—उणादिवृत्तौ चतुर्थः पादः ॥

---

१. 'कर्त्ता। वशे······अग्निः' इति नास्ति ग. घ.।
२. 'किच्च' नास्ति क. ग. घ.।
३. 'धात्वादेरुच्च' इति ग.।
४. 'सत्यान्' इति ग. घ.।

# अथ पञ्चमः पादः

## लङ्घेरटिर्नलोपश्च ॥१॥ (पं० उ० १।१२५)

लङ्घेर्धातोरटिप्रत्ययो भवति नकारलोपश्च। लघि गत्यर्थः भौ०। लङ्घत इति **लघट्**—वायुः। कर्त्ता ॥

## शकादिभ्योऽटन् ॥२॥ (पं० उ० ४।८५)

शक इत्येवमादिभ्यो धातुभ्योऽटन् प्रत्ययो भवति। शक्लृ गतौ सौ०। शक्नोति[2] शक्यते वाऽनेन गन्तुमिति **शकटम्**—यानम्। कर्त्ता करणं च। **अव** रक्षणादिषु भौ०। अवति ऊयते[3] वा तदिति **अवटम्**—श्वभ्रं, छत्रं वा[4]। कर्त्ता कर्म च। दिवु क्रीडादिषु दै०। दीव्यतीति **देवटः**—शिल्पी। कर्त्ता। मृक इति सौत्रो धातुः। मर्कतीति **मर्कटः**[5]—वानरः। कर्त्ता। वय समवाये भौ०। वयतीति **वयटः**—रसः। कर्त्ता[6]। चमु अदने भौ०। चमतीति **चमटः**—घस्मरः। कर्त्ता। डुभृञ् धारणपोषणयोः जौ०। बिभर्त्ति भ्रियते वा **भरटः**—भृत्यः। कर्त्ता कर्म च। एवमन्येऽपि[7] ॥

## कृतॄकृपिकम्पिभ्यः[8] कीटन् ॥३॥ (पं० उ० ४।१६०)

---

१. 'शकादिभ्यः' इति ख. ग. घ.।

२. 'शक्तौ। भौ० सौ०। शकते शक्नोति' इति क.।

३. 'अव्यते' इति ख. ग. घ.। ४. 'छत्रं वा' नास्ति क. ग. घ.।

५. 'मृक......मर्कटः' अयं पाठः सूत्रव्याख्यान्ते वर्तते क.पुस्तके।

६. 'वानरः......कर्त्ता' नास्ति क.। ७. नास्ति क.।

८. 'कपिकृपिभ्यः' इति ग. घ.। 'कृतॄकम्पिभ्यः' इति क. च. छ.।

अत्राह भट्टोजिदीक्षितः—"**दशपाद्यां तु 'कृतॄकृपिकपिभ्यः' इति पठित्वा 'कम्पीट' इति चतुर्थमुदाहृतम्**" इति (मनो० ८०२) तत्त्वबोधिनीकारोऽप्येवम् (पृ० ५६०)।

एभ्यो धातुभ्यः कीटन् प्रत्ययो भवति । कॄ विक्षेपे तौ० । कीर्यत इति **किरीटम्**—मुकुटम् । कर्म । तॄ प्लवनतरणयोः भ्वौ० । तरति तीर्यते वा **तिरीटम्**—कूलवृक्षः[1] । कर्त्ता कर्म च । कृपू सामर्थ्ये [भ्वौ०] । कल्पत इति **कृपीटम्**—सामर्थ्यम् । कर्त्ता[2] । कपि चलने भ्वौ० । कम्पत इति **कम्पीटम्**—कम्पा । कर्त्ता[3] ॥

## जनेष्ट[4] लोपश्च ॥४॥ (पं० उ० ५।३२)

जनेर्धातोष्टप्रत्ययो भवति अन्त्यस्य च लोपः[5] । जनी प्रादुर्भावे दै०, जन जनने जौ० । जायन्ते जजन्ति जन्यन्ते वा **जटा**[6]—उद्ग्रन्थिताः केशाः । कर्त्ता कर्म च ॥

॥ टकारः ॥

## कमेरठः ॥५॥ (पं० उ० १।९८)

कमेर्धातोरठप्रत्ययो भवति । कमु कान्तौ भ्वौ०[7] । काम्यतेऽसाविति **कमठः**—भिक्षाभाजनम् । कर्म ॥

## कणेष्ठः ॥६॥ (पं० उ० १।१०६)

---

१. 'तूलवृक्षः' इति ग. घ. ।

२. 'कृपू ····कर्त्ता' नास्ति क. ३. सूत्रपाठवत् पूर्वापरपाठः ग.घ.पुस्तकयोः ।

४. अविभक्तिकोऽयं निर्देशः । पञ्चपाद्यां 'टन्' विधीयते ।

५. 'लोपश्चान्त्यस्य' इति क. ।

६. अत्राह श्वेतवनवासी—"**नकारलोपे कृते अतो लोपो न भवति । आर्धधातुकोपदेशे योऽकारः तस्य लोपविधानात् टकारस्य 'चुटू' (अ० १।३।७) इतीत्संज्ञा न भवति प्रयोजनाभावात्, यादित्वाद् वा । किं यकारो न श्रूयते लुप्तनिर्दिष्टो यकारः । 'जट झट संघाते' अस्मात् पचाद्यचि रूपस्य सिद्धत्वादनर्थकमित्याहुः**" इति (पृ० २२०) ।

उज्ज्वलदत्तस्तु '**बाहुलकान्नेत् संज्ञा**' इत्याह (पृ० २११) ।

७. 'णिङन्तः' इत्यधिकं क. । अपपाठोऽयम् । णिङन्तादठप्रत्यये णिलोपे प्रत्ययलक्षणत्वाद् वृद्धिः स्यात् । तदुक्तं श्वेतवनवासिना—"**कमेर्णिङ् (अ० ३।१।३०) नास्ति यदा, तदा अठप्रत्ययः**" इति (पृ० ४२) ।

कणेर्धातोष्ठप्रत्ययो भवति। कण निमीलने चौ० ण्यन्तः, प्रकृत्यन्तरो वा। कणयति कण्यते वा **कण्ठः**[1]—गलः। कर्त्ता कर्म च॥

बाहुलकादन्यत्रापि ठप्रत्ययो भवति। कुण शब्दोपतापयोः भौ०, कुण गुण चामन्त्रणे चौ०। कुणति कुणयति वा **कुण्ठः**—अपटुविन्द्रियः। कर्त्ता॥

॥ ठकारः॥

## ञमन्ताड्डः ॥७॥ (पं० उ० १।१०७)

'ञम्' इति प्रत्याहारग्रहणं **'ञमङणनम्'** (अ० प्र० सू० ७) इति[2]। ञमन्ताद् धातोर्डप्रत्ययो भवति। ञङयोर्नास्त्युदाहरणम्[3]। दमु उपशमे दै०। दम्यन्तेऽनेनोद्धता जना इति **दण्डः**, दमनं वा **दण्डः**[4]—चतुर्थ उपायः, यष्टिर्वा। करणं भावश्च। मन ज्ञाने [दै०]। मन्यतेऽसौ जनैरिति **मण्डः**[5]—अन्नमुच्यते[6]। कर्म। वन षण सम्भक्तौ भौ०, वनु याचने ता०। वनति वनुते वा **वण्डः**—अल्पशेषः[7], दुश्चर्मा च। कर्त्ता। रण शब्दार्थः भौ०, रमु क्रीडायां भौ०। रण्यतेऽसौ, रमन्तेऽनयेति **रण्डा**—पुनर्भूर्भार्या। कर्म करणं च। बहुलमेव बाहुलकम्[8]—

**"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥"**[9]

इति बाहुलक[10]वचनात् सत्यप्यनुबन्धप्रयोजने डकारस्येत्संज्ञा[11] नास्ति[12],

---

१. बाहुलकात् प्रयोजनाभावाद्वा ठकारस्येत्संज्ञा न भवति 'ठस्येकः' (अ० ७।३।५०) इत्यपि न भवति बाहुलकादेव।

२. 'ञम् अन्ते यस्य धातोः स ञमन्तः, ञमङणनान्त इत्यर्थः ञमकरणेन तान्त इत्यर्थः तस्माद्' इति क.।

३. अत्राहोज्ज्वलदत्तः—**'अत्र ञमि ञकारेण प्रत्याहारग्रहणसामर्थ्यात् ञकारान्तः सौत्रो धातुरुह्यत इति 'ञमङणनम्' इत्यत्र सूत्रे रक्षितः'** इति (पृ० ४२)। पाठोऽयं नास्ति क.।

४. अत्राह यास्कः—**'दण्डो ददातेर्धारयतिकर्मणः। ···दमनादित्यौपमन्यवः'** इति (निरु० २।२)। ५. 'चतुर्थ···मण्डः' इति नास्ति ख.। ६. 'अन्नमित्यर्थः' इति क.।

७. 'अल्परोषः' इति ग. घ.। ८. 'बहुलमेव बाहुलकम्' नास्ति क.।

९. अनुपलब्धमूलमिदम्। द्र०—उणा० कातन्त्र (१।२६, पृ०-७)।

१०. 'बाहुलक' इति नास्ति क.। ११. 'अनुबन्धसंज्ञा' इति ग. घ.।

१२. 'डकारानुबन्धसंज्ञा न भवति' इति क.।

उत्तरत्र कित्करणाद्वा। यद्वक्ष्यति "क्वादिभ्यः कित्" (दश उ० ५।८) इति, तत्र गुणप्रतिषेधार्थं कित्करणमनर्थकं स्यात्। तस्माच्छ्रवणमेव डकारस्य, न लोपः। अन्तग्रहणं नियमार्थम्, अवसाने यत्र ञमिति ततः प्रत्ययविधिः। यत्र मध्ये ञमिति तत्र मा भूत्[1]॥

## क्वादिभ्यः कित्[2] ॥८॥ (पं० उ० १।१०८)

कु आदिर्येषां ते क्वादयः कवर्गादय इत्यर्थः। "**अणुदित् सवर्णस्य चाप्रत्ययः**" (अ० १।१।६९) इति। तत्रेष्टिः—"**अण् उदिच्च सवर्णान् गृह्णातीति**" (म० भा० १।१।६९)। कवर्गादिभ्यो ञमन्तेभ्यो धातुभ्यो डप्रत्ययो भवति किच्च। कुण शब्दोपकरणयोः तौ०। कुणति कुण्यते वा **कुण्डम्**[3]—उपकरणभाण्डम्, जारजातं वा[4]। कर्त्ता कर्म च। कण निमीलने भौ० ण्यन्तः, प्रकृत्यन्तरं वा। कणयति परान् कण्यते वाऽनेन रिपुवर्ग[5] इति **काण्डम्**—शरः, बलसंघातश्च। कर्त्ता करणं च। गम्लृ गतौ भौ०। गच्छत्युपधानमिति **गण्डः**—वक्त्रैकदेशः। कर्त्ता। खनु अवदारणे भौ०। खन्यतेऽसौ **खण्डः**[6]—अपूर्णः[7], इक्षुविकारश्च। कर्म। अण शब्दार्थः भौ०। अण-

---

१. 'अन्तग्रहणं ·········माभूत्' इति नास्ति क.।

२. "अपरे 'क्वादिभ्यः कित्' इति सूत्रमधीयते" इति श्वेतवनवासी [पृ० ४५]।

३. पुल्लिङ्गोऽपि कुण्डशब्दोऽस्ति–'पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः' (पद० भा० १, पृ० ३४८)। अत्राहोज्ज्वलदत्तः—"निदित्यनुवृत्तेः कुण्डादिशब्दा आद्युदात्ता इति 'क्षेपे' [अ० ६।२।१०८] इत्यत्र सूत्रे न्यासः" इति [पृ० ४२]। एतत्पञ्चपाद्यनुसारम्। तत्र हि 'शकिशम्योर्नित्' [पं० उ० १।१०४] इत्यतो निदनुवृत्तिः सम्भवति, परं 'ञमन्ताड्डः' [पं० उ० १।१०७] इत्येवं विधीयमानाः सर्व एव शब्दा आद्युदात्ता इत्यत्र न किञ्चिन्मानम्। कुण्डशब्दस्त्वाद्युदात्तो दृश्यते स तु 'वृषादीनां च' [अ० ६।१।२०३] इत्यादिनाद्युदात्तो भविष्यति। तथा चोक्तम्—"वृषादिराकृतिगणः अविहितमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम्" इति [काशिका पृ० ५३३]। यद्वा "जानपदकुण्ड" [अ० ४।१।४२] इत्यत्राद्युदात्तनिपातनं करिष्यते। अव्युत्पत्तिपक्षे तु 'नब्विषयस्य' [फिट् २।३] इत्यादिनाद्युदात्तत्वं भविष्यति।

४. 'जारजातं वा' नास्ति क.। ५. 'रिपवः' इति क.।

६. 'खन्यतेऽसौ खातो वा' इति ग. घ.। 'खन्यते खनते वा खण्डः' इति क.।

७. 'अपरिपूर्णः' इति क.।

तीति अण्डः—गर्भनिलयः । कर्त्ता[1] ।

बाहुलकादजमन्तादपि डप्रत्ययो भवति[2] । कु शब्दे अ०, कुङ् अव्यक्ते शब्दे भौ० । कौति कवते वा कुडः—बालः । कर्त्ता । गुङ् अव्यक्ते शब्दे भौ०[3] । गवते गूयते वा गुडः—इक्षुविकारः । कर्त्ता कर्म च । एवमादयोऽन्येऽपि द्रष्टव्याः[4] ॥

## अण्डन् कृसृभृवृञः ॥६॥ (पं० उ० १।११८)

एभ्यो धातुभ्योऽण्डन् प्रत्ययो भवति । डुकृञ् करणे ता० । क्रियन्तेऽस्मिन् द्रव्याणीति करण्डः—भाण्डजातिः । अधिकरणम् । सृ गतौ जौ० भौ० । सर्सत्ति धावति वा सरण्डः—वायुः, भूतसंघातश्च । कर्त्ता । डुभृञ् धारणपोषणयोः जौ०, भृञ् भरणे भौ० । बिभर्त्ति भरति[5] भ्रियते वा भरण्डः—भाण्डजातिः । कर्त्ता कर्म च । वृञ् वरणे सौ० । वृणोति व्रियते वा वरण्डः—काष्ठादिसंघातः । कर्त्ता कर्म च । सानुबन्धकरणं सामान्यधातुनिवृत्त्यर्थम्[6] ॥

प्राक्प्रत्ययनिर्देशः शरण्डादीनां प्रसिद्ध्यर्थः[7] । शॄ हिंसायां क्रै० । शृणातीति शरण्डः—वायुः[8] । कर्त्ता । तॄ प्लवनतरणयोः [भौ०] । तरतीति तरण्डः—वायुः, पोतश्च[9] । कर्त्ता । इण् गतौ [ अ० ] । अस्य बाहुलकान्नुमागमश्च[10] एतीति एरण्डः—वायुः । कर्त्ता । धृञ् धारणे भौ० । ध्रियन्तेऽस्मिन् लोका इति धरण्डः—भूलोकः । अधिकरणम्[11] ॥

---

१. 'अण शब्दार्थः······कर्त्ता' अयं पाठः पूर्वसूत्रवृत्तेः शेषः प्रतीयते । यतो हि धातुरत्र क्वादिर्नास्ति ।

२. "[इडा] इण् गतौ 'क्वादिभ्यः कित्' इत्यस्मिन् सूत्रे 'बहुलानुवृत्तेरजमन्तादपि भवति' इति वचनाड्डप्रत्ययः, कित्वाद् गुणाभावः । गवा समानार्थः" इति देवराजः (पृ० १४) ।

३. 'गु शब्दे' इति क. ।

४. 'बोद्धव्याः' इति क. ।

५. 'भरति' नास्ति क. ।

६. 'सानुबन्ध·····निवृत्त्यर्थम्' नास्ति क. । ग.घ.योस्तु भ्रष्टः पाठोऽत्रोपलभ्यते ।

७. उज्ज्वलदत्त(पृ० ४७)श्वेतवनवासिनाव्(पृ० ४७) अप्येवमाहतुः ।

८. 'सायकः' क. इति ।

९. 'पोतश्च' इति नास्ति ख. ।

१०. अत्र कदाचित् 'रमागमश्च' इति पाठः स्यात् ।

११. 'इण् गतौ·····अधिकरणम्' इति नास्ति क. ।

## सर्त्तेरडिः ॥१०॥ (पं० उ० १।१२४)

सर्तेर्धातोरडिः प्रत्ययो भवति । सृ गतौ भौ०जौ० । धावति[1] सर्सत्ति वा **सरट्**[2]—वायुः । कर्त्ता ॥

॥ डकारः ॥

## शमेर्ढः ॥११॥ (पं० उ० १।९७)

शमेर्ढप्रत्ययो भवति । शमु उपशमे दै० । शान्तमस्य स्पर्शनेन्द्रियमिति **शण्ढः**[3]—नपुंसकः । कर्त्ता । भूतकालः ॥

॥ ढकारः ॥

## [4]श्यास्त्याहृञविभ्य इनच् ॥१२॥ (पं० उ० २।४८)

एभ्यो धातुभ्य इनच् प्रत्ययो भवति । श्यैङ् गतौ भौ० । श्यायत इति **श्येनः**—गृध्रः पक्षी । कर्त्ता । ष्टचै[5] शब्दसंघातयोः । स्त्यायत इति **स्तेनः**—चौरः । कर्त्ता । बाहुलकाद्यलोपः[5] । हृञ् हरणे भौ०, हृ प्रसह्यहरणे जौ० । हरति जिहर्त्ति वाऽध्वानमिति[6] **हरिणः**—मृगः । कर्त्ता । अव रक्षणादौ भौ० । अवतीति **अविनः**—राजा, अध्वर्युः, भूमिश्च[7] । कर्त्ता ॥

## वृजेः किच्च ॥१३॥ ( पं० उ० २।४९ )

---

१. 'सरति' इति ख. ।

२. पञ्चपाद्यां '**सर्त्तेरटिः**' इति सूत्रम् । तेन टकारान्त. । अत्र तु डकारान्तो व्युत्पाद्यत इत्युभयोर्विशेषः । '**सरडिति धातुपारायणे दृश्यते**' इत्युज्ज्वलदत्तवचनमत्रानुसन्धेयम् (पृ० ४९) ।

३. नारायणश्वेतवनवासिनो '**षणेर्ढः**' इति पठतः । तत्र '**षण्ढः**' इत्युदाहरणम् । तच्चैतदुभयमपि प्रमाणमुभयथा शब्ददर्शनात् ।

'शण्ढ'शब्दः १०।१५ पुनर्व्युत्पाद्यते ।

४. इतः पूर्वम् 'अथ नकाराज्जातो णकारान्तः' इत्यधिकः पाठः ख.पुस्तके ।

५. '**बाहुलकत्वाद्यलोपः**' इति क. ।

अन्ये वृत्तिकाराः '**स्त्येनः**'इत्युदाहरन्ति । तत्राह श्वेतवनवासी—"**स्त्येनश्चौरः** । '**स्तेनाद्यन्नलोपश्च**' (अ० ५।१।१२५) इति **स्तेनशब्दोऽपि साधुः** । तथा हि—'स्तेन चौर्ये' इति चौरादिकस्तस्मात् पचाद्यचि स्तेनः" इति (पृ० ७५) ।

६. 'हरत्यध्वानं जिहर्त्ति वेति' इति क. । ७. 'भूमिः' इति नास्ति ख. ।

वृजेधातोरिनच् प्रत्ययो भवति किच्च। वृजी वर्जने रौ०। वृणक्ति वृज्यते वा **वृजिनम्**—कुटिलम्। कर्त्ता कर्म च। **वृजिनम्**—पापम् च॥

## अजेरज च ॥१४॥ ( पं० उ० २।५० )

अजेर्धातोरिनच् प्रत्ययो भवति, अज इत्ययं चादेशः। अज गतिक्षेपणयोः भौ०। अजति वीयते वा तदिति **अजिनम्**—चर्म। कर्त्ता कर्म च। अजेरजादेशकरणं वी-आदेशनिवृत्त्यर्थम्॥

## बहुलमन्यत्रापि ॥१५॥ ( पं० उ० २।५१ )

बहुलमन्येभ्योऽपि धातुभ्य इनच् प्रत्ययो भवति। कठ कृच्छ्रजीवने भौ०। कठतीति **कठिनम्**—अमृदु। एवमन्यत्रापि[1]॥

अपरा वृत्तिः—बहुलमन्यत्रापि अन्यस्मिन् प्रत्ययेऽपि अजेरजादेशो भवति[2]। तृन्तृचोः, लुटः प्रथमैकवचने वा। अजतीति **अजिता**—गन्ता। अचि अलि वा[3] समजतीति **समजः**। कर्त्ता। "**संज्ञायां समज**" [ अ० ३।३।९९ ] इति समजेः क्यप् समज्या[4]।

## द्रुदक्षिभ्यामिनन् ॥१६॥ ( पं० उ० २।५२ )

आभ्यां धातुभ्या[5]मिनन् प्रत्ययो भवति। द्रु गतौ भौ०[5]। द्रूयते तदर्थिभि[5]रिति **द्रविणं**—धनम्। कर्म[5]। दक्ष वृद्धौ भौ०[5]। दक्षत इति **दक्षिणः**[6]—परचित्तानुरञ्जिता, अनुकूलश्च। कर्त्ता[7]॥

---

१. 'एवमन्येपि' इति क.।

२. 'बहुलमन्यस्मिन् प्रत्यये परतः अजेरजादेशो भवति' इति क.।

३. दश० उ० ८।९३॥ 'प्राक्प्रत्यय(पृ० १८०)……अचि अलि वा' इत्ययं पाठो नास्ति ग. घ.।

४. 'समजेति निपातनात् समज्या' इति ख.। 'संज्ञायां समजेः क्यप् समज्या' इति क.।

५. नास्ति ख. ग. घ.।

६. अत्राह निरुक्तकारः—'**दक्षिणा दक्षतेः समर्धयतिकर्मणः, व्यृद्धं समर्धयतीति, अपि वा प्रदक्षिणागमनाद् दिशमभिप्रेत्य**" इति (निरु० १।७)।

'**दक्षेर्वृद्धिकर्मणो दक्षिणा**' (महा० ५।१।५९, पृ० ३१४)।

७. 'परचित्तानुरक्षिता अनुकूलं च' इति क.।

## अर्त्तेः किदिरिश्च[1] ॥१७॥ (पं० उ० २।५४)

अर्त्तेर्धातोरिनन् प्रत्ययो भवति, किच्च, इरित्ययं चादेशः। ऋ गतौ भौ० जौ०[2]। ऋच्छति, इयर्त्ति[3], अर्यते वा **इरिणम्**—अल्पोदकतृणस्थानम्। कर्त्ता कर्म च ॥[4]

## वेपितुह्योर्ह्रस्वश्च ॥१८॥ ( पं० उ० २।५५)

आभ्यां धातुभ्यामिनन् प्रत्ययो भवति, किच्च, ह्रस्वश्च। टुवेपृ कम्पने भौ०। वेपत इति **विपिनम्**—गहनम्, अब्जं वा कर्त्ता[5]। तुहिर् अर्दने भौ०। तोहति तुह्यते वा अर्केणेति[6] **तुहिनम्**—हिमम्, अन्धकारश्च। कर्त्ता कर्म च[7] ॥

## महेरिनण् च ॥१९॥ (पं० उ० २।५६)

महेर्धातोरिनण् प्रत्ययो भवति चादिनन्[8]। मह पूजायाम् [भौ०]। महत्यस्मिन्निति[9] **माहिनम्, महिनम्**—राज्यम्। अधिकरणम्[10] ॥

## सुयुरुवृञो[11] युच् ॥२०॥ (पं० उ० २।७५)

एभ्यो धातुभ्यो युच् प्रत्ययो भवति। षुञ् अभिषवे [सौ०], षु प्रसवैश्वर्ययोः [भौ०]। सुनोति सवति सूयते वा **सवनम्**—पूर्वाह्णापराह्णमध्याह्नकालः त्रिषवणम्। कर्त्ता कर्म च। यु मिश्रणे अा०। यौति यूयते वा **यवनः**—देशः। कर्त्ता कर्म च। रु शब्दे अा०। रौतीति **रवणः**[12]—वायुः, भ्रमरश्च।

---

१. 'किदिच्च' इति ङ. च.। पञ्चपाद्यामपि 'इच्च' इत्येव पाठः। अयमेव च पाठो युक्तः। 'इर्' इत्यादेशविधानमनर्थकम्। 'उरण् रपरः (अ० १।१।५१) इत्यादिना रपरत्वस्य सिद्धत्वात्।   २ 'जौ०' नास्ति क.।

३. 'इयर्त्ति' नास्ति क.।

४. इतोऽग्रे 'द्रुहेः। द्रुहेरिनन् प्रत्ययः। द्रुह्यते इति द्रुहिणं विषम्।' इत्यधिकं च.।

५. 'कर्त्ता' नास्ति क.।   ६. 'तुह्यते वा अर्केण' इति नास्ति ग. घ.।

७. 'कर्म च' इति नास्ति ग. घ.।   ८. 'चकारादिनन् च' इति क.।

९. 'मह्यतेऽस्मिन्निति' इति क. ख.।   १०. 'करणमधिकरणं च' इति क.।

११. 'सुयुरुवृञ्भ्यो' इति क. छ.।

१२. अत्राह श्वेतवनवासी—"चलनशब्दार्थात् (अ० ३।२।१४८) इति ताच्छीलिके युचि रवणशब्दस्य सिद्धत्वात्प्रपञ्चार्थं व्युत्पादनम्। 'रूढिशब्दप्रकाराः ताच्छीलिकाः' (म० भा० ३।२।५६) इत्यर्थविशेषे साधुत्वं सिद्धम्" इति (पृ० ८१)।

कर्त्ता[1]। वृञ् वरणे [सौ०]। वृणोति व्रियते वा **वरणम्**—कन्याप्रदानम्[2]। कर्त्ता कर्म च॥

## अशे रस[3] च ॥२१॥ (पं० उ० २।७६)

अशेर्धातोर्युच् प्रत्ययो भवति रस[3] इत्ययं चादेशः। अशू व्याप्तौ सौ०, अश भोजने क्रै०। अश्नुते कटिम्, अश्नाति वा त्रिकसंस्पर्शमिति[4] **रसना**[5]—काञ्ची[6]। कर्त्ता॥

## उन्देर्नलोपश्च ॥२२॥ (पं० उ० २।७७)

अस्माद्[7] युच् प्रत्ययो भवति नलोपश्च। उन्दी[8] क्लेदने [रौ०]। उनत्तीति **ओदनः**[9]—शाल्यन्नम्। कर्त्ता॥

## बहुलमन्यत्रापि ॥२३॥ (पं० उ० २।७८)

---

१. 'कर्म च' इत्यधिकं क.। २ 'कन्याप्रतिपादनम्' इति क.।

३. 'रश' इति क. ख. च. छ. ज.। एवमुदाहरणेऽपि 'रशना:' इत्येव।

४. 'त्रिगतंस्पर्शम्' इति क.। 'रिक्स्पर्शम्' इति ग.। 'रिक्थस्पर्शम्' इति घ.।

५. अत्राहोज्ज्वलदत्तः—"**अजयकोषे काञ्च्यामपि दन्त्यवान् 'रसनं निस्वने स्वादे रसना काञ्चिजिह्वयाः'** (रादि० १२)। **धरणिश्चैवम्। एवं च रसनाशब्दोऽत्र केश्चिद् दन्त्यवान् इष्यते**" इति (पृ० ८६)। वस्तुतस्तु 'अशे रस च' इत्येव पाठो युक्तः। अन्यथा 'अशे रुट् च' इत्येव सूत्रयेत्। तथा सति धातोरुडागमे कृते 'रशना' शब्दः सिद्धच देव।

६. काञ्ची स्त्रीणां कटिभूषणम्। 'रशना—मेखला' इति ख.पाठः।

७. 'उन्देः' इति क.।

८. ओदन, ओद्ती (ऋ० १।४८।६॥ निघण्टु १।८) ओद्मन् इत्यादिषु नकाराभावदर्शनात्, गुणदर्शनात्, ओदतीत्यत्र शब्दर्शनाच्च स्वतन्त्र 'उद' इति भौवादिको धातुरूहनीयः।

९. "न लोपे कृते गुणो भवति। आर्धधातुकनिमित्तत्त्वाभावाद् धात्वैकदेशलोपस्य। सन्नियोगशिष्टानां हि निमित्तनिमित्तिभावो नास्ति। यथा द्वयोः शृङ्गयोर्युगपदुत्पद्यमानयोः। यदि वा 'न धातुलोपस्य' (अ० १।१।४) प्रत्याख्यानाद् गुणो भवति"—इति श्वेतवनवासी (पृ० ८२)।

बहुलमन्येभ्योऽपि धातुभ्यो युच् प्रत्ययो भवति।[1] स्यन्दू प्रस्रवणे [भौ०]। स्यन्दत इति **स्यन्दनः**—रथः। कर्त्ता। टुमस्जो शुद्धौ तौ०[2]। मज्जत्यनयेति **मज्जनः**—रामा[3]। अधिकरणम्। दिवु क्रीडादौ दे०। दीव्यतीति **देवनः**—कितवः। कर्त्ता। रुच दीप्तौ भौ०। रोचतेऽत्यर्थमिति **रोचनः**—चन्द्रः[4]। कर्त्ता[5]। भ्रस्ज पाके तौ०। भृज्ज[ती]ति **भर्ज्जनः**—पाचकः। कर्त्ता॥[6]

## रजः[7] क्युन् ॥२४॥ (पं० उ० २।७६)

रजेर्धातोः क्युन्[8] प्रत्ययो भवति। रञ्ज रागे भौ०। रजति रज्यते वाऽनेनेति **रजनः**—रजकः, रागः[9] [च]। कर्त्ता करणं च॥

## भूसूधूभ्रस्जिभ्यश्छन्दसि ॥२५॥ (पं० उ० २।८०)

एभ्यो धातुभ्यः क्युन् प्रत्ययो भवति छन्दसि विषये। भू सत्तायाम् [भौ०]। भवन्ति तस्माद् भूतानीति **भुवनम्**—अन्तरिक्षम्, लोकश्च[10]। अपादानम्। षूङ् प्राणिगर्भविमोचने, षूङ् प्राणिप्रसवे दै०। सूते सूयते वा **सुवनम्**—आदित्यः, अङ्कुरः, प्रादुर्भावश्च। कर्त्ता। धूञ् कम्पने सौ० क्रै०। धुनोति धुनाति वा **धुवनम्**—वायुः, अग्निश्च। कर्त्ता। भ्रस्ज पाके तौ०। भृज्जन्ति तस्मिन्निति **भृज्जनम्**—अम्बरीषम्। अधिकरणम्। छन्दसीति किम्—भवनम्[11], सवनम्, [धवनम्], भर्ज्जनम्[12]। **युच्** [द० उ० ५।

१. 'नलोपश्च। उन्दी……भवति' इति नास्ति क.। २. 'भौ०' इति क.।

३. 'मज्जत्यनेनेति मज्जनः रोमः। करणम्' इति ख.। 'मज्जत्यस्मिन्निति मज्जनं तोयः' इति क.। ४. 'चन्द्रः' नास्ति क.।

५. 'करणम्' इत्यधिकं क.। ६. 'भ्रस्ज पाके……कर्त्ता' नास्ति क.।

७. 'रजेः' इति क. ज.। पञ्चपाद्यां 'रञ्जेः' इति पाठः।

८. अत्राह न्यासकारः—"**रञ्जेः क्युन् (द० उ० ५।२४) इति यः क्युन् विहितस्तस्मिन् बहुलवचनात् क्नुपेरेव विहिते क्नुपण इति भवति**" इति (अ० ८।२।१८) **अत्र** लत्वाभावोऽपि बहुलवचनादेव बोध्यः।

९. 'रजकः, रागः' नास्ति क.। १०. 'भुवनम्' इति क.।

११. बहुलवचनाद् भाषायामपि क्वचिद् भुवनशब्दः प्रयुज्यते। तदाह श्वेतवनवासी—"**बाहुलकाद् भाषायामपि साधुत्वम्। तथा च भर्तृकाव्ये प्रयोगः 'भुवनहितच्छलेन' [भट्टि १।१] इति**" (पृ० ८३)। उज्ज्वलदत्तोऽप्येवम् (पृ० ८७)।

१२. "**बाहुलकाद् भाषायामपि (भृज्जनम्)**" इति श्वेतवनवासी (पृ० ८६)।

२३] भवतीति **भवनम्**[1]। एवमन्येपि ॥

**कृपवृजिमन्दिनिधाञ्भ्यः क्युः ॥२६॥ (पं० उ० २।८१)**

एभ्यो धातुभ्य क्युः प्रत्ययो भवति छन्दसि विषये। कॄ विक्षेपे तौ०[2]। किरतीति **किरणः**—रश्मिः। कर्त्ता। पॄ पालनपूरणयोः क्र्यै०। पृणाति पूर्यते वा **पूरणः**—समुद्रः। कर्त्ता कर्म च। वृजी वर्जने रौ०। वृणक्ति वृज्यते वा **वृजनम्**—निवारणम्, अन्तरिक्षं च। कर्त्ता कर्म च[3]। मदि स्तुत्यादौ [भौ०]। मन्दतेऽनेनेति **मन्दनम्**—स्तोत्रं। करणम्। डुधाञ् धारणपोषणयोः[4] जौ० निपूर्वः। निदधातीति **निधनम्**[5]—विनाशः। कर्त्ता। छन्दसी-[6]त्येवेति किम्[7]—करणम्[8], परणम्, वर्जनम्, मन्दनम्, निधानम्। **युच्** [द० उ० ५।२३] किरतीति **करणम्**[8]। एवमन्येऽपि ॥

**धृषेर्धिष च संज्ञायाम् ॥२७॥ (पं० उ० २।८२)**

धृषेर्धातोः क्युः प्रत्ययो भवति, धिष इत्ययमादेशश्च, संज्ञायां विषये। ञिधृषा प्रागल्भ्ये सौ०। धृष्णात्यनयेति **धिषणा**—प्रज्ञा। करणम्। संज्ञायां किम्—धर्षणम्, धर्षणा, **धृषेर्युच्** [द० उ० ५।२३]। संज्ञायामिति वर्त्तमाने पुनः संज्ञाग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्[9]॥

---

१. 'भवतीति भवनम्' नास्ति क.। २. 'भौ०' इति क.।

३. 'वर्जने। वृणक्ति वर्जते वा……। कर्त्ता' इति ख. ग. घ.। अस्मिन् पाठे 'वर्जते' इत्यत्र चौरादिकाद् वृजेः "आधृषाद् वा" इति (चुरा० गणसूत्रम्) वचनाद् वैकल्पिको णिजभावो बोध्यः।

४. 'दानधारणयोः' इति क.। अस्मिन् पाठे "रत्नधातमम् रमणीयानां धनानां दातृतमम्" इति निरुक्तम् (७।१५) अनुसन्धेयम्।

५. "निपूर्वो धाञ् विनाशवृत्तिः" इति श्वेतवनवासी (पृ० ८३)। अत्राह काशिकाकारः—"बहुलवचनात् केवलादपि धाञः क्युप्रत्ययस्तेन धनशब्दः प्रत्ययस्वरेणाद्युदात्तः" इति (पृ० ५३६)। एवमुज्ज्वलदत्त(पृ० ८८) नारायण (पृ० ४१) श्वेतवनवासिनः (पृ० ८३)।

६. अन्ये वृत्तिकाराश्छन्दसीति नानुवर्तयन्ति। किरणादयः शब्दा भाषायामपि प्रयुज्यन्ते। ७. 'छन्दसीत्येव' इति क.।

८. 'किरणम्' इति क.।

९. 'संज्ञाया……निवृत्त्यर्थम्' इति नास्ति ख.।

बहुलमन्येभ्योऽपि धातुभ्यो युच् प्रत्ययो भवति ।[1] स्यन्दू प्रस्रवणे [भौ०] । स्यन्दत इति **स्यन्दनः**—रथः । कर्त्ता । टुमस्जो शुद्धौ तौ०[2] । मज्जत्यनयेति **मज्जनः**—रामा[3] । अधिकरणम् । दिवु क्रीडादौ दै० । दीव्यतीति **देवनः**—कितवः । कर्त्ता । रुच दीप्तौ भौ० । रोचतेऽत्यर्थमिति **रोचनः**—चन्द्रः[4] । कर्त्ता[5] । भ्रस्ज पाके तौ० । भृज्ज[ती]ति **भर्ज्जनः**—पाचकः । कर्त्ता ॥[6]

## रजः[7] क्युन् ॥२४॥ (पं० उ० २।७६)

रजेर्धातोः क्युन्[8] प्रत्ययो भवति । रञ्ज रागे भौ० । रजति रज्यते वाऽनेनेति **रजनः**—रजकः, रागः[9] [च] । कर्त्ता करणं च ॥

## भूसूधूभ्रस्जिभ्यश्छन्दसि ॥२५॥ (पं० उ० २।८०)

एभ्यो धातुभ्यः क्युन् प्रत्ययो भवति छन्दसि विषये । भू सत्तायाम् [भौ०] । भवन्ति तस्माद् भूतानीति **भुवनम्**—अन्तरिक्षम्, लोकश्च[10] । अपादानम् । षूङ् प्राणिगर्भविमोचने, षूङ् प्राणिप्रसवे दै० । सूते सूयते वा **सुवनम्**—आदित्यः, अङ्कुरः, प्रादुर्भावश्च । कर्त्ता । धूञ् कम्पने सौ० क्रै० । धुनोति धुनाति वा **धुवनम्**—वायुः, अग्निश्च । कर्त्ता । भ्रस्ज पाके तौ० । भृज्जन्ति तस्मिन्निति **भृज्जनम्**—अम्बरीषम् । अधिकरणम् । छन्दसीति किम्—भवनम्[11], सवनम्, [धवनम्], भर्ज्जनम्[12] । **युच्** [द० उ० ५।

---

१. 'नलोपश्च । उन्दी······भवति' इति नास्ति क. । २. 'भौ०' इति क. ।

३. 'मज्जत्यनेनेति मज्जनः रोमः । करणम्' इति ख. । 'मज्जत्यस्मिन्निति मज्जनं तोयः' इति क. । ४. 'चन्द्रः' नास्ति क. ।

५. 'करणम्' इत्यधिकं क. । ६. 'भ्रस्ज पाके······कर्त्ता' नास्ति क. ।

७. 'रजेः' इति क. ज. । पञ्चपाद्यां 'रञ्जेः' इति पाठः ।

८. अत्राह न्यासकारः—"रञ्जेः क्युन् ( द० उ० ५।२४ ) **इति यः क्युन् विहितस्तस्मिन् बहुलवचनात् कृपेरेव विहिते कृपण इति भवति**" इति (अ० ८।२।१८) अत्र लत्वाभावोऽपि बहुलवचनादेव बोध्यः ।

९. 'रजकः, रागः' नास्ति क. । १०. 'भुवनम्' इति क. ।

११. बहुलवचनाद् भाषायामपि क्वचिद् भुवनशब्दः प्रयुज्यते । तदाह श्वेतवनवासी—,,**बाहुलकाद् भाषायामपि साधुत्वम् । तथा च भर्तृकाव्ये प्रयोगः 'भुवनहितच्छलेन' [भट्टि १।१] इति**" (पृ० ८३) । उज्ज्वलदत्तोऽप्येवम् (पृ० ८७) ।

१२. "**बाहुलकाद् भाषायामपि (भृज्जनम्)**" इति श्वेतवनवासी (पृ० ८६) ।

  

२३] भवतीति **भवनम्**[1]। एवमन्येपि ॥

## कृपृवृजिमन्दिनिधाञ्भ्यः क्युः ॥२६॥ (पं० उ० २।८१)

एभ्यो धातुभ्य क्युः प्रत्ययो भवति छन्दसि विषये। कॄ विक्षेपे तौ०[2]। किरतीति **किरणः**—रश्मिः। कर्त्ता। पॄ पालनपूरणयोः क्र्यै०। पृणाति पूर्यते वा **पूरणः**—समुद्रः। कर्त्ता कर्म च। वृजी वर्जने रौ०। वृणक्ति वृज्यते वा **वृजनम्**—निवारणम्, अन्तरिक्षं च। कर्त्ता कर्म च[3]। मदि स्तुत्यादौ [भ्वौ०]। मन्दतेऽनेनेति **मन्दनम्**—स्तोत्रं। करणम्। डुधाञ् धारणपोषणयोः[4] जौ० निपूर्वः। निदधातीति **निधनम्**[5]—विनाशः। कर्त्ता। छन्दसीत्येवेति किम्[7]—करणम्[8], परणम्, वर्जनम्, मन्दनम्, निधानम्। **युच्** [द० उ० ५।२३] किरतीति **करणम्**[6]। एवमन्येऽपि ॥

## धृषेर्धिष च संज्ञायाम् ॥२७॥ (पं० उ० २।८२)

धृषेर्धातोः क्युः प्रत्ययो भवति, धिष इत्ययमादेशश्च, संज्ञायां विषये। ञिधृषा प्रागल्भ्ये सौ०। धृष्णात्यनयेति **धिषणा**—प्रज्ञा। करणम्। संज्ञायां किम्—धर्षणम्, धर्षणा, धृषेर्युच् [द० उ० ५।२३]। संज्ञायामिति वर्त्तमाने पुनः संज्ञाग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्[9] ॥

---

१. 'भवतीति भवनम्' नास्ति क.। २. 'भौ०' इति क.।

३. 'वर्जने। वृणक्ति वर्जते वा······। कर्त्ता' इति ख. ग. घ.। अस्मिन् पाठे 'वर्जते' इत्यत्र चौरादिकाद् वृजेः "आधृषाद् वा" इति (चुरा० गणसूत्रम्) वचनाद् वैकल्पिको णिजभावो बोध्यः।

४. 'दानधारणयोः' इति क.। अस्मिन् पाठे "रत्नधातमम् रमणीयानां धनानां दातृतमम्" इति निरुक्तम् (७।१५) अनुसन्धेयम्।

५. "निपूर्वो धाञ् विनाशवृत्तिः" इति श्वेतवनवासी (पृ० ८३)। अत्राह काशिकाकारः—"बहुलवचनात् केवलादपि धाञः क्युप्रत्ययस्तेन धनशब्दः प्रत्ययस्वरेणाद्युदात्तः" इति (पृ० ५३९)। एवमुज्ज्वलदत्त(पृ० ८८) नारायण (पृ० ४७) श्वेतवनवासिनः (पृ० ८३)।

६. अन्ये वृत्तिकाराश्छन्दसीति नानुवर्तयन्ति। किरणादयः शब्दा भाषायामपि प्रयुज्यन्ते। ७. 'छन्दसीत्येव' इति क.।

८. 'किरणम्' इति क.।

९. 'संज्ञाया······निवृत्त्यर्थम्' इति नास्ति ख.।

## हनो जघ च[1] ॥२८॥

हन्तेर्धातोः क्युः प्रत्ययो भवति जघ इत्ययं चादेशः। हन हिंसागत्योः अा०। हन्ति हन्यते वा **जघनम्**—कटिः। कर्त्ता कर्म च ॥[2]

## छन्दस्यसानच्[3] शुजृभ्याम्[4] ॥२९॥ (पं० उ० २।८६)

छन्दसि विषये शु[5]जृभ्यां धातुभ्यामसानच् प्रत्ययो भवति। शु गतौ भौ०। शवति शूयते वा **शवसानः**—देवयानः पन्थाः। कर्त्ता कर्म च। जृष् वयोहानौ। जीर्यतीति **जरसानः**—प्राणी। कर्त्ता।

प्राक्प्रत्ययनिर्देशः शरसादीनां प्रसिद्ध्यर्थः। शृ हिंसायाम् क्र०। शृणातीति **शरसानः**—अग्निः, हिंस्रश्च। कर्त्ता। तॄ प्लवनतरणयोः भौ०। तरतीति **तरसानः**।

> **शशाङ्के भास्करे चैव वायावग्नौ प्रजापतौ।**
> **इन्द्रे मनोरथे प्रश्ने तरसानं स्मरेद् बुधः ॥**[6]

कर्त्ता[7]। वृञ् वरणे सौ०। वृणोति व्रियते वा **वरसानः**—मनोरथः। कर्त्ता कर्म च ॥

## ऋजिवृधिमन्दिसहिभ्यः कित् ॥३०॥ (पं० उ० २।८७)

---

अत्र संज्ञापदनिर्देशप्रयोजने विप्रवदन्ते वृत्तिकाराः। तथा हि—"संज्ञाग्रहणं विस्पष्टार्थम्" इति श्वेतवनवासी (पृ० ८४)। "संज्ञाधिकारे पुनः संज्ञाग्रहणं प्रायेणोणादीनां यौगिकत्वसूचनार्थम्" इत्युज्ज्वलदत्तः (पृ० ८८)।

वस्तुत 'उणादयो बहुलम्' इत्यत्र 'संज्ञायां' नानुवर्तनीयम्। यत्र हि संज्ञायामिष्यते तत्र संज्ञाग्रहणं क्रियत एव। इति मीमांसकाः।

१. 'हन्तेर्जघ च' इति ज.। २. 'हन्तेर्धातोः······कर्म च' इति नास्ति क.।

३. 'अमानच्' इति क.। अत एव सर्वत्र (३१ सूत्रपर्यन्तम्) 'शवमानः, जरमाणः, तरमाणः, वरमाणः' इत्येवमादीन्युदाहरणानि क.पुस्तके।

४. 'शृ०' इति ज.। ५. 'श्रु' इति ख.।

६. अनुपलब्धमूलमिदम्।

७. 'तरसानः—चन्द्रसूर्यवायवः। कर्त्ता' इत्येव क.पुस्तके पाठः।

एभ्यो धातुभ्योऽसानच् प्रत्ययो भवति किच्च[1]। ऋजि सौत्रो धातुः। ऋञ्जतीति **ऋञ्जसानः**—मेघः। कर्त्ता। वृधु वृद्धौ भ्वा०। वर्धत इति **वृधसानः**- गर्भः, मृत्युश्च[2]। कर्त्ता। मदि स्तुत्यादौ भ्वा०। मन्दत इति **मन्दसानः**—स्वप्नः। कर्त्ता।

**जीवेऽग्नौ भास्करे चैव शशाङ्के हंसके तथा।**
**मन्दसानं स्मरेद् धीमान् स्वरे च पञ्चके स्थितम्**[3]॥

षह मर्षणे भ्वा०। सहत इति **सहसानः**—क्षमावान्। कर्त्ता॥

**अर्त्तेर्गुणः[4] शुट् च ॥३१॥ (पं० उ० २।८८)**

अर्त्तेर्धातोरसानच् प्रत्ययो भवति, गुणः, शुट् चागमः। ऋ गतौ भ्वा०। ऋच्छत्यर्यते वा **अर्शसानः**—पन्थाः[5], इषुर्वा। कर्त्ता कर्म च॥

**सम्यानच् स्तौतेः ॥३२॥ (पं० उ० २।८९)**

सम्युपपदे स्तौतेरानच्[6] प्रत्ययो भवति। ष्टुञ् स्तुतौ अ०। संपूर्वः। संस्तौतीति **संस्तवानः**[7]—वाग्मी। कर्त्ता॥

**[8]युधिबुधिदृशेः किच्च ॥३३॥ (पं० उ० २।९०)**

एभ्यो धातुभ्य आनच् प्रत्ययो भवति किच्च। युध सम्प्रहारे दि०।

---

१. 'कित्संज्ञः' इति क.। २. 'मृत्युश्च' नास्ति क.।

३. अनुपलब्धमूलमिदम्। अयं श्लोकः क.पुस्तके नास्ति। 'पञ्चस्वर्थेषु संस्थितम्' इति ख.पुस्तके चतुर्थचरणपाठः।

४. कितोऽनुवृत्तिं मत्वा गुणो विधीयते। ५. 'पक्ता' इति क.।

६. च्यवानापदनिर्वचने देवराज आह—"च्युङ् गतौ। 'सम्यानच् स्तुवः' इत्यत्र प्राक् प्रत्ययनिर्देशोऽधिकविध्यर्थ इत्युक्तेरानच् प्रत्ययः" इति (पृ० १८८)।

७. '......बहुलवचनात् केवलस्यापि स्तौतेः आनच् प्रत्ययः। वृषादित्वादाद्युदात्तत्वम्' (सायण ऋ० १।३१।८)।

'बाहुलकात् समुपपदाभावेऽपि कर्त्तर्यौणादिक आनच् प्रत्ययः' (द० ऋ० भाष्य १।१२।११)। 'स्तवानः' (ऋ० ६।४६।२; अथर्व० २०।९८।२) अन्तोदात्तो दृश्यते। अन्यत्र सर्वत्र आद्युदात्तः। सायण उभयत्रापि 'स्तूमान' इत्यर्थमाह। ऋ० १।१२।११ इत्यत्र सायणभाष्यं चिन्त्यम्। (द्र०—दया० ऋग्भाष्यम्)।

८. 'युजि०' इत्यधिकं ख.।

युध्यन्ते [इति] युधानाः—रिपवः। कर्त्ता। बुध अवगमने भौ०। बोधयन्ति बुध्यन्ते [इति] बुधानाः[1]—आचार्याः। कर्त्ता। दृशिर् प्रक्षणे भौ०। पश्यन्ति ये ते[2] दृशानाः[3]—लोकपालाः। कर्त्ता[4]॥

## हूर्च्छेः सनो लुक् छलोपश्च ॥३४॥ (पं० उ० २।९३)

हूर्च्छेर्धातोः सन्नन्तादानच् प्रत्ययो भवति, सनश्च लुग् भवति छलोपश्च। हूर्च्छा कौटिल्ये। हूर्च्छितुमिच्छति सन्, जुहूर्च्छिषतीति जुहुराणः[5]—कठिनहृदयः। कर्त्ता॥

## इणसिञ्[6]दीङुष्यविभ्यो नक् ॥३५॥ (पं० उ० ३।२)

एभ्यो धातुभ्यो नक् प्रत्ययो भवति। इण् गतौ अ०। यन्ति तमर्थिन इति इनः—ईश्वरः, सूर्यो राजा वा[7]। कर्म। षिञ् बन्धने सौ०। सिनाति सीयते वा सिनः—कायः, बन्धो वा। कर्त्ता कर्म च[8]। दीङ् क्षये [दै०]। दीयत इति दीनः[9]—दुर्गतिः खिन्नश्च। कर्त्ता। उष दाहे तौ०[10]। उषति उष्यते वाऽनेन शरीरमिति उष्णम्[11]—घर्मः[12]। कर्त्ता करणं च। अव रक्ष-

---

१. 'बुधानः' (ऋ० ४।३३।८; ७।६७।६; ४।५१।६)।

२. 'ये ते' नास्ति ख.। 'इति' इति क.।

३. 'दृशानः' (ऋ० १०।४५।८; २।१०।४; १।९२।१२)।

४. अत्राहोज्ज्वलदत्तः—"बाहुलकात् कृपेरप्यानच् 'कृपो रो लः' (अ० ८।२।१८) इत्यत्र रक्षितः। कृपाणः खड्गः। ···कृपणस्य कृपाणस्य च केवलमाकारतो भेदः। ···· पर्षेणिच्च। पाषाणः" इति (पृ० ९०)। नारायणश्वेतवनवासिनो तु 'पर्षेणिच्च' इति सूत्रमेवाधीयाते।

५. अत्राह श्वेतवनवासी—"केचित् 'छन्दस्यसानच् (द० उ० ५।२९॥ पं० उ० २।८६) इत्यादिसूत्रेषु छन्दसीत्यनुवर्तयन्ति। तेषां छान्दसान्येतानि नामानि। अन्येषामविशेषेण" इति (पृ० ८७)।

६. '०शिञ्०' इति क.। अग्रे वृत्तावपि सर्वत्र शकारादिपाठः।

७. 'सूर्यो राजा वा' नास्ति क. ग. घ.। ८. 'कर्त्ता कर्म च' नास्ति क.।

९. "स्वादय ओदितः" इति गणसूत्रेण दीङ ओदितत्वे "ओदितश्च" (अ० ८।२।४५) इति निष्ठाया नत्वेऽपि दीन इति सिद्ध्यति। १०. 'भौ०' इति क.।

११. 'उष दाहे' इत्यस्य छान्दसत्वेऽपि 'उष्णम्' इति लोके प्रयुज्यते बाहुलकात्। तदुक्तं यास्केन—"अथापि नैगमेभ्यो भाषिकाः। उष्णम्, घृतमिति" (निरु० २।२)।

१२. 'घर्मः' नास्ति क.।

णादौ भौ० । ऊयत इति ऊनः[1]—असम्पूर्णः । कर्म[1]।

फेनमीनौ ॥३६॥ (पं० उ० ३।३)

एतौ शब्दौ नक्प्रत्ययान्तौ निपात्येते । स्फायी ओप्यायी वृद्धौ [भौ०]। अस्य फीभावो गुणश्च निपात्यते[2] । स्फायत इति **फेनः**—बुद्बुद्संघातः । कर्त्ता । मीञ् हिंसायाम क्र्यै० । मिनातीति **मीनः**—जलचरः । कर्त्ता ॥

कृषेर्वर्णे ॥३७॥ (पं० उ० ३।४)

कृषेर्धातोर्नक् प्रत्ययो भवति वर्णेऽभिधेये[3] । कृष विलेखने भौ०, [तौ०]। कृष्यत इति **कृष्णः**—वर्णः । कर्म ॥

बन्धेर्ब्रधि बुधि[4] च ॥३८॥ (पं० उ० ३।५)

बन्धेर्धातोर्नक् प्रत्ययो भवति, ब्रधि बुधि इत्येतौ चादेशौ भवतः । बन्ध बन्धने क्र्यै० । बध्नाति[5] बध्यते वा **ब्रध्नः**—सूर्यः[6] । **बुध्नः**[7]—सङ्कल्पः, मनश्च देवो वा । कर्त्ता कर्म च ॥

धापृवस्यज्यतिभ्यो नः ॥३९॥ (पं० उ० ३।६)

---

१. प्रत्ययस्य कित्त्वात् "ज्वरत्वर" (अ० ६।४।२०) इति वकारस्योपधायाश्च 'ऊठ्' । 'ऊन परिहाणे' इत्यतः कर्मणि "एरच्" (अ० ३।३।५६) इत्यच्यपि रूपं सिद्ध्यति । ये तु "एरजण्यन्तानाम्" (का० ६।१।१६०) इति पठन्ति तेषां मते घञि रूपं द्रष्टव्यम्, उञ्छादित्वात् स्वरोऽपि सिद्धः । भाष्ये तु नैतद् वचनमुपलभ्यते ।

२. 'फेनमीनशब्दौ निपात्येते नप्रत्यये निरुद्धौ । स्फायी वृद्धौ । अस्य 'फे' आदेशो निपात्यते गुणश्च' इति क. ।

३. बाहुलकादन्यत्रापि भवति । यथा "कृष्णोऽस्याखरेष्ठः" (मा० सं० २।१) इत्यत्र मृगे । व्यासस्य वासुदेवस्य च 'कृष्णः' इत्याख्या लोके प्रसिद्धैव । इदञ्चात्राव-धेयम्—वर्णवाची कृष्णशब्दस्त्वन्तोदात्तः, मृगवाची त्वाद्युदात्तः, नामधेयस्त्वाद्युदात्तो-ऽन्तोदात्तश्च । तदुक्तम्—"कृष्णस्यामृगाख्या चेत्, वा नामधेयस्य" इति (फिट् सू० १।११, १२) । इयं च सर्वा व्यवस्था बहुलग्रहणादेव बोद्ध्या ॥

४. 'बुधी च' इति ङ. ज. । पञ्चपाद्यामप्ययमेव पाठः । '०ब्रधबुधौ' इति च. ।

५. 'बध्नाति' इति नास्ति क. । 'बध्यते' इति नास्ति ख. ग. घ. ।

६. 'सूर्यः' नास्ति क. ।

७. "बुध्नमन्तरिक्षम्, बद्धा अस्मिन् धृता आपः" इति यास्कः(निरु० १०।४४) ।

एभ्यो धातुभ्यो नप्रत्ययो भवति। डुधाञ् धारणपोषणयोः[1] जौ०। धीयन्ते यासां विकारैः प्राणिन इति **धानाः**—यवविकाराः । कर्त्तारः[2] । पॄ पालनपूरणयोः क्र्यै०। पृणाति पूर्यते वा तदिति **पर्णम्**—पलाशम्। कर्त्ता कर्म च। वस आच्छादने [ अ० ]। वस्तेऽनेनेति **वस्नम्**—वासः । करणम्[3]। अज गतिक्षेपणयोः [ भ्वा० ]। अजतीति **वेनः**—वायुः। कर्त्ता। अत सातत्य-गमने [ भ्वा० ]। अततीति **अत्नः**[4]—आत्मा, वायुः [ च ]। कर्त्ता[5]॥

## लक्षेरट्[6] च ॥४०॥ (पं० उ० ३।८)

लक्षधातोर्नप्रत्ययो भवति, प्रत्ययस्य[7] चाडागमः[8]। लक्ष दर्शनाङ्कनयोः [चु०]। लक्ष्यतेऽनेनार्थ इति **लक्षणम्**[9]—व्याकरणम्[10]। लक्ष्यतेऽनेन शुभा-शुभमिति **लक्षणम्**—रेखातिलकाद्यङ्कनं च। करणम्॥

## सिवेष्टेयु[11] च ॥४१॥ (पं० उ० ३।९)

सिवेर्धातोर्नप्रत्ययो भवति टेश्च 'यु'[11] आदेशः। षिवु तन्तुसन्ताने दि०। सीव्यतेऽनेनेति **स्योनः**—रश्मिः, आस्तरणं च। करणम्॥

## कृवॄजॄसिद्रुपन्यनि[12]स्वपिभ्यो नित् ॥४२॥ (पं० उ० ३।१०)

---

१. 'दानधारणयोः' इति क.।  २. 'कर्म' इति क.।

३. 'वस ... करणम्' इत्यस्य स्थाने 'वसतीति वस्नं वासः कर्त्ता' इत्येव पाठः क.पुस्तके।

४. अत्राह श्वेतवनवासी—"अपदान्तत्वाज्जश्त्वानुनासिकयोरभावः" इति (पृ० १००)।  ५. 'आत्मा ..... कर्त्ता' नास्ति ग. घ.।

६. 'लक्षेरं' इति क.।  ७. 'प्रत्ययस्य' नास्ति क.।

८. 'अं चागमः' इति क.।

९. अत्राहोज्ज्वलदत्तः—"चकारान्मुडागमः ...... लक्ष्मणः" इति (पृ० १०३)। केचित्तु "लक्षेरट् मुट् च" इत्येवं सूत्रमधीयते। लक्षेर्ल्युटि रूपे सिद्धे स्वरभेदार्थं पुन-र्वचनम्। ल्युटि हि 'लिति' (अ० ६।१।१९३) इत्यनेन धातोरुदात्तत्वम्, अनेन पुनः प्रत्ययस्वरेऽन्तोदात्तत्वम्।

१०. नास्ति पदमिदं ख.पुस्तके। इतोऽग्रे वर्तमानः सर्वोऽपि पाठः क.पुस्तके नास्ति।

११. क.पुस्तके 'यू' इति दीर्घान्तः पाठ उपलभ्यते तदुदाहरणं च 'स्यूनः' इति। पञ्चपाद्यामपि 'यू' इति दीर्घान्त एव पठ्यते।  १२. 'कृवृद्रुपत्यनि' इति ग. घ.।

एभ्यो धातुभ्यो नप्रत्ययो भवति नित्च । कॄ विक्षेपे तौ० । कीर्यत इति कर्णः—श्रोत्रम् । कर्म । वृञ् वरणे सौ० । वृणोति व्रियते वा वर्णः—अकारादिः, ब्राह्मणादिः, श्वेतादिः, वर्ण उच्यते[1] । कर्त्ता कर्म च । जॄष् वयोहानौ दै० । जीर्यत इति जीर्णः—क्षयधर्मा । कर्म । षिञ् बन्धने सौ० । सिनोति सीयते वा सेना[2]:—बलसंघातः । कर्त्ता कर्म च[3] । द्रु गतौ भौ० । द्रवति द्रूयते वा द्रोणः—मानभाण्डम् । कर्त्ता कर्म[4] च । पन सौत्रो धातुः । पनत इति पन्नः[5]—नीचैःकरणम् । कर्त्ता[6] । अन प्राणने अा० । अन्यते तदिति अन्नम्[7]—आहारः । कर्म । ञिष्वप् शये अा० । स्वपन्त्यनेनाविष्टा इति स्वप्नः[8]—निद्रा । करणम् ॥

---

१. 'ब्राह्मणादि ···उच्यते' इति नास्ति क. ।

२. "सह इनेन वर्तत इति व्युत्पत्तौ (तु० निरु० २।११) प्रपञ्चार्थम्" इत्युज्ज्वलदत्तः (पृ० १०४) ।

३. 'जॄष् वयो ····कर्म च' इति ग. घ. । 'सिनोतीति सेना कर्त्ता' इति ख. ।

४. 'मानभाण्डम् । कर्त्ता कर्म च' इति नास्ति ख. ।

५. 'पत्लृ गतौ [भौ०] । पततीति पतनः' इति ग. घ. ।

अत्र 'पन सौत्रो धातुः' इति वचनमनर्थकम् । 'पण व्यवहारे स्तुतौ च, पन च' इति 'पन' धातोर्वर्तमानत्वात् । आर्धधातुकविषये ह्यायप्रत्ययो विकल्प्यते । तत्र बाहुलकान्नप्रत्ययविषये नित्यमायप्रत्ययो न भवतीति बोध्यम् । यद्वा ग घ. पाठ एव साधुः स्यात् । "पद्यतेर्निष्ठायां पन्नशब्दस्य सिद्धत्वात् स्वरार्थं पुनर्व्युत्पादनम्" इति श्वेतवनवासी (पृ० १०१) । ६. 'कर्त्ता' नास्ति क. ख. ।

७. "अदेर्निष्ठायाम् 'अ[दोऽनै]न्ने' (अ० ३।२।६८) इति निर्देशादन्नमिति 'अदो जग्धिः' (अ० २।४।३६) इति (सुत्र ? सूत्रेण जग्ध्यादेशो न) । एवं च निग्रहणं प्रपञ्चार्थमिति" इत्युज्ज्वलदत्तः (पृ० १०४) । श्वेतवनवासी तु—"अदोऽनन्ने (अ० ३।२।६८) इति निपातनाद् घसभावे (?) रूपस्य सिद्धत्वात् स्वरार्थं व्युत्पादनम्" इत्याह (पृ० १०१) ।

अपि चोक्तम्—"अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते" इति (तै० उ० २।१०) ।

८. "स्वपेरपि 'स्वपो नन्' (अ० ३।३।९१) इति सिद्धत्वात् प्रपञ्चार्थः । अथवाऽनेन वर्तमानकालार्थः स्वपेश्चाभा[वा]द्यर्थः" इत्युज्ज्वलदत्तः (पृ० १०४) । श्वेतवन-

## धेट ई च ॥४३॥ (पं० उ० ३।११)

धेटो धातोर्नप्रत्ययो भवति, निच्च[1], ई चास्यादेशः । धेट् पाने भ्वौ० । धयन्ति तामिति **धेना**[2]—सरस्वती, माता च । कर्म ॥

## तृषिशुषिरसिभ्यः कित्[3] ॥४४॥ (पं० उ० ३।१२)

एभ्यो नप्रत्ययो भवति किच्च । ञितृषा पिपासायाम् दै० । तृष्यतेऽनयेति **तृष्णा**[4]—पिपासा, रागबन्धनं च । करणम् । शुष शोषे दै० । शुष्यतीति **शुष्णम्**—अनुदकम् । कर्त्ता । रस श्लेषणे[5] भ्वौ० । रसतोति **रस्नम्**—द्रव्यजातिः । कर्त्ता ॥

## सुञो दीर्घश्च ॥४५॥ (पं० उ० ३।१३)

सुञो धातोर्नप्रत्ययो भवति किच्च दीर्घश्च । षुञ् अभिषवे सौ० । सुन्वन्त्यस्यां प्राणिनां शरीराणि इति[6] **सूना**—मांसविक्रयद्रोणिः । अधिकरणम् ॥

## रमेस्त च ॥४६॥ (पं० उ० ३।१४)

रमेर्धातोर्नप्रत्ययो भवति, तकारश्चान्तादेशः । रमु क्रीडायां भ्वौ० । रमन्तेऽस्मिन्निति **रत्नम्**—वज्रवैडूर्यादिः । अधिकरणम् ॥

## रास्नासास्नास्थूणावीणाः ॥४७॥ (पं० उ० ३।१५)

एते शब्दा निपात्यन्ते नप्रत्ययान्ता आद्युदात्ताः[7] । रा दाने अ०, रस

---

वासी तु—"स्वपो मन् (अ० ३।१।६१) इति सिद्धत्वात् पुनर्व्युत्पादनं न कर्तव्यमिति केचित्" इत्याह (पृ० १०१) ।

१. 'निच्च' नास्ति क. ।

२. 'धीना' इति क. । अत्राह हेमचन्द्राचार्यः—"ईत्वं चेत्येके । धीना" इति (हैमोणा० वृ० २६८, पृ० ४६) ।

३. अत्राह नृसिंहाचार्यः—"'तृषिशुषिरसिभ्यो ङित्' इति पाठमाश्रित्य ......। क्वचित् 'कित्' इति पठ्यते" इति (ऋ० भा० छलारीटी० १।२१, पत्र ८०) ।

४. "नक् प्रकरणे (द० उ० ५।३५—३८) 'तृषिशुषिरसिभ्यः' इति सिद्धे आद्युदात्तार्थं पुनर्वचनमिति केचित्" इति श्वेतवनवासी (पृ० १०२) ।

५. धातुपाठे साम्प्रतं 'रस शब्दे' इति पाठ उपलभ्यते ।

६. 'प्राणिनः' इति क. पाठः ।

७. 'एते निपात्यन्ते नप्रत्यये निरुद्धाः' इति क.पाठः । 'आद्युदात्ताः' इति पाठः

श्लेषणे भ्वा०। रातेः सुडागमो[1] निपात्यते, रसतेर्दीर्घश्च। राति रसति रस्यते वा **रास्ना**—ओषधिः। कर्त्ता कर्म च। षस स्वप्ने अ०। अस्योपधाया दीर्घत्वं निपात्यते। सस्तीति **सास्ना**—गोगलचर्म निद्रा च। कर्त्ता[2]। ष्ठा गतिनिवृत्तौ भ्वा० । अस्य ऊकारादेशो निपात्यते, अगुणत्वं च, णत्वं च प्रत्ययस्य[3]। तिष्ठतीति **स्थूणा**—स्तम्भः। कर्त्ता। अज गतिक्षेपणयोः भ्वा०। अस्य वीभावोऽगुणत्वं च निपात्यते णत्वं च[4]। अजति वीयते वा **वीणा**। अथवा वी गत्यादौ अ०। अस्यागुणत्वं निपात्यते [णत्वं च]। वीयत इति **वीणा**—वल्लकी[5]। कर्त्ता कर्म च।

## गादाभ्याञ्चेष्णक् ॥४८॥ (पं० उ० ३।१६)

आभ्यां धातुभ्यां[6] चेष्णक्[7] प्रत्ययो भवति। गै शब्दे भ्वा०। गायन्ति तं तस्मिन्निति [वा] **गेष्णः**—मल्लः। कर्म अधिकरणं च। डुदाञ् दाने जु०। ददातीति **देष्णः**—दानशीलः। कर्त्ता॥

## कृत्यशूभ्यां[8] क्स्नः[9] ॥४९॥ (पं० उ० ३।१७)

---

साधीयान्। रास्नादिशब्दानामाद्युदात्तत्वदर्शनात्। वस्तुतस्तु आद्युदात्तत्वनिपातनं व्यर्थमेव यतो हि धेना, तृष्णा, रत्न इत्यादयः सर्वेऽपि (पूर्वसूत्रैर्निष्पन्नाः) शब्दा आद्युदात्ता एवोपलभ्यन्ते, अतस्तेष्वाद्युदात्तत्वसिद्धये **'नित्'** इति पदमनुवर्तनीयमेव। तेनैव चात्राप्याद्युदात्तत्वं भविष्यति। सूनाशब्दस्त्वन्तोदात्त एवोपलभ्यते। स तु बाहुलकाद् बोध्यः।

१. 'रातेः सुड्भावः' इति ग. घ.। सुडागमो हि प्रत्ययस्येष्टः 'तदर्थं 'रातेः' इत्यत्र पञ्चमी बोध्या। तेन 'रातेरुत्तरस्य प्रत्ययस्य' इत्यर्थः सम्भवति।

२. 'सासु अनुशिष्टौ। सास्यत इति सास्ना गोगलकम्बलः' इत्येवं पाठो ग.घ.योः।

३. 'अस्योपधाया उत्वं निपात्यते' इत्येव ग. घ.। 'णत्वं च प्रत्ययस्य' इति नास्ति क.। ४. 'णत्वं च' इति नास्ति ख. ग. घ.।

५. 'अथवा वी······वल्लकी' इति नास्ति क.।

६. 'गा दा इत्येताभ्यां' इति क.।

७. चकारस्य 'चुटू' (अ० १।३।७) इति इत्संज्ञा। चित्करणं त्वन्तोदात्तार्थं बोध्यम्। कित्त्वादाकारलोपः। 'इष्णः' इति छ.। 'इष्णक्' इति ज.। पञ्चपाद्यां तु **'इष्णुच्'** प्रत्ययो विधीयते तेन गेष्णूदेष्णू शब्दौ सिद्ध्यतः।

८. 'कृत्यशिभ्यां' इति च.। ९. 'क्स्नक्' इति च. ज.।

आभ्यां धातुभ्यां क्स्नः प्रत्ययो भवति। कृती वेष्टने रौ०। कृणत्ति कृत्यते वा **कृत्स्नम्**—निरवशेषम्[1]। कर्त्ता कर्म च। अशू व्याप्तौ सौ०। अश्नुत इति **अक्ष्णम्**—तेजनम्। कर्त्ता॥

## तिजेर्दीर्घश्च ॥५०॥ (पं० उ० ३।१८)

तिजेर्धातोः क्स्नः प्रत्ययो भवति दीर्घश्च धातोः[2]। तिज निशाने[3] भौ०। तेजनं तितिक्षत इति वा **तीक्ष्णम्**—निशितम्। भावः कर्त्ता च॥

## श्लिषेरच्चोपधायाः ॥५१॥ (पं० उ० ३।१९)

श्लिषेर्धातोः क्स्नः प्रत्ययो भवति, अच्च भवत्युपधायाः[4]। श्लिष आलिङ्गने दै०। श्लिश्यतीति **श्लक्ष्णम्**—मृदु। कर्त्ता॥

## कृवृतृदारिभ्य उनन् ॥५२॥ (पं० उ० ३।५२)

एभ्यो धातुभ्य उनन् प्रत्ययो भवति। कॄ विक्षेपे तौ०। किरति मनांसीति **करुणः**—शोचनीयः। कर्त्ता। वृञ् वरणे सौ०। वृणोति व्रियते वा **वरुणः**—अपां[5] पतिः। कर्त्ता कर्म च। तॄ प्लवनतरणयोः भौ०। तरति तेनेति **तरुणः**—वायुः, युवा च। करणम्। दॄ भये क्र्यै०, ण्यन्तः। दारयति दार्यते वा **दारुणः**—घोरः। कर्त्ता कर्म च॥

## पिशेः किच्च ॥५३॥ (पं० उ० ३।५४)

पिशेर्धातोरुनन् प्रत्ययो भवति किच्च। पिश अवयवे तौ०[6]। पिशतीति **पिशुनः**—सूचकः। कर्त्ता॥

## लषेः[7] श च ॥५४॥ (पं० उ० ३।५५)

---

१. 'निःशेषम्' इति ख.। 'निर्विशेषम्' इति ग. घ.। "**कृत्स्नं निरवशेषम्। रूढित्वात् सर्वथार्थानुगमो नास्ति**" इति श्वेतवनवासी (पृ० १०३)।

२. 'धातोः' नास्ति क.। ३. 'तिज तेजने' इति ग. घ.।

४. 'भवति' इति नास्ति क.।

५. 'शोचनीय······अपां' इति नास्ति ग. घ.। ६. 'भौ०' इति क.।

७. 'लपेः' इति ग. घ. च.। सूत्रमिदं नास्ति ज.।

लषे[1]र्धातोरुनन् प्रत्ययो भवति शश्चान्तादेशः। लष कान्तौ भ्वा०। लषति लष्यते[2] वा लशुनम्—पलाण्डुजातिः। कर्त्ता[3] [कर्म च]॥

फलेर्गुक् च ॥५५॥ (पं० उ० ३।५६ उज्ज्व०)

फलेर्धातोरुनन् प्रत्ययो भवति गुक् चागमः। फल निष्पत्तौ भ्वा०। फलतीति फल्गुनः—पार्थः। कर्त्ता॥

त्रो रश्च लः ॥५६॥ (पं० उ० ३।५३)

तॄ इत्येतस्मादुनन् प्रत्ययो भवति रेफस्य च लकारादेशः। तॄ प्लवनतरणयोः भ्वा०। तरति सर्वमिति तलुनः—वायुः। कर्त्ता॥

बाहुलकात् तरुण एव भवति[4]॥

अर्जेर्णिलुक् च ॥५७॥ (पं० उ० ३।५६)

अर्जेर्धातोरुनन् प्रत्ययो भवति, णिलुक् च। अर्ज सर्ज अर्जने भ्वा०[5] ण्यन्तः। अर्जयतीति अर्जुनः—वृक्षः। कर्त्ता॥

तृणाख्यायां चित्[6] ॥५८॥ (पं० उ० ३।५७)

तृणाख्यायां गम्यमानायामर्जेर्धातोरुनन् प्रत्ययो भवति, चित्संज्ञको णिलुक् च भवति। अर्ज सर्ज अर्जने भ्वा०। अर्जयतीति अर्जुनम्—तृणम्। कर्त्ता॥

अर्त्तेश्च ॥५९॥ (पं० उ० ३।५८)

अर्त्तेरुनन् प्रत्ययो भवति चित्संज्ञकः। ऋ गतौ भ्वा०। ऋच्छत्यर्यते वा अरुणः—वैनतेयः। कर्त्ता कर्म च॥

धारेर्णिलुक् च ॥६०॥ (पं० उ० ३।५६)

---

१. 'लपेः' इति ग. घ. च.।
२. 'लप व्यक्तायां वाचि। लपति लप्यते वा' इति ग. घ.।
३. 'लपेः श च······कर्त्ता' इति नास्ति क.।
४. 'बाहुलकात्······भवति' इति नास्ति क.।
५. 'णिलुक्······भ्वा०' नास्ति क.।
६. 'अर्जुनस्य तृणाख्या चेत्' इति फिट्सूत्रम् (१।१७)।

धारेर्धातोरुनन् प्रत्ययो भवति, चित्संज्ञकः,[1] णिलुक् च। धृ धारणे भौ०[2], धृ[3] अनवस्थाने चौ०[2]। धरति[4] धारयति वा **धरुणः**—वैनतेयः। [कर्त्ता] ॥[5]

## अजियमिशीङ्भ्यश्च ॥६१॥ (पं० उ० ३।६०)

एभ्य उनन् प्रत्ययो भवति, चित्संज्ञकः[6]। अज गतिक्षेपणयोः[7] भौ०। अजति वीयते वा **वयुनः**—चन्द्रमाः। **वयुनानि**—अङ्गानि। कर्त्ता कर्म च। यम उपरमे भौ०। यच्छति भक्तानां पापमिति **यमुना**—नदी। कर्त्ता[8]। शीङ् स्वप्ने आ०। अत्यर्थं शेते इति **शयुनः**—अजगरः। [कर्त्ता]॥

## तृहेः क्नन्[9] हलोपश्च ॥६२॥ (पं० उ० ५।७)

तृहेः क्नन्[10] प्रत्ययो भवति हलोपश्च। तृह हिसि हिंसायां रौ०। तृह्यते तद् गवादिभिरिति **तृणम्**[11]—वृक्षः। कर्म॥

## अर्त्तेः क्युन्[12] उच्च ॥६३॥ (पं० उ० ५।१५)

अर्त्तेर्धातोः क्युन्[11] प्रत्ययो भवति उश्चास्यादेशः। ऋ गतौ भौ०।

---

१. नारायणस्त्वाह—"अस्य नित्त्वं चित्त्वं च विना प्रत्ययस्वर एव दृष्टः' इति (पृ० ६५)। युक्तं चैतत्, वेदे सर्वत्र धरुणशब्दस्य मध्योदात्तत्वदर्शनात्।

२. नास्ति ख. ग. घ.। ३. 'धृङ' इति क.।

४. 'धरयति' इति क.। वस्तुतस्तु 'धारयतीति धरुणः' इत्येव युक्तः पाठः।

५. सवृत्तिसूत्रमिदं नास्ति छ.।

६. अन्ये वृत्तिकाराः 'चित्' इति नानुवर्तयन्ति। उज्ज्वलवृत्तौ तु 'स च कित्' इति (पृ० ११७) पाठो मुद्रितः। तत्र कदाचित् 'चित्' इत्येव पाठः स्यात्। अन्यथा 'वयुनम्' इत्यत्र गुणो न स्यात्। अत्रापि सर्वत्र नित्त्वं चित्त्वं च विना प्रत्ययस्वर एवोपलभ्यते। तस्मादत्रापि चिदनुवर्तनं चिन्त्यम्। ७. 'गतौ' इति क.।

८. 'कर्त्ता' नास्ति क.। ९. 'क्नो' इति क.।

१०. 'क्नः' इति क.।

११. अत्राह श्वेतवनवासी—'तृण अदने तानादिकः। अस्मादिगुपधलक्षणे के तृणसिद्धिः। तथापि स्वरभेदात् पुनर्वचनम्' इति (पृ० २१२)। निरुक्तकारस्तु—'यत्किञ्चित् तृन्द्यात् तृणं तत्' (१।१२) इत्याह।

१२. 'युच्' इति ग.घ.। वेदे 'उरण' शब्दस्याद्युदात्तत्वदर्शनात् प्रत्ययस्य नित्त्वमेव युक्तम्।

ऋच्छत्यर्यते वा **उरणः**—पशुः, मेषः, उलूको वा। कर्त्ता कर्म च। "उरण् रपरः" [अ० १।१।५१] इति रपरत्वम्॥[1]

## ऊर्णोतेर्डः ॥६४॥ ( पं० उ० ५।५४ )

ऊर्णोतेर्डः प्रत्ययो भवति। ऊर्णुञ् आच्छादने अ०। ऊर्णोतीति **ऊर्णा**—अविलोमानि। कर्त्ता॥

॥ णकारो[2] नसहितः॥

॥ इति दशपादी-उणादिवृत्तौ पञ्चमः पादः॥

———

१. 'उरणः—पशुः। कर्त्ता कर्मं च' इत्येव क.।

२. 'अकारेण' इति ग. व.। 'णकारान्तः नकारान्तः' इति ख.पुस्तकप्रान्ते संशोधितः पाठः। 'णकारो नकारसहितः' इति क.।

# ॥ अथ षष्ठः पादः ॥

## मृग्रोरुतिः ॥१॥ ( पं० उ० १।९२ )

आभ्यां[1] धातुभ्यामुतिः प्रत्ययो भवति। मृङ् प्राणत्यागे तौ०। म्रियतेऽसौ न कदाचिदिति **मरुत्**—वायुः, मरुतौ देवौ वा। कर्त्ता। गृ निगरणे क्रै०[2], गृ शब्दे तौ०[3]। गृणाति गिरति वा[3] **गरुत्**—अजगरः[4]। कर्त्ता। गृणाति गिरति [गीर्यते] वा **गरुत्**[5]—मरकतमणिः[6]। कर्त्ता कर्म च॥

## गर्मुत् ॥२॥ ( पं० उ० १।९३)

'गर्मुत्' इत्ययं शब्दो निपात्यते उतिप्रत्यये निरुद्धः। गृ शब्दे तौ०[7], गृ निगरणे क्रै०[7]। अनयोरुतिप्रत्यये मुमागमो निपात्यते[8]। गिरति गृणाति गीर्यते वा **गर्मुत्**—आदित्यः, सुवर्णं[9] च। कर्त्ता कर्म च॥

## हसृरुहियुषिभ्य इतिः ॥३॥ ( पं० उ० १।९५ )

एभ्यो धातुभ्य इतिः प्रत्ययो भवति। हृञ् हरणे भ्वौ०, हृ प्रसह्यकरणे जौ०। हरति जिहर्त्ति ह्रियते वाऽसाविति[10] **हरित्**—वायुः, मृग[11]जातिश्च। कर्त्ता कर्म च। सृ गतौ भ्वौ० जौ०। धावति[12] ससर्त्ति वा **सरित्**—नदी। कर्त्ता। रुह बीजजन्मनि भ्वौ०। रोहतीति **रोहित्**—वीरुत्प्रकारः, सूर्यः,

---

१. 'मृ गृ इत्येताभ्यां' इति क.। २. 'भ्वौ०......क्रै०' इति क. ख.।
३. 'गिरति गृणाति वा' इति क.। ४. 'मशकः' इति ग. घ.।
५. 'अजगरः......गरुत्' नास्ति क.।
६. 'कर्त्ता..... मणिः' इति नास्ति ग. घ.।
७. 'क्रै०......भ्वौ०' इति क.। ८. 'भवति' इति क.।
९. 'सुवर्णो वा' इति ग. घ.। 'सुपर्णो वा' इति ख.।
१०. 'असाविति' नास्ति क.। ११. 'गजजातिः' इति ग. घ.।
१२. 'सरति' इति ग. घ.।

अग्निश्च । कर्त्ता । युष इति सौत्रो धातुः । योषति युष्यते वा **योषित्**[1]—प्रमदा । कर्त्ता कर्म च ॥

## ताडेर्णिलुक् च ॥४॥ ( पं० उ० १।९६ )

ताडेर्धातोरितिः प्रत्ययो भवति णिलुक् च । तड आघाते चौ० ण्यन्तः । ताडयति मेघान् ताड्यते वा वायुनेति[2] **तडित्**—शतह्लदा । कर्त्ता कर्म च ॥

## वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥५॥ ( पं० उ० २।८४ )

वर्तमानकाले पृषदादयः शब्दा निपात्यन्ते कतिप्रत्यये निरुद्धाः,[3] शतृवच्चैषां कार्यं भवति । पृषु सेचने भ्वौ०[4] । अस्य कतिप्रत्ययो निपात्यते । पर्षतीति **पृषत्**—चित्रवर्णजातिः[5] । अथवा पॄ पालनपूरणयोः, अस्य[6] ह्रस्वत्वं षुगागमश्च । पृणाति पिपर्त्ति वा **पृषत्**—चित्रवर्णजातिः, शीकरश्च । कर्त्ता । बृह बृहि वृद्धौ भ्वौ० । अस्य नकारलोपो निपात्यते । बर्हति बृंहतीति वा **बृहत्**[7]—विस्तीर्णम् । कर्त्ता । मह पूजायाम् चौ० ण्यन्तः, प्रकृत्यन्तरं वा ।

---

१. 'अजादिपाठात् क्रुञ्चाशब्दवत् टापि योषितेति केचित्' इत्युज्ज्वलदत्तः (पृ० ३६) ।

२. 'तड ·····वायुनेति' नास्ति क. । तत्र 'ताडयति तडित्' इत्येव पाठः ।

३. 'कति प्रत्यये निरूढाः' इति ख. ग. घ. ।  ४. 'भ्वौ०' नास्ति क. ।

५. नास्ति ख. ग. घ. ।  ६. 'पालनपूरणयोः, अस्य' नास्ति क. ।

७. अत्राह काशिकाकारः—'बृहदित्येतदन्तोदात्तं निपातयन्ति । तस्य केचिदाद्युदात्तत्वं वर्णयन्ति' इति (६।२।१४०, पृ० ५६७) ।

इदं चात्रावधेयम्—पृषज्जगच्छब्दावाद्युदात्तौ दृश्येते । बृहन्महच्छब्दौ त्वन्तोदात्तौ । तत्रापि बृहच्छब्दः समासे (बृहस्पतिरित्यादौ) आद्युदात्त उपलभ्यते । तत्रेयं प्रक्रिया—पृषदादिषु शतृवत्कार्यातिदेशाच्छत्रपि भवति प्रत्ययस्वरे प्राप्ते शतृवदतिदेशात् लसार्वधातुकानुदात्तत्वे कृते पृषदादय आद्युदात्ता भवन्ति । जगच्छब्दे तु शपः श्लुः, श्लौ द्विर्वचनम्, ततः 'अभ्यस्तानामादिः' (अ० ६।१।१८९) इत्याद्युदात्तत्वमिति विशेषः । तत्र बृहन्महतोरन्तोदात्तत्वं निपातनाद् बाहुलकाद् वा बोध्यम् ।

यद्वा बृहू उद्यमने तौदादिकः, तत्र शप्रत्ययस्योदात्तत्वे, एकादेशे च 'एकादेश उदात्तेनोदात्तः' (अ० ८।२।५) इत्यकार उदात्तः । तदेवमाद्युदात्तो बृहच्छब्दो भौवादिकात्, अन्तोदात्तस्तु तौदादिकान्निर्वक्तव्यः ।

महति महयति वा **महत्**—पूजितम्, विस्तीर्णं च। कर्त्ता। गम्लृ गतौ भ्वा०। अस्य द्विर्वचनं टिलोपश्च निपात्यते। अहरहः क्षयं गच्छतीति **जगत्**—स्थावरजङ्गमात्मको[1] लोकः। कर्त्ता।

सर्व एते कतिप्रत्ययान्ताः। शतृवदतिदेशान्नुमादिकार्यम्। **पृषती** मृगी। **बृहती** छन्दसीत्येव। **महती**। **जगती** पृथिवी[2]।

वर्तमानाधिकारे पुनर्वर्तमानग्रहणं नियमार्थम्[3]। वर्तमान एव पृषदादयः शब्दाः साधवो[4] भवन्ति नान्यस्मिन्निति॥

## संश्चत्तृपद्वेहत्[5] ॥६॥ (पं० उ० २।८५)

एते शब्दा निपात्यन्ते कतिप्रत्यये निरुद्धाः[6]। चिञ् चयने चौ० सम्पूर्वः। धातोरन्त्यलोपो निपात्यते उपसर्गान्त्यस्य शकारो[7]ऽनुस्वारागमश्च। संचिनोतीति **संश्चत्**—कुहकः[8]। कर्त्ता। तृप प्रीतौ दै० तौ०, तृह हिंसि हिंसायां रौ०, तृहू हिंसायां तौ०। अनयोः पकारादेशो निपात्यते। तृप्यति तृपति तृणेढि तृहति इति वा **तृपत्**—चन्द्रमाः। कर्त्ता। हन हिंसागत्योः अा० विपूर्वः। अस्य टिलोपो निपात्यते उपसर्गस्य च गुणः। विहन्ति गर्भमिति **वेहत्**—गर्भोपघातिनी[9] अनड्वांश्च। [कर्त्ता]॥[10]

## हसिमृग्रिण्वामिदमितमिलूपूधूर्विभ्यस्तन् ॥७॥ (पं० उ० ३।८२)

---

१. 'आत्मकः' इति नास्ति क. ख.। २. 'पृषती' इति क.।

३. अत्राहोज्ज्वलदत्तः—"वर्तमानग्रहणं 'भूतेऽपि दृश्यन्ते' (अ० ३।३।२) इति शङ्कानिरासार्थम्। प्रपञ्चार्थमिति 'उणादयो बहुलम्' (अ० ३।३।१) इत्यत्र न्यासः" इति (पृ० ८६)। ४. 'शब्दाः साधवः' इति नास्ति क.।

५. 'संस्वत्तृपद्वेहत्' इति च.। ६. 'निरूढाः' इति ख. ग. घ,।

७. 'उपसर्गस्य सकारादेशो' इति ग. घ.।

८. 'कुत्सकः' इति ख. ग. घ.।

अत्राह हेमचन्द्रः—'अनुस्वारं नेच्छन्त्येके। सश्चत्—कुहकः' इति (हैमो० वृ० ८८२ पृ० १४२)। 'सम्पूर्वात् श्वयतेः संश्वदिति सुभूतिचन्द्रः' इत्युज्ज्वलदत्तः (पृ० ८६)।

९. 'अप्रजा स्त्री मृतापत्या' इति क. ख.।

'गर्भोपघातिनी गौरिति न्यासः' इत्युज्ज्वलदत्तः (पृ० ८६)।

१०. 'पृथग्योगकरणं शतृवत् कार्यनिवृत्त्यर्थम्' इत्युज्ज्वलदत्तः (पृ० ८६)।

एभ्यो धातुभ्यस्तन् प्रत्ययो भवति। हस हसने भ्वौ०[1]। हसतीति **हस्तः**[2]—पाणिः। कर्त्ता। मृङ् प्राणत्यागे तौ०। म्रियत इति **मर्तः**—प्राणी। कर्त्ता। गॄ निगरणे तौ०, गॄ शब्दे क्र्यौ०। गिरति गृणाति वा **गर्त्तः**—अवटः। कर्त्ता। इण् गतौ आ०। एतीति **एतः**—वायुः, पथिकश्च। कर्त्ता। वा गतिगन्धनयोः [आ०]। वातीति **वातः**—मातरिश्वा। कर्त्ता। अम गत्यादिषु भ्वौ०। अम्यतेऽसाविति **अन्तः**[3]—यस्य पूर्वोऽस्ति न परः।[4] कर्म। दमु उपशमे दै०। दाम्यति स्थविरत्वादिति **दन्तः**—रदनः[5]। कर्म। तमु ग्लानौ। ताम्यतीति **तन्तः**। कर्त्ता।[6] लूञ् छेदने क्र्यौ०। लुनाति लूयते वा **लोतम्**—वाष्पम्, लवणञ्च[7]। कर्त्ता कर्म च। पूञ् पवने क्र्यौ०। पुनाति पूयते वा **पोतः**—अग्निः, समुद्रयानम्, बडिम्भः[8]। कर्त्ता कर्म च। धुर्वि हिंसार्थः भ्वौ०। धूर्वतीति **धूर्तः**—शठः। कर्त्ता॥

## तनिमृङ्भ्यां किच्च ॥८॥ ( पं० उ० ३।८४ )

आभ्यां तन् प्रत्ययो भवति किच्च। तनु विस्तारे ता०। तनोति तन्यते वा **ततम्**—विस्तीर्णम्[9]। कर्त्ता कर्म च। मूङ् बन्धने भ्वौ०। मवते मूयते वा **मूतः**—आलानपाशः[10], अन्यथा[11] बन्धनम्। कर्त्ता कर्म च॥

## अञ्जिघृसिभ्यः क्तः ॥९॥ ( पं० उ० ३।८५ )

एभ्यो धातुभ्यः क्तः प्रत्ययो भवति। अञ्ज व्यक्त्यादौ[12] रौ०। अनक्ति

---

१. 'हसे हसितौ' इति क.।

२. अत्राह निरुक्तकारः—'हस्तो हन्तेः' इति १।७)।

३. अत्राह माधवीयधातुवृत्तिकारः—'उणादिवृत्तौ तु हसिमृग्रिण्वमिदमिलूपूधूर्विभ्यस्तन् इति अमेस्तनि व्युत्पाद्यते' इति (पृ० ५३)।

४. 'यस्मात् परं नास्ति पूर्वमस्ति सोऽन्तः' इति महाभाष्य(अ० १।१।२१)मत्रानुसन्धेयम्।

५. 'दशनः' इति क.। 'दपरः वक्रम्' इति ग. घ.।

६. 'कर्म। तमु······कर्त्ता' नास्ति क.।

७. 'भाणं च' इति ख.।

८. 'समुद्रपन आदिम्भः' इति ग. घ.। 'बडिम्भः' नास्ति क.।

९. 'विषयः विशालः' इति क.।

१०. 'आलनपातः' इति ग. घ.। ख.पुस्तके नष्टान्यत्राक्षराणि।

११. 'अन्यत्रानुबन्धनम्' इति क.। 'अन्यद्वा' इति ग, घ.।

१२. 'व्यक्तिम्रक्षणगतिषु' इति क.।

अज्यते वा **अक्तम्**—अक्षितम्। कर्त्ता कर्म च। घृ क्षरणदीप्त्योः जौ०। जिघर्त्तीति **घृतम्**[1]—सर्पिः। कर्त्ता। षिञ् बन्धने सौ०। सिनोतीति **सितम्**—शुक्लम्, बन्धश्च[2]। कर्त्ता॥

## दुतनिभ्यां दीर्घश्च ॥१०॥ ( पं० उ० ३।८६ )

आभ्यां धातुभ्यां क्तः प्रत्ययो भवति दीर्घश्चानयोः। टुदु उपतापे सौ०। दुनोतीति **दूतः**—सन्धानकृत्। [कर्त्ता]। तनु विस्तारे ता०। तनोतीति **तातः**—पिता। कर्त्ता॥[3]

## जेमूट् चोदात्तः ॥११॥ ( पं० उ० ३।९२ नारा० )

जेर्धातोः क्तः प्रत्ययो भवति, मूट् चागमः स चोदात्तः, दर्घश्च धातोः[4]। जि जये, जि अभिभवे[5] भौ०। जयति जीयते वाऽसौ वायुने[6]ति **जीमूतः**[7]—मेघः। कर्त्ता कर्म च[8]॥

## हृश्याभ्यामितन्[9] ॥१२॥ ( पं० उ० ३।८८ )

आभ्यामितन्[9] प्रत्ययो भवति। हृञ् हरणे भौ०, हृ प्रसह्यकरणे जौ०।

---

१. अत्राह श्वेतवनवासी—"घरति यद्यप्यविशेषेणोपदिष्टस्तथापि घृतादिविषय एव तस्य प्रयोगः। तथा ह्युक्तं भाष्ये—'घरतिरविशेषेणोपदिष्टः, घृतं घृणा घर्म इत्येतद्विषय एव' इति (७।१।९६)।

निरुक्तकारोऽपि "अथापि नैगमेभ्यो भाषिकाः। उष्णम्, घृतम्"इत्याह। (२।२)।

२. 'प्रबन्धश्च' इति ग. घ.। 'बध्यश्च' इति ख.।

३. इतोऽग्रे 'नञ्याप इट् च। नञि उपपदे आप्नोते. क्तः इट् चागमः। नाप्नोतीति नापितः। श्मश्रु। कर्म कर्त्ता।' इत्यधिकं च.पुस्तके।

४. 'जेः क्तो भवति, मूट् चागमः स चोदात्तो भवत्येव' इति क.।

५. 'जि अभिभवे' नास्ति ख.। 'जि जये' नास्ति ग. घ.।

६. 'जीयते वाऽसौ वायुना' इति नास्ति ख.।

७. अत्राहोज्ज्वलदत्तः—'जीवनं जलं मूत्रयति स्रवयतीति पृषोदरादित्वात्सिद्धेरनार्षमिदं सूत्रमिति पुरुषोत्तमदेवः' इति (पृ० १२६)।

८. इतोऽग्रे 'मुहेरुः किच्च। मुहेर्धातोरुप्रत्ययो भवति किच्च। मुहुः—पुनः। नोमाङेर्मित् (?)' इत्यधिकः पाठः ख.पुस्तके। स च प्रकरणविरोधादपपाठः।

९. 'इतच्' इति ख. ग. घ. च. छ. ज.। पञ्चपाद्यां तु 'इतन्' इत्येव पाठः।

हरति जिहर्ति वा हरितः—वर्णः, मत्स्यश्च। कर्त्ता। श्यैङ् गतौ। श्यायत इति श्येतः—वर्णः। कर्त्ता॥

## रुहे रश्च लो वा ॥१३॥ ( पं० उ० ३।८६ )

रुहेर्धातोरितन्[1] प्रत्ययो भवति रेफस्य लकारो वा। रुह बीजजन्मनि भौ०। रोहतीति रोहितः, लोहितः—वर्णः। कर्त्ता[2]॥

## भृदृशीङ्यजिपर्विपच्यमिनमितमिहर्यिभ्योऽतच् ॥१४॥ ( पं० उ० ३।१०३ )

एभ्यो धातुभ्योऽतच् प्रत्ययो भवति। डुभृञ् धारणपोषणयोः जौ०, भृञ् भरणे भौ०। बिभर्ति भरतीति वा भरतः—राजा। कर्त्ता। दृङ् आदरे तौ०। द्रियत इति दरतः—आदरी। कर्त्ता। शीङ् स्वप्ने अ०। शेतेऽत्यर्थमिति शयतः[3]—निद्रालुः। कर्त्ता। यज देवपूजनादौ[4] भौ०। यजतीति यजतः—अग्निः, यजमानो वा। कर्त्ता। पर्व पूरणे भौ०[5]। पर्वतीति पर्वतः—गिरिः। कर्त्ता। डुपचष् पाके भौ०[6]। पचतीति पचतः—अग्निरादित्यो वा। कर्त्ता। अम गत्यादौ भौ०[6]। अमतीति अमतः—आतङ्को मृत्युर्वा। कर्त्ता। णम प्रह्वत्वे शब्दे [च भौ०]। नमति नम्यते वा नमतः—नटो देवो वा। कर्त्ता कर्म च। तमु काङ्क्षायां दै०। ताम्यतीति तमतः—निर्वेदी। कर्त्ता। हर्य गतिकान्त्योः भौ०[6]। हर्यतीति हर्यतः—वायुः, अश्वः, अग्निः, कान्तिश्च[7]। कर्त्ता॥

## पृषिरञ्जिभ्यां कित् ॥१५॥ (पं० उ० ३।१०४)

---

१. 'इतच्' इति ख. ग. व. च. छ. ज.। पञ्चपाद्यां तु 'इतन्' इत्येव पाठः।

२. सूत्रमिदं सव्याख्यं नास्ति ख.पुस्तके।

३. अत्राह भट्टोजिदीक्षितः—"दशपाद्यां तु भृदृशीङिति पठित्वा दृङ् आदरे द्रियते दरतः, शेते शयत इत्युदाहृतम्, तन्न। 'रुशन्तमग्निं दर्शतं बृहन्तम्' (ऋ० ६।१।३) 'तरणिर्विश्वदर्शतः' (ऋ० १।५०।४) 'दैव्यो दर्शितो रथः' (ऋ० ६।१११।३) इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात्" इति (मनो० पृ० ७८३)। तत्त्वबोधिनीकारोऽप्येवम् (तत्त्व० पृ० ५४४)।

४. 'देवता' इति क.। 'देवपूजासंगतिकरणदानेषु' इति ख.।

५. 'पर्व पूरणे भौ०' नास्ति क.। ६. 'भौ०' नास्ति क.।

७. 'वायुः रश्मिर्वा' इति क.।

आभ्यां धातुभ्यामितच् प्रत्ययो भवति किच्च । पृषु सेचने भ्वा० । पर्षतीति **पृषतः**—मृगः । कर्त्ता । रञ्ज रागे [भ्वा०] । रजन्ते[1]ऽस्मिन् जना इति **रजतम्**—रूप्यम् । अधिकरणम् ॥

खलतः ॥१६॥ (पं० उ० ३।१०५)

खलत इत्ययं शब्दो निपात्यतेऽतच्प्रत्यये निरुद्धः । स्खल स्खलने भ्वा० । अस्य सकारलोपो निपात्यते । स्खलिताः केशा यस्यासौ[2] **खलतः**—विकीर्णकेशः[3] । कर्त्ता । भूतकालः ॥

जॄविशिभ्यां झच् ॥१७॥ (पं० उ० ३।१२१)

आभ्यां धातुभ्यां झच् प्रत्ययो भवति । जॄष् वयोहानौ दि० । जीर्यतीति **जरन्तः**—भूतग्रामः । कर्त्ता । विश प्रवेशने तु० । विशतीति **वेशन्तः**—अप्राप्तवर्गः, कान्तश्च[4] । कर्त्ता ॥

रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥१८॥ (पं० उ० ३।१२२)

एभ्यो धातुभ्यो झच् प्रत्ययो भवति आशिषि षिच्च[5] । रुह बीजजन्मनि भ्वा० । रुह्यादिति **रोहन्तः**—वीरुत् । **रोहन्ती** स्त्री । टुनदि समृद्धौ भ्वा० । नन्द्यादिति **नन्दन्तः**—[अर्भकः] । **नन्दन्ता** स्त्री । जीव प्राणधारणे [भ्वा०] । जीव्यात् **जीवन्तः**—आयुष्मान्[6] । **जीवन्ती** स्त्री, ओषधिः[7] । अन प्राणने अ० प्रपूर्वः । प्राण्यादिति **प्राणन्तः**—वायुः, रसायनं च । **प्राणन्ती** स्त्री । कर्त्ता । षित्करणं ङीषर्थम् । भविष्यत्कालः[8] ॥

तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥१९॥
(पं० उ० ३।१२३)

एभ्यो धातुभ्यो झच् प्रत्ययो भवति आशिषि[9] षिच्च । तॄ प्लवन-

---

१. 'रञ्जन्ते' इति ग. घ. । 'रञ्जन्त्य०' इति क. । २. 'अस्येति' इति क. ।
३. 'शीलकीराः' इति क. । ४. 'कान्तश्च' नास्ति क. ।
५. 'षिच्चाशिषि विषये' इति क. । ६. 'आयुष्मान्' नास्ति क. ।
७. 'ओषधिः' नास्ति क. । ८. 'भविष्यत् कालः' नास्ति ग. घ. ।
९. केचन वृत्तिकाराः 'आशिषि' इति पदं नानुवर्तयन्ति । 'आशिषीत्येके' इति हेमचन्द्राचार्यः (हेमो० वृ० २२१, पृ० ३९) ।

तरणयोः भौ० । तीर्यात् **तरन्तः**—आदित्यः । भू सत्तायां भौ० । भूयाद् **भवन्तः**—कालः । **भवन्ती** स्त्री । वह प्रापणे भौ० । उह्याद् **वहन्तः**—वायुः । वस निवासे भौ० । उष्याद् **वसन्तः**—ऋतुः । भासृ दीप्तौ भौ० । भासिषीष्ट **भासन्तः**—सूर्यः । साध संसिद्धौ सौ० । साध्यात् **साधन्तः**—भिक्षुः । गड सेचने भौ० । गड्यात् **गडन्तः**—जलदः । मडि भूषायां भौ० । मण्ड्यात् **मण्डन्तः**—अलङ्कारः । जि अभिभवे भौ० । जीयात् **जयन्तः**—राजा[1] । **जयन्ती**—पुष्पजातिः । टुनदि समृद्धौ भौ० [ण्यन्तः] । नन्द्यात् **नन्दयन्तः**[2]—आनन्दः । कर्त्ता । भविष्यत्कालः । केचिद् वर्तमानेऽपि वर्णयन्तीति वाशिषि (?) ॥

## हन्तेर्मुक्[3] हि च ॥२०॥ (पं० उ० ३।१२४)

हन्तेर्धातोर्झच् प्रत्ययो भवति मुक्[3] चागमो हि इत्ययं चादेशः । हन हिंसागत्योः [अ०] । हन्ति तांस्तान्[4] दुर्गतान् सत्त्वानिति **हेमन्तः**[5]—ऋतुः । कर्त्ता[6] ।।

## उचिकुत्सि[7]कुषिभ्यः[8] कितच् ॥२१॥ (पं० उ० ४।१६१)

एभ्यो धातुभ्यः कितच् प्रत्ययो भवति । उच समवाये दै० । उच्यतीति **उचितम्**—वंशागतम्, श्रेष्ठं [च] । कर्त्ता । कुत्स[9] श्लेषणादौ[9] । कुत्स्यते कुत्स्यति वा **कुत्सितम्**—अश्रेष्ठम् । कर्म कर्त्ता च । कुष निष्कर्षे दै०[10] ।

---

१. 'राजा' नास्ति क. ।

२. अत्राहोज्ज्वलदत्तः—'**अनाशिष्यपि यथा स्यादिति नन्देः पुनरुपादानम्**' इति (पृ० १३५) ।

श्वेतवनवासी तु '**पूर्वसूत्रे नन्दिग्रहणम् [अ]ण्यन्तार्थम्, आशीरार्थं च**' इत्याह (पृ० १२६) ।

३. 'मुट्' इति ङ. च. । पञ्चपाद्यामपि मुडागम एव विधीयते । 'मुक् च' इति ग. घ. छ. । ४. 'तांस्तान्' नास्ति क. ।

५. **अत्राहोज्ज्वलदत्तः—'षिदित्यनुवृत्तेः स्त्रियां हेमन्ती । कथं हैमन्य ओषधयः । हेमन्तशब्दपर्यायो हेमन्शब्दोऽपि विद्यत इति सर्वत्राण् च तलोपश्च** (अ० ४।३।२२) **इत्यत्रोक्तम्**' इति (पृ० १३५) । ६. 'कालः' इति क. ।

७. क.पुस्तके सर्वत्र कुसि धातुः पठ्यते । उदाहरणे चापि 'कुसितम्—श्लिष्टम्' इत्युक्तम् । ८. 'उचिकुषितुषिभ्यः' इति क. ।

९. 'श्लेषणे दै०' इति क. ख. । १०. 'क्र्यै०' इति क. ।

कुष्यत इति **कुषितम्**—निष्कृतम् । कर्त्ता[1] ॥

## अदि भुवो डुतच् ॥२२॥ (पं० उ० ५।१)

अद्युपपदे[2] भुवो धातो[3]र्डुतच् प्रत्ययो भवति । भू सत्तायां भौ० । अत्-पूर्वः[4] । अद्भवति अद्भूयते इति **अद्भुतम्**[5]—आश्चर्यम् । भावः कर्त्ता कर्म च ॥

## सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः[6] ॥२३॥ (पं० उ० ५।११,१२)

सावुपपदे रमेर्धातोः क्तः प्रत्ययो भवति दमे गम्यमाने पूर्वपदस्य च दीर्घः । रमु क्रीडायां भौ० सुपूर्वः[7] । सुष्ठु रमतीति **सूरतः**—दमितो हस्ती, अन्यो वा दान्तः । कर्त्ता ॥

## फलेरितजादेशच पः ॥२४॥ (पं० उ० ५।३७)

फलेर्धातोरितच् प्रत्ययो भवति आदेशच पः[8] । ञिफला विशरणे । फल-

---

१. 'कर्त्ता' नास्ति क. ।

२. अत्राह श्वेतवनवासी—"विस्मयपर्यायोऽयमद्भुतशब्दः । यथाकथंचिद् व्युत्पत्तिः । तेन क उपपदार्थः, कोऽपि प्रकृत्यर्थः, कश्च प्रत्ययार्थ इत्यभिनिवेशो न कार्यः । अत्तीति अद् 'क्विप् च' (अ० ३।२।७६) इति क्विप्" इति (पृ० २१०) ।

३. 'भुवो धातोः' नास्ति क. । ४. 'अत्पूर्वः' नास्ति क. ।

५. माध्वमतानुयायिनस्तु '**अदि भुवो डुतच्**' इति सूत्रपाठमपपाठमाहुः । तथाहि—"**भर्गः–भम दीप्तौ, रमु क्रीडायाम्, गम्लृ गतौ धातुसमुदायादसुन् 'उणादयो बहुलम्' (अ० ३।३।१) इत्युक्तत्वात् । 'अदिभूभ्यां डुतच्' इति यथा**" इति जयतीर्थः (ऋग्भा० टी०, पत्र २) । अत्राह नरसिंहदेवः—"**कथं धातुसमुदायात् प्रत्ययस्योदाहरणमिति ? प्रसिद्धार्थकपदस्यैव सूत्रेषूपपदत्वदर्शनात् 'अद्'शब्दस्यार्थविशेषे प्रयोगादर्शनादुपपदत्वाभावात्……'अदि भुवः' इत्यपपाठ एव**" इति (छलारी टीका भा० १, पत्र ५) ।

वेदे अद्भुतशब्दस्याद्युदात्तत्वमन्तोदात्तत्वं चाभयं दृश्यते । तत्र वेङ्कटमाधवः स्वरभेदादर्थभेदमाह । तथाहि "**वषट्कृतस्याद्भुतस्य दस्रा(ऋ० १।१२०।४)इत्यत्र महन्नामाद्युदात्तः स्यात्, अत्राश्चर्यभूतेऽन्तोदात्तः स्वरः इति माधवः**" इति देवराजः (पृ० ३०५) युक्तं चैतत् प्रकृतसूत्रे प्रत्ययस्य चित्वात् ।

६. नारायणश्वेतवनवासिनाविदं सूत्रं द्विधा कृत्वा व्याचक्षाते ।

७. 'सुपूर्वः' नास्ति क. ।

८. "**लोष्टपलितौ (पं० उ० ३।८७ । द० उ० १०।१७) इति निपातितत्वादन-**

तीति **पलितम्**—केशविकारः । कर्त्ता ॥

## जनेस्तो रश्च ॥२५॥ (पं० उ० ५।५२)

जनेर्धातोस्तप्रत्ययो भवति रश्चान्तादेशः । जनी प्रादुर्भावे दै० । जायत इति **जर्तः**—वस्त्रलोम[१] । कर्त्ता ॥

## शकेर्ऋतिन् ॥२६॥ (पं० उ० ४।६०)

शकेर्धातोर्ऋतिन् प्रत्ययो भवति । शक्लृ शक्तौ सौ० । शक्नोतीति **शकृत्**[२]—विष्ठा । कर्त्ता ॥

॥ तकारः ॥

## हनिकुषिनीरमिकाशिभ्यः क्थन् ॥२७॥ (पं० उ० २।२)

एभ्यो धातुभ्यः क्थन् प्रत्ययो भवति । हन हिंसागत्योः अ० । हन्तीति **हथः**—कालः । कर्त्ता । कुष निष्कर्षणे[३] क्र्० । कुष्णातीति **कुष्ठम्**—व्याधिः । कर्त्ता । णीञ् प्रापणे भौ० सुपूर्वः । शोभनं[४] नयतीति **सुनीथः**—नीतिमान् धर्मज्ञश्च[५] । कर्त्ता । रमु क्रीडायां भौ० । रमन्तेऽस्मिन् प्राणिन इति **रथः**—स्यन्दनम् । अधिकरणम् । काशृ दीप्तौ । काश्यतेऽनेनाग्निरिति **काष्ठम्**—इन्धनम्[६] । करणम् ।

## अवे भृञः[७] ॥२८॥ (पं० उ० २।३)

अवे उपपदे भृञो धातोः क्थन् प्रत्ययो भवति । डुभृञ् धारणपोषणयोः जौ० । अवबिभ्रति जनास्तस्मादिति[८] **अवभृथ**—यज्ञान्तस्नानम्[९] । अपादानम् ॥

---

र्थकमित्याहुः" इति श्वेतवनवासी (पृ० २२१) । नारायणोऽपि 'एतच्च हेयम्' इत्याह (पृ० १३१) । 'पकारादेशः' इति क. । १. 'वस्त्रं लोम' इति ग. घ. ।

२. 'बाहुलकाद् यजेः कश्च । यकृत्–कालखण्डम्' इत्युज्ज्वलदत्तः (पृ० १५८) ।

३. 'निष्कर्षे' इति क. । ४. 'भौ० सुपूर्वः । शोभनं' नास्ति क. ।

५. 'नीतिमान् धर्मज्ञश्च' नास्ति क. । ६. 'दारु' इति क. ।

७. सूत्रमिदं नास्ति ज. ।

८. 'तस्माज्जनाः शेषाः' इति ख. । 'अवबिभर्त्ति अस्माज्जन इति शेष इति' इति क. । ९. 'यज्ञावसानम्' इति क. ।

## उषिकुषिगर्तिभ्यस्थन् ॥२९॥ (पं० उ० २।४)

एभ्यो धातुभ्यस्थन् प्रत्ययो भवति। उष दाहे भौ०। उष्यतेऽसौ कदुष्णैर्व्यजनै[1]रिति **ओष्ठः**। उष्यते वा वास्तुनोत्पन्नेनोष्मणा[2] इति **ओष्ठः**—दन्तच्छदः। कर्म। कुष निष्कर्षे क्र्यै०। कुष्णाति कुष्यते वा तस्मिन्नाहारजातमिति[3] **कोष्ठम्**—उदरम्। कर्त्ता अधिकरणं च। गै शब्दे भौ०। गीयतेऽसौ गायति[4] वा तामिति **गाथा**—वृत्तजातिः[5]। कर्म। ऋ गतिप्रापणयोः भौ०। ऋच्छत्यर्यते[6] वासाविति[7] **अर्थः**—धनम्, वाङ्मयप्रवृत्तिश्च। कर्त्ता[8] कर्म च॥

## सर्त्तेर्णित् ॥३०॥ (पं० उ० ४।९५)

सर्त्तेर्धातोस्थन् प्रत्ययो भवति णिच्च। सृ गतौ भौ० जौ०। स्रियते धावति सर्सर्त्ति इति वा **सार्थः**[9]—पथिकसंघातः। कर्त्ता कर्म च॥

## जॄवृभ्यामूथन्[10] ॥३१॥ (पं० उ० २।५)

आभ्यामूथन् प्रत्ययो भवति। जॄष् वयोहानौ दै०। जीर्यत इति **जरूथम्**—कश्मलम्, अन्यद्वा। कर्म। वृञ् वरणे सौ०। वृणोति व्रियते वा **वरूथम्**—रथगुप्तिः। कर्त्ता कर्म च[11]॥

## पातॄतुदिवचिरिचिसिचि[12]भ्यस्थक् ॥३२॥ (पं० उ० २।६)

एभ्यो धातुभ्यस्थक् प्रत्ययो भवति। पा पाने भौ०। पिबति तेजांसीति[13] **पीथः**—आदित्यः, मकरश्च[14]। कर्त्ता। तॄ प्लवनतरणयोः भौ०। तरति

१. 'व्यजानकदुष्णोरि' इति ग. घ.।

२. '०ते वा स्तरुत्पन्नेनोष्मणो' इति ख.। 'उष्यते ····· इत्योष्ठः' इति नास्ति क.।

३. 'तस्मिन्नाहारमिति' इति क.।

४. 'गायन्ति' इति क. ख.।

५. 'शब्दजातिः' इति क.।

६. '०ति तमर्यंते' इति क. ख.।

७. 'वेति' इति क.।

८. 'कर्त्ता' 'च' इति द्वे पदे न स्तः ख.।

९. 'यस्तत् सार्थे सार्थत्वं सहार्थीभावः तद् ध्रुवम्' (महा० १।४।२५)।

१०. 'जॄवृञोरूथन्' इति च.।

११. सव्याख्यानं सूत्रमिदं नास्ति क.पुस्तके।

१२. '०सिचि०' नास्ति क.।

१३. 'तेजसेति' इति क.।

१४. 'मकरश्च' नास्ति क.।

तीर्यते वाऽनेनेति **तीर्थम्**—पुण्यनदी[1]जलविशेषः। कर्त्ता करणं च। तुद व्यथने तौ०। तुदति तेन[2] तस्मिन्निति वा **तुत्थम्**—द्रव्यम्। करणमधिकरणं च। वच परिभाषणे आ०। उच्यते तदिति **उक्थम्**—सामभेदः। कर्म[3]। रिचिर् विरेचने रौ०। रिच्यते तदिति[4] **रिक्थम्**—गृहधनम्, गोत्रजद्रव्यं[5] च। कर्म। सिच क्षरणे। सिच्यते तदिति **सिक्थम्**—मधूत्थम्। कर्म[6]॥

**अर्त्तेर्निरि ॥३३॥ (पं० उ० २।७)**

निरि उपपदेऽर्त्तेर्धातोस्थक्[7] प्रत्ययो भवति। ऋ गतौ भौ०। नित्यं निश्चितमृच्छत्यर्यते वा **निर्ऋथम्**—स्थानम्[8]। कर्त्ता कर्म च॥

**निशीथगोपीथावगथाः[9] ॥३४॥ (पं० उ० २।८)**

एते शब्दा निपात्यन्ते थक्प्रत्यये निरूढाः[10]। शीङ् स्वप्ने आ० निपूर्वः। नितरां शेरतेऽस्मिन् प्राणिन[11] इति **निशीथः**—अर्धरात्रः। अधिकरणम्। पा पाने भौ० गोशब्दपूर्वः। गावः पिबन्ति तस्मिन्निति **गोपीथः**—जलद्रोणिः। अधिकरणम्। गम्लृ गतौ भौ० अवपूर्वः। गमेर्मलोपो निपात्यते थक् च। अवगच्छत्यस्मिन्निति **अवगथः**—प्रातःसवनम्[12]। अधिकरणम्[13]। गायतेर्ह्रस्वत्वं निपात्यते। अवगायन्ति तदिति **अवगथम्**—साम। कर्म[14]॥

**गश्चोदि[15] ॥३५॥ (पं० उ० २।१०)**

उद्युपपदे गायतेस्थक् प्रत्ययो भवति[16]। गै शब्दे भौ०। उद्गायति

---

१. 'मुख्यो नद्यादिः' इति क.। २. 'अनेन' इति ग. घ.।
३. 'कर्म' नास्ति क.। ४. 'रौ०......तदिति' नास्ति क.।
५. 'मैत्रद्रव्यम्' इति ख.। 'चत्रनद्रव्यम्' इति ग. घ.।
६. 'सिच्......कर्म' नास्ति क.।
७. 'अर्त्तेर्धातोर्नियुपपदे थक्' इति ग. घ.।
८. 'स्थानम्' नास्ति क.। ९. '०अवगाथाः' इति क.।
१०. 'निरुद्धाः' इति क.। ११. 'नियतं शेरते तस्मिन् जनाः' इति क.।
१२. 'प्रातः स्नातः' इति ग. घ.। उज्ज्वलदत्तोऽप्येवम् (पृ० ६३)।
१३. 'गम्लृ गतौ......अधिकरणम्' इति नास्ति क.।
१४. 'गै शब्दे। अस्य ह्रस्वत्वं निपात्यते। अवगायन्ति तस्मिन्निति अवगाथम्—साम। कर्त्ता' इति क.। १५. 'ग उदि' इति च.।
१६. 'गा इत्येतस्माद् धातोस्थक् प्रत्ययो भवति उदि उपपदे' इति ग. घ.।

उद्गीयते वा **उद्गीथः**—साम[1]। कर्त्ता कर्म च ॥

## समीणः ॥३६॥ (पं० उ० २।११)

सम्युपपदे इणो धातोस्थक् प्रत्ययो भवति । इण् गतौ आ० [सम्पूर्वः]। समेति समीयते वाऽसौ **समिथः**—सङ्गमः। कर्त्ता कर्म च[2] ॥

## तिथपृष्ठगूथयूथप्रोथाः ॥३७॥ (पं० उ० २।१२)

एते शब्दा निपात्यन्ते थक् प्रत्यये निरूढाः[3]। ष्ठा गतिनिवृत्तौ भौ०, तिम आर्द्रीभावे दै०। तिष्ठतेस्तिशब्दादेशो निपात्यते, तिम्यतेश्चान्तलोपो निपात्यते[4]। तिष्ठतीति **तिथः**—कालस्थितिः। कर्त्ता। तिम्यतीति **तिथः**—प्रावृट्कालः। कर्त्ता। स्पृश संस्पर्शने भौ०। अस्य सकारलोपो निपात्यते। स्पृशति स्पृश्यते वा **पृष्ठम्**—शरीरैकदेशः। कर्त्ता कर्म च। गुङ् अव्यक्ते शब्दे भौ०। अस्य दीर्घत्वं निपात्यते। गवते गूयते वा तदिति **गूथम्**—अमेध्यम्, विष्ठा। कर्त्ता कर्म च। यु मिश्रणे आ०। अस्य दीर्घत्वं निपात्यते[4]। युवन्ति तस्मिन्निति **यूथः**—गजादिसंघातः[5]। अधिकरणम्। यवनं वा **यूथः**। भावः। प्रुङ् गतौ भौ०। अस्य गुणो निपात्यते। प्रवत इति **प्रोथः**—वराहमुखम्[6]। कर्त्ता। एवमिण् गतौ समिपूर्वः। **समिथः**[7] ॥

## शीङ्शपिरुगमिवन्दिजीविप्राणिभ्योऽथः ॥३८॥ (पं० उ० ३।१०६)

एभ्योऽथ प्रत्ययो भवति। शीङ् स्वप्ने आ०। शेतेऽत्यर्थमिति **शयथः**—अजगरः, वराहश्च। कर्त्ता। शप आक्रोशे भौ०। शपन्ति तेनेति **शपथः**—प्रत्ययकरणम्। करणम्। रु शब्दे आ०। रौतीति **रवथः**—शब्दकारः। कर्त्ता। गम्लृ गतौ भौ०। गच्छति गम्यते वा **गमथः**—पथिकः, पन्थाश्च।

---

१. 'प्रणवः' इति क.। 'उद्गायति उद्गीथः उद्गीयते वा साम' इति ख. ग. घ.। २. सव्याख्यं सूत्रमिदं नास्ति ख.पुस्तके।

३. 'निरुद्धाः' इति क.। ४. 'निपात्यते' नास्ति क.।

५. 'गजादिसम्पातः' इति ग. घ,। 'पथिकसंघातः' इति क.।

६. 'वराहमुखरिपुः' इति ग. घ.। 'सर्पवराहमुखैकदेशः' इति प्रक्रियाकौमुदीटीकाकृत् (भा० २, पृ० ६२६)।

७. 'एवं·····समिथः' इति नास्ति क. ख.। अन्येषु कोशेष्वितोऽग्रे पाठस्त्रुटितः प्रतिभाति। वस्तुतोऽयुक्तोऽयं पाठः, समिथशब्दस्य पूर्वत्र (द० उ० ६।३६) व्युत्पादनात्।

कर्त्ता कर्म च। वदि[1] अभिवादनस्तुत्योः भौ०। वन्दते वन्द्यते वा **वन्दथः**— स्तोता, स्तुत्यं च। कर्त्ता कर्म च[2]। जीव प्राणधारणे भौ०, प्रकृत्यन्तरं ण्यन्तो वा। जीवति जीवयतीति वा **जीवथः**—जलं वायवश्च[3]। कर्त्ता[4]। अन प्राणने अा० प्रपूर्वः। प्राणितीति **प्राणथः**—बलवान्, ईश्वरश्च। कर्त्ता[4]॥

## आङि वसः[5] ॥३९॥ (पं० उ० ३।१०८)

आङ्युपपदे[6] वसेर्धातोरथप्रत्ययो भवति। वस निवासे भौ० आङ्पूर्वः। एतस्मिन्नावसन्तीति **आवसथः**— आलयः। अधिकरणम्॥

## भृञश्चित् ॥४०॥ ( पं० उ० ३।१०९ )

भृञो धातोरथप्रत्ययो[7] भवति चित्संज्ञकः[8]। डुभृञ् धारणपोषणयोः जौ०, भृञ् भरणे भौ०[9]। बिभर्त्ति भरति वा **भरथः**—लोकपालः। कर्त्ता॥

## रुदिविदिभ्यां ङित्[10] ॥४१॥ (पं० उ० ३।११०)

---

१. अत्राह भट्टोजिदीक्षितः—'उज्ज्वलदत्तेनात्र पञ्चमो वञ्चिः पठ्यते। अन्यैस्तु वन्दिः' इति (मनो० पृ० ७८३) तत्त्वबोधिनीकारोऽप्यत्रानुकूलः (पृ० ५४४)।

२. 'कर्त्ता कर्म च' नास्ति क.। ३. धार्मिकः सजलान्नवायवश्च' इति क.।

४. 'कर्त्ता' नास्ति क.।

५. 'उपसर्गे वसेः' इति क. 'उपसर्गे वसेः' इति छ. ज.। 'वसेः' इति मनोरमा (पृ० ७८३)। ६. 'उपसर्गे उपपदे' इति क.।

७. 'वसः आङ्युप ···· रथप्रत्ययः' इति नास्ति ग. घ.।

८. यत्र प्रत्ययस्य चित्त्वं कित्त्वं ङित्त्वं वाऽतिदिश्यते तत्र पूर्वे वैयाकरणाः संज्ञाकरणमप्यभ्युपगच्छन्ति स्म। अत एव भगवतः पतञ्जलेः "संज्ञाकरणं तर्हीदम्— गाङ्कुटादिभ्योऽञ्णित् ङित्संज्ञो भवतीति। असंयोगाल्लिट् कित् संज्ञो भवतीति" (म० भा० १।२।१) वचनं संगच्छते। परं महाभाष्येऽस्य पक्षस्य दूषितत्वात् तदनुयायिभिः सर्वैरपि वैयाकरणैरतिदेशपक्ष एवाश्रियते। दशपादीवृत्तिकारस्तु संज्ञाकरणपक्षमेवाश्रयति। अयं हि कांचित् प्राचीनां वृत्तिमनुरुणद्धीत्युपरिष्टादपि वक्ष्यते (द० उ० ७।२७ टिप्पण्याम्)। ९. 'जौ०····· भौ०' नास्ति क.।

१०. अत्राह भट्टोजिदीक्षितः—"अत्रोज्ज्वलदत्तः 'रुविदिभ्यां ङित्' इति पठित्वा रौतीति रुवथः—श्वा इत्युदाजहार। दशपादीवृत्तिकारस्तु 'रुदिविदिभ्यां ङित्' इति पपाठ। किं च 'उपसर्गे वसेः' इत्येवं रूपमुत्तरसूत्रं द्वावपि न पेठतुः। तथाहि—'शीङ् शय' इति सूत्रानन्तरं 'सोपसर्गाद् वसेः' [प्रमादात् उपसर्गे इति मुद्रितम्] 'भृञश्चित्'

आभ्यामथप्रत्ययो भवति चित्संज्ञकः किच्च। रुदिर् अश्रुविमोचने आ०। रोदित्यर्थमिति **रुदथः**—शिशुः, आर्त्तो वा। कर्त्ता। विद ज्ञाने आ०। वेत्तीति **विदथः**—ज्ञानी। कर्त्ता॥

॥ थकारष्ठकारसहितः[1] ॥

## शृदृभसोऽदिः ॥४२॥ (पं० उ० १।११६)

एभ्या धातुभ्योऽदिप्रत्ययो भवति। शॄ हिंसायां क्र्यै०। शीर्यन्तेऽस्यां गुल्मवनस्पतीनां तेजांसीति **शरत्**—ऋतुः[2]। अधिकरणम्। दॄ भये क्र्यै०। दृणाति दीर्यते वा **दरत्**[3]—भीरुः[4]। कर्त्ता कर्म च। भस भर्त्सनदीप्त्योः

---

'रुविदिभ्यां कित्' इत्युज्ज्वलदत्तस्य सूत्रपाठः (पृ० १३१)। अन्यस्य तु 'शीङ् शय' इति सूत्रानन्तरं 'आङि वसेः' 'भृञश्चित्' 'रुदिविदिभ्यां कित्' इति सूत्रपाठः (पृ० २३१–२३३)। तदेतत् पाठद्वयं भाष्यादिविरोधादुपेक्षितम्। तथाहि—गाङ्कुटादिसूत्रे—'के पुनश्चङादयः ? चङ्–अङ्–नजिङ्–अथङ्–अनङः' इति भाष्यम् (अ० १।२।१)। 'रुदिविदिभ्यां ङित्' इत्यनुवर्तमाने 'उपसर्गे वसेः' इत्यथप्रत्ययः इति कैयटेन व्याख्यातम्। एवं च कुर्वतां भाष्यादिविरोधः स्पष्ट एवेत्यास्तां तावत्। भाष्यकैयटमतेऽपि 'ङित्' इत्यस्यानुवृत्तेः फलं चिन्त्यम्" इति (मनो० पृ० ७८३)।

नागेशभट्टस्तु—"भाष्ये अथङिति। एवमानुपूर्वीक एव प्रत्यय इति भावः। अन्यथा फलाभावात् 'उपसर्गे वसेः' इत्यत्र ङिदित्यननुवृत्तौ भाष्यासङ्गतिः स्पष्टैवेति केचित्" इत्याह (अ० १।२।१ उद्योते)। एतेन नागेशमते 'रुविदिभ्यामथङ्' इत्येवं सूत्रमिति स्पष्टम्।

तत्त्वबोधिनीकारस्तु—"अत्रोज्ज्वलदत्तः 'रुविदिभ्यां कित्' इति पठित्वा रौतीति रुवथः—श्वा इत्युदाजहार। दशपादीवृत्तिकारस्तु 'रुदिविदिभ्यां कित्' इति पपाठ। इह तु भाष्यानुरोधेन ङिदिति पठितम्। तथाहि 'गाङ्कुटादि'सूत्रे—'के पुनश्चङादयः ? 'चङ्–अङ्–नजिङ्–अथङ्–अनङः' इति भाष्यम्। किदिति पठतां तु 'अथङ्' इति भाष्यं न संगच्छेतेति दिक्।...... उज्ज्वलदत्तेन तु 'सोपसर्गाद् वसेः' इति पठितम्, अन्यैस्तु 'आङि वसेः' इति पठितम्" इति (तत्त्व० पृ० ५४४)।

१. 'थकार' इति ख. ग.।

२. 'तृणगुल्मवनस्पतीनां तेज इति शरत्—स्त्री ऋतुः' इति क.।

३. अत्राह हेमचन्द्रः—'दरच्चेदर्थेऽव्ययं प्राकृते। दरेत्यल्पार्थे। स एष संस्कृते कविभिर्भ्रान्त्या प्रयुक्तः' इति (हैमधातुपा० २४२)।

४. 'म्लेच्छजातिः' इति क.। प्रक्रियाकौमुदीटीकाकृत्तु 'भीरुर्म्लेच्छः' इत्युभय-

जौ०। बभस्ति भस्यते वा तस्मिन्नाहार इति **भसत्**—आमाशयस्थानम्। अधिकरणम्॥

## त्यजितनियतिभ्यो डित् ॥४३॥ ( पं० उ० १।१२३ )

एभ्योऽदिप्रत्ययो भवति डिच्च। त्यज वयोहानौ भौ०। त्यजत इति **त्यत्**—परोक्षवादी[1]। कर्त्ता। तनु विस्तारे ता०। तनोतीति **तत्**—अयं च परोक्षवादी[2]। कर्त्ता। यती प्रयत्ने भौ०। यतत इति **यत्**—

**प्रत्यक्षे च परोक्षे च समीपे दूरतस्तथा।**
**सर्वेषां च प्रयोक्तव्यस्तथा पुंस्त्रीनपुंसके[3]॥**

कर्त्ता। सर्वनामान्ये[4]तानि॥

## एतेस्तुट् च ॥४४॥ ( पं० उ० १।१२१ )

एतेर्धातोरदिप्रत्ययो भवति तुट् चागमः। इण् गतौ अ०। एतीति **एतत्**—प्रत्यक्षवादी[5]। कर्त्ता। एतदपि सर्वनामैव[6]॥

## दृणातेः षुग्घ्रस्वश्च ॥४५॥ (पं० उ० १।१२०)

दृणातेर्धातोरदिप्रत्ययो भवति, षुक्चागमः, ह्रस्वश्च धातोः। दॄ विदारणे[7] क्र्यै०। दृणाति दीर्यते वाऽस्यामिति **दृषत्**—शिला। कर्त्ता अधिकरणं च[8]॥

## कुणिपुल्योः[9] किन्दच् ॥४६॥ (पं० उ० ४।८१)

आभ्यां किन्दच् प्रत्ययो भवति। कुण शब्दोपकरणयोः तौ०। कुणतीति **कुणिन्दः**—शब्दः[10], उपकरणं च। कर्त्ता। पुल महत्त्वे भौ०। पोलतीति[11]

---

माह (भा० २, पृ० ६२६)। '**जनपदविशेषः, हृदयं, व्याधिविशेषश्च**' इति श्वेतवनवासी (पृ० ४७)।

१. 'परोक्षवादी' इति नास्ति क.।
२. 'अयं च परोक्षवादी' इति नास्ति क.।
३. श्लोकोऽयं नास्ति क.पुस्तके। अनुपलब्धमूलमिदम्।
४. 'सर्वेषां नामानि' इति क. ख.।
५. 'प्रत्यक्षवादी' इति नास्ति क.।
६. 'एतदपि सर्वनामैव' नास्ति क.।
७. 'भये' इति क.।
८. 'अधिकरणं कर्म च' इति ग. घ.।
९. 'कुणिपुलोः' इति क. च. छ. ज.।
१०. 'शब्दः' नास्ति क.।
११. 'तौ०। पुलति' इति ख.।

पुलिन्दः—मनुष्यजातिः[1]। कर्त्ता ॥

## कुपेर्वश्च वा ॥४७॥ (पं० उ० ४।९२)

कुपेर्धातोः किन्दच् प्रत्ययो भवति वश्चान्तादेशो वा। कुप क्रोधे दै०। कुप्यतीति **कुविन्दः, कुपिन्दः**—तन्तुवायः। कर्त्ता ॥

## शाशपिभ्यां ददनौ ॥४८॥ (पं० उ० ४।१०६)

आभ्यां ददनौ प्रत्ययौ भवतः[2]। शो तनूकरणे दै०। श्यति शायते वा **शादः**—मृदुः[3]। कर्त्ता कर्म च। **शप** आक्रोशे भौ०। शपन्ति तेनेति **शब्दः**[4] "**धुटां तृतीयश्चतुर्थे**[षु]" [कातन्त्रे ३।८।८] इति योगविभागादचतुर्थेऽपि तृतीयो भवति[5]। संस्कृता वाक्। **करणम्**[6] ॥

## अब्दादयश्च ॥४९॥ ( पं० उ० ४।१०७ )

अब्दादयः **शब्दा** निपात्यन्ते दप्रत्यये निरूढाः[7]। आप्लृ व्याप्तौ सौ०। अस्य ह्रस्वत्वं निपात्यते बश्चान्तादेशः। आप्नोत्यसौ सूर्ययोनिं निमेषादिकालमिति **अब्दः**—संवत्सरः। **कर्त्ता**। मनु अवबोधने ता०, मन ज्ञाने दै०। मनुते मन्यते वा **मन्दः**—अप्रगल्भः[8]। कर्त्ता। वृहि वृद्धौ भौ०। अस्य हलोपो

---

१. '**म्लेच्छजातिः**' इति प्रक्रियाकौमुदीटीकाकृत् (भा० २, पृ० ६२६)।

२. '**आभ्यां दश्च** दंश्च प्रत्ययः' इति ख.। 'शाशपिभ्यां धातुभ्यां यथासंख्यं देश्चप्रत्ययौ भवतः' इति क.।

३. 'पटुः' इति ग. घ.। 'कृशः' इति प्र० कौ० टी० भा० २, पृ० ६२६।

४. 'भौ०......शब्दः' नास्ति क.।

'**शब्दः शब्दक्रियायाम्, उपसर्गादाविष्कारे च इत्यस्मात् घञि स्वरे रूपे च सिद्धे प्रपञ्चार्थं व्युत्पादनम्**' इति श्वेतवनवासी (पृ० १६२)। विशेषस्तु तत्रैवावलोकनीयः।

५. देवराजस्तु ग्रन्थमिमं किञ्चिद् भेदेनोद्धरति। तथाहि—"**शाशपिभ्यां दानौ** [? **ददनौ**]। **अस्य वृत्तिग्रन्थः—शपते अनेनेति** शब्दः संस्कृता वाक्। **झलां तृतीय इति योगविभागात् अचतुर्थेऽपि** तृतीयो भवति" इति (पृ० ८७)।

६. 'घोषः संस्कृता वाक्' इति क.। अयं पाठो नास्ति ग. घ.।

७. 'निरुद्धाः' इति क.।

८. अत्राह श्वेतवनवासी—'**अपरावृत्तिः—आप्लृ व्याप्तौ अस्योपधाया ह्रस्वत्वं निपात्यते, पकारस्य जश्त्वं, अब्द इति। मन ज्ञाने मन्यत इति मन्दोऽपटुः**' इति (पृ०

निपात्यतेऽगुणत्वं च । वृंहति वृंह्यते वा वृन्दः—संघातः[1] । कर्त्ता कर्म च । कमु कान्तौ भ्वा० । अस्योपधाया उत्वं निपात्यते । काम्यत इति कुन्दः—पुष्पजातिः । कर्म ॥

युष्यसिभ्यां मदिक् ॥५०॥ (पं० उ० ३।१५५ अन्ये १।१२६)

आभ्यां मदिक् प्रत्ययो भवति । युष इति सौत्रो धातुः । युष्यत इति युष्मत्—सर्वनाम[2] । अस भुवि । अस्त्ति अस्मत् । असू क्षेपणे दै० । अस्यतीति अस्मत्[3] । कर्त्ता ॥[4]

8197

॥ दकारः[5] ॥

कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः[6] ॥५१॥
( पं० उ० १।१४२ )

एभ्यो धातुभ्यः कनिन् प्रत्ययो भवति । यु मिश्रणे अ० । यौति यूयते वा युवा—तरुणः । कर्त्ता कर्म च । वृषु सेचने भ्वा० । वर्षतीति वृषा—महेन्द्रः, वृषभश्च[8] । कर्त्ता । तक्षू त्वक्षू तनूकरणे सौ० भ्वा० । तक्ष्णोति तक्षति वा तक्षा—शिल्पी । कर्त्ता । राजृ दीप्तौ भ्वा० । राजतेऽत्यर्थमिति राजा—नृपः । कर्त्ता । धन्व इति सौत्रो धातुः । धन्वति धन्वा—कुत्सितो देशः । कर्त्ता ॥ द्यु अभिगमे अ० । द्यूयतेऽसाविति द्युवा—अभिगमनीयः । कर्म[9] । दिवु क्रीडादौ[10] दै० प्रतिपूर्वः । प्रतिदीव्यतेऽस्मिन्निति प्रतिदिवा—दिवसः । अधिकरणम् ॥

---

१६२) ।

१. 'समूहः' इति ख. ।

२. 'सर्वनाम' इति नास्ति ख. । ३. 'असु······अस्मत्' इति नास्ति ख. ।

४. सवृत्ति सूत्रमिदं नास्ति क. ।

५. इतोऽग्रे 'धकारान्तास्तकारान्तेषु लिखिताः । बुधशब्दादयस्तु सूत्रान्तरेण' इति ख.पुस्तकेऽधिकः पाठः ।

६. 'बन्धि' इति क. । एवं वृत्तावपि 'बन्ध······बन्धति बन्ध·–' इति ।

७. '०दिवुभ्यः' इति च. । ८. 'महेन्द्राद्रिः, नभश्च' इति ग. घ. ।

९. 'अभिगमनार्थः । कर्त्ता' इति ग. घ. ।

१०. 'क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इति ग. घ. ।

प्राक्प्रत्ययनिर्देशोऽक्षादिप्रसिद्ध्यर्थः[1]। [तेन] अन्येभ्योऽपि धातुभ्यः कनिन् प्रत्ययो भवति। अक्षू व्याप्तौ संघाते च सौ०। अक्ष्णोतीति **अक्षा**—दृष्टिनिपातः। कर्त्ता। ईश ऐश्वर्ये आ०। ईष्टेऽसाविति[2] **ईशा**—परमात्मा। कर्त्ता[3]। लूञ् छेदने क्र्यॉ०। लुनातीति **लुवा**—दात्रम्। कर्त्ता॥

**नञि जहातेः ॥५२॥ (पं० उ० १।१४६ नारा०)**

नञ्युपपदे जहातेर्धातोः कनिन् प्रत्ययो भवति। ओहाक् त्यागे जौ० नञ्पूर्वः। न जहातीति **अहः**—दिवसः। कर्त्ता॥

**सप्यशूभ्यां तुट् च[4] ॥५३॥ (पं० उ० १।१४३)**

सपि अशू इत्येताभ्यां कनिन् प्रत्ययो भवति तुट् चागमः। षप समवाये भौ०[5]। सपन्तीति **सप्त**—संख्या। कर्त्ता। अशू व्याप्तौ सौ०। अश्नुते इति **अष्टौ**—संख्यैव कर्त्ता॥

**नुदंशोर्गुणश्च ॥५४॥ (पं० उ० १।१४४)**

नुदंशिभ्यां धातुभ्यां कनिन् प्रत्ययो भवति गुणश्च। णु स्तवे[6] आ०। नौतीति **नव**—संख्या। कर्त्ता। दंश दशने भौ०। दशतीति **दश**—संख्यैव। कर्त्ता॥[7]

**श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्[8] ॥५५॥ (पं० उ० १।१४६)**

---

1. अत्राह देवराजः—'कनिन् युवृषि० इत्यत्र प्राक्प्रत्ययनिर्देशोऽधिकविध्यर्थः' इति (पृ० १८७)।

उज्ज्वलदत्तोऽपि—'प्राक्प्रत्ययनिर्देशादन्यतोऽपि भवति' इति (पृ० ५६)।

2. 'यष्टेऽसौ' इति क.। 3. 'कर्त्ता' नास्ति क.।

4. उज्ज्वलदत्तः सूत्रमिदं न पठति 'कनिन् युवृषि' इति सूत्रे च प्राक्प्रत्ययनिर्देशात् नवदशपदे साधयति (पृ० ५६)। 5. 'भौ०' नास्ति क.।

6. 'स्तुतौ' इति क.। 'स्तवने' इति ख.।

7. इतोऽग्रे 'पचेर्नुट् च। पचेः कनिन् नुट् चागमः। पचतीति पंच संख्या'। इत्यधिकं च.।

8. 'मघवन्निति' इति ङ.। 'दशपाद्यामितिशब्दो न पठ्यते' इति (मनो० ७६३। तत्त्व० ५२८)।

एते अष्टादश[1] निपात्यन्ते कनिन् प्रत्यये निरूढाः[2]। टुओश्वि गतिवृद्ध्योः भ्वा०। अस्येकारलोपो निपात्यते। श्वयति गृहं गृहं प्राप्नोति इति[3] **श्वा**—कुक्कुरः। कर्त्ता। उक्ष सेचने भ्वा०[4]। उक्षतीति **उक्षा**—वृषः। कर्त्ता। पुष पुष्टौ क्र्या० दि० भ्वा०[5]। अस्योपधाया दीर्घत्वं निपात्यते। पुष्णाति पुष्यति पोषतीति वा **पूषा**[5]—आदित्यः। कर्त्ता। प्लिह गतौ भ्वा०। अस्यापि दीर्घत्वमुपधाया निपात्यते[6]। प्लेहत इति **प्लीहा**—कुक्षिव्याधिः, अध्वगश्च। कर्त्ता। क्लिदू आर्द्रीभावे दि०। अस्य गुणो निपात्यते। क्लिद्यत इति **क्लेदा**—शशी, विर्चचिका च[7]। कर्त्ता[8]। ष्णिह प्रीतौ दि०[9]। अस्य गुणो निपात्यते। स्निह्यतीति **स्नेहा**—शीतांशुकः। कर्त्ता। मुह वैचित्त्ये दि०। अस्योपधाया दीर्घत्वं धश्चान्तादेशो रुडागमश्च निपात्यते। मुह्यन्ति अस्मिन् हताः प्राणिन इति **मूर्द्धा**—उत्तमाङ्गम्। अधिकरणम्। टुमस्जो शुद्धौ भ्वा०। मज्जत्यस्थिष्विति **मज्जा**—अस्थ्यन्तः सारः। कर्त्ता। ऋ गतौ भ्वा०। अस्य गुणो निपात्यते[10] युगागमश्च प्रत्ययस्य चामुडागमः। ऋच्छत्यर्यते वा **अर्यमा**—सूर्यः[11]। कर्त्ता कर्म च। प्सा भक्षणे अ०। अस्य विश्वशब्द उपपदे। विश्वं प्साति भक्षयतीति[12] **विश्वप्सा**—अग्निः। कर्त्ता। जनी प्रादुर्भावे दि०। अस्य परिशब्द उपधालोपो मश्चान्तादेशो निपात्यते[13]। परिजायतेऽसाविति **परिज्मा**—चन्द्रः, अग्निश्च[14]। कर्त्ता। टुओश्वि गतिवृद्ध्योः भ्वा०। अस्य द्वितीय-

---

१. 'शब्दा' इति क.।

[अत्र त्रयोदश शब्दा निपात्यन्ते, तस्मात् 'त्रयोदश' इति युक्तः पाठः स्यात्।]

२. 'निरुद्धाः' इति क.। ३. 'श्वयति धाष्टर्याद् वार्यमाणोऽपि' इति क.।

४. 'भ्वा०' नास्ति क.।

५. अत्राह काशिकाकृत्—'पूषाऽन्तोदात्त निपात्यते' इति (अ० ६।२।१४२। पृ० ५६६)।

६. 'निपात्यते' इति नास्ति ख. ग. घ.। 'अस्योपधाया दीर्घत्वं' इति ग. घ.। 'अस्यापि दीर्घत्वं निपात्यते' इति क.।

७. 'शशी विर्चचिका च' इति नास्ति क.। 'विर्चचिका च' इति नास्ति ग. घ.।

८. 'कर्त्ता' नास्ति क.। ९. 'दि०' नास्ति क.।

१०. 'स्निह्यतीति……निपात्यते' इत्ययं पाठो नास्ति क.।

११. 'दिवः' इति ख.। 'देवः' इति क.। १२. 'भक्षयति' नास्ति क.।

१३. 'अस्य परिशब्द उपपदे उपधालोपो निपात्यते मश्चान्त्यस्य' इति क.।

१४. अत्राह भट्टोजिदीक्षितः सिद्धान्तकौमुद्याम्—परिजायते परिज्मा चन्द्रोऽग्निश्च

यान्ते मातृशब्द उपपदे सप्तम्येकवचनं समासकरणमिकारालोपश्च निपात्यते सम्प्रसारणाभावश्च[1]। मातरं श्वयतीति **मातरिश्वा**—वायुः। कर्त्ता। मह पूजायां भ्वा०। अस्य घोऽन्तादेशो वुगागमश्च निपात्यते। मह्यतेऽसाविति **मघवा**[2]—इन्द्रः। कर्म॥

## वीपतिभ्यां तनन् ॥५६॥ ( पं० उ० ३।१४४ )

आभ्यां[3] तनन् प्रत्ययो भवति। वी गत्यादौ अ०। वीयत तदिति **वेतनम्**—भृतकदानम्[4]। कर्म। पत्लृ गतौ भ्वा०। पतन्त्यस्मिन्निति **पत्तनम्**[5]—माल-क्रयविक्रयस्थानम्। अधिकरणम्॥

## गमेरिनिः ॥५७॥ (पं० उ० ४।६)

गमेर्धातोरिनिप्रत्ययो[6] भवति। गम्लृ गतौ भ्वा०। गमिष्यतीति **गमी**—जिगमिषुः। कर्त्ता॥

---

इति (पृ० ५२८)। प्रौढमनोरमायान्तु—'परिजायत इत्यादि एतच्च दशपादीवृत्त्यनुरोधेनोक्तम्' इति (पृ० ७६३)। तत्त्वबोधिनीकारोऽपि तथैव (पृ० ५२८)।

१. 'संप्रसारणाभावश्च' नास्ति क.।

२. अत्राह श्वेतवनवासी—'नन्वस्यां वृत्ताववग्रहो न प्राप्नोति मघवन्निति। नैष दोषः—'नहि लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्' (महाभा० ३।१।१०९) इति (श्वे० पृ० ५७)।

"अविमर्क्तिनिर्देशोऽपरिसमाप्तत्वज्ञापनाय। तेन पञ्चन्नादयः सिद्ध्यन्ति" इति श्वेतवनवासी (पृ० ५७)। ३. 'वी पति इत्येताभ्याम्' इति क.।

४. 'मजकदानम्' इति ग. घ.। 'तृतकर्मधनम्' इति क.।

५. श्वेतवनवासी पत्तनलक्षणमाह—

'अनेकजातिसंबाधे परद्रव्योपशोभितम्।
सागरोपान्तसंश्रावसमयैः षड्भिरन्वितम्'॥ इति॥

अन्ये तु— [रायपसेणीसूत्रव्याख्याने पृ० २०६]।

'पत्तनं शकटैर्गम्यं घोटकैर्नौभिरेव च।
नौभिरेव तु यद्गम्यं पट्टणं तत्प्रचक्षते'॥ इति॥

अपरे तु— [प्रश्नव्याकरणसूत्रव्याख्याने पृ० ३०६]।

'पत्तनानि जलस्थलपथयोरन्यतरयुक्तानि' इति।

६. 'अस्य इनिप्रत्ययो' इति क.।

## आङि णित्[1] ॥५८॥ ( पं० उ० ४।७ )

आङ्युपपदे गमेर्धातोरिनिप्रत्ययो भवति णिच्च। गम्लृ गतौ भ्वा० आङ्पूर्वः[2]। आगमिष्यतीति आगामी—कालान्तरगतः, पथिकश्च, भव्यो विधिश्च[3]। कर्त्ता ॥

## भुवश्च ॥५९॥ ( पं० उ० ४।८ )

भुवो धातोरिनिप्रत्ययो भवति णिच्च। भू सत्तायाम् उदात्तः भ्वा०। भविष्यतीति भावी—आगाम्यर्थः। कर्त्ता ॥

## प्रे स्थः ॥६०॥ ( पं० उ० ४।९ )

प्रे उपपदे स्था इत्येतस्माद् धातोरिनिप्रत्ययो भवति णिच्च। ष्ठा गतिनिवृत्तौ भ्वा०। प्रस्थास्यत इति प्रस्थायी—गृहोन्मनाः[4]। कर्त्ता[5] ॥

## परमे कित्[6] ॥६१॥ (पं० उ० ४।१०)

परमशब्द उपपदे स्था इत्येतस्माद्धातोरिनिप्रत्ययो भवति किच्च। परमे तिष्ठतीति परमेष्ठी[7]—प्रजापतिः। कर्त्ता ॥

## मन्थः[8] ॥६२॥ ( पं० उ० ४।११ )

मन्थेर्धातोरिनिप्रत्ययो[9] भवति किच्च। मन्थ विलोडने क्र्या०। मथ्नातीति मन्थाः—वायुः, वैशाखः,[10] वज्रश्च[11]। कर्त्ता[12] ॥

---

१. 'आगमेः णिनिः' इति ज.।

२. 'गम्लृ ····· पूर्वः' नास्ति क.। ३. 'विधिश्चापि' इति क.।

४. 'गन्तुमनाः' इति ख.। ५. सव्याख्यं सूत्रमिदं नास्ति क.पुस्तके।

६. 'परमे स्थः कित्' इति क.। अमरटीकासर्वस्वकारोऽप्येवं पठति भा० १, पृ० १५, ७५।

७. अत्राह श्वेतवनवासी—'सुषामादित्वात् (अ० ८।३।९८) षत्वम्। तत्पुरुषे कृति बहुलम् (अ० ६।३।१४) इत्यलुक्' इति (पृ० १४०)।

नारायणस्तु—'स्थास्थिन्स्थृणाम् (अ० ८।३।९७ वा०) इतीह षत्वम्' इत्याह (पृ० ८६)। ८. 'मन्थेश्च' इति ङ. च.।

९. 'अस्मादिनिप्रत्ययो' इति क.।

१०. 'वैशाखः' इति नास्ति क.। वैशाखः=मन्थनदण्ड इत्यर्थः(अ० ५।१।११०)।

११. 'खड्गो वा' इति ख.। १२. 'कर्त्ता' नास्ति क.।

## पतेस्थश्च[1] ॥६३॥ ( पं० उ० ४।१२ )

पतेर्धातोरिनिप्रत्ययो भवति थकारश्चान्तादेशः[2] । पत्लृ गतौ भ्वा०। पतन्त्यनेनेति **पन्थाः**—मार्गः[3] । करणम् ॥

## अदेस्त्रिन्[4] ॥६४॥ ( पं० उ० ४।७० )

अदेर्धातोस्त्रिन् प्रत्ययो भवति । अद भक्षणे अ०। अत्ति तपः स्वाध्यायमिति **अत्रिः**—ऋषिः । स्वरे रूपे च विशेषः । कर्त्ता ॥

## पतेरत्रिनिः[5] ॥६५॥ ( पं० उ० ४।७१ )

पतेर्धातोरत्रिनिः प्रत्ययो भवति । पत्लृ गतौ भ्वा०[6] । पतत्यर्थमिति **पतत्री**—पक्षी[7] । कर्त्ता ॥

## हृसृभ्यां क्वनिप् ॥६६॥ ( पं० उ० ४।१०४ )

आभ्यां क्वनिप् प्रत्ययो भवति । हृञ् हरणे भ्वा०, हृ प्रसह्यकरणे[8] जु०। हरति जिहर्त्तीति वा **हृत्वा**[9]—वायुः । कर्त्ता । सृ गतौ भ्वा० जु० । धावति[10] ससर्त्ति वा **सृत्वा**—सर्पः । कर्त्ता ॥

---

१. 'पतेरिनिस्थ च' इति ज. ।

२. 'भवति किच्च थश्चान्तादेशः' इति क, ।      ३. 'मार्गः' नास्ति क. ।

४. यद्यपि सर्वकोशेषु सूत्रमिदमत्रैवोपलभ्यते तथापि स्थानभ्रष्टमिदमिति सुव्यक्तम् । यतो ह्यनेन 'अत्रि' इतीकारान्तं प्रातिपदिकं व्युत्पाद्यते, प्रकरणं चात्र नकारान्तानां विद्यते । अतोऽनेन सूत्रेणेकारान्तप्रकरणे भाव्यम् । यच्चेकारान्तप्रकरणे '**अदेस्त्रिनिच्च**' सूत्रं तदपि प्रकरणमवरुणद्धि । नहीकारान्तप्रकरणे नकारान्तस्य '**अत्रिन्**' प्रातिपदिकस्य व्युत्पादनं कथञ्चित् संगच्छते । अन्यत्सर्वं '**अदेस्त्रिनिच्च**' (द० उ० १।३७ पृ० २३, २४) इत्यत्र टिप्पण्यामवलोकनीयम् ।

५. 'पतेरत्रिन्' इति क. ख. ग. घ. ङ. । वृत्तावप्येषु कोशेषु '··· धातोरत्रिन् प्रत्ययो · पतत्रिः—पक्षी' इत्येवं पाठ उपलभ्यते । पञ्चपादीवृत्तिकारा अपि 'पतेरत्रिन्' इति पठित्वा 'पतत्रिः' इतीकारान्तं व्युत्पादयन्ति । परमत्र नकारान्तप्रकरणानुरोधेन 'पतेरत्रिनिः' इत्येव पाठो युक्तः । अन्यथा पूर्वसूत्रवत् स्थानभ्रष्टं स्यात् ।

६. 'पत्लृ गतौ भ्वा०' नास्ति क. ।      ७. 'पक्षी' नास्ति क. ।

८. 'हृ प्रसह्यकरणे' इति नास्ति ख. ग. घ. ।      ९. 'हृत्वा' नास्ति क. ।

१०. 'सरति' ग. घ. । 'सिसर्त्ति' इति सार्वत्रिकः पाठः सन्नप्यशुद्ध एव ।

## सृजेरम् च[1] ॥६७॥ ( पं० उ० ४।१०५ )

सृजेर्धातोः क्वनिप् प्रत्ययो भवति अमागमश्च । सृज विसर्गे तौ० दै० । सृजति सृज्यते वा स्रज्वा—तन्तुसृक्[2], तन्तुः, रज्जुर्वा[3] । कर्त्ता कर्म च[4] ॥

## स्नामदिपद्यर्तिपृशकिभ्यो वनिप् ॥६८॥ ( पं० उ० ४।१२१ )

एभ्यो वनिप् प्रत्ययो भवति । ष्णा शौचे आ० । स्नाति तस्यामिति **स्नावा**—नदी,[5] शिरा च । अधिकरणम् । मदी हर्षे दै० । माद्यतीति **मद्वा**—पानम्[6] । **मद्वरी** 'वनो र च' (अ० ४।१।७) इति नकारस्य रेफः, **मदिरा** । कर्त्ता । पद गतौ दै० । पद्यत इति **पद्वा**—रथः । **पद्वरी**—गतिः । कर्त्ता । ऋ गतौ भौ० जौ० । ऋच्छति इयर्ति अर्यते वा[6] **अर्वा**—आसनम्, हयश्च । कर्त्ता कर्म च । पॄ पालनपूरणोः क्र्० [जौ०] । पृणाति पिपर्ति पूर्यते वा **पर्वा**—अङ्गुल्यग्रम्[7], पुण्यतिथिश्च[8] । कर्त्ता कर्म च[9] । शक्लृ गतौ सौ० । शक्नोति शक्यते वा **शक्वा**—समर्थः । **शक्वरी**[10]—युवतिः, रात्रिश्च[11] । कर्त्ता कर्म च ॥

## शीङ्क्रुशिरुहिजिध्विसृधृभ्यः क्वनिप् ॥६९॥ ( पं० उ० ४।१२२ )

एभ्यो: क्वनिप् प्रत्ययो भवति । शीङ् स्वप्ने आ० । शेते इति **शीवा**—सर्पः । **शीवरी** । [कर्त्ता] । क्रुश आह्वाने रोदने च भौ०[12] । क्रोशति क्रुश्यते वा **क्रुश्वा**—क्रोष्टा । कर्त्ता कर्म च । रुह बीजजन्मनि[13] भौ० । रोहतीति **रुह्वा**—वनस्पतिः । कर्त्ता । जि जृ अभिभवे भौ० । जयतीति **जित्वा**—

---

१. सव्याख्यं सूत्रमिदं नास्ति क. । २. 'तन्तुसृक्' नास्ति क. ।
३. 'तन्तुः रज्जुर्वा' इति नास्ति ख. ग. घ. । ४. 'कर्म' इति क. ।
५. 'नदी' नास्ति क. ।
६. 'पानम्......अर्यते वा' इति नास्ति ग. घ. । 'अग्रल्यपुम्' इति ग. घ. । 'पर्व पूरण' इति ख. । ७. 'पॄ पालन......अङ्गुल्यग्रम्' इति नास्ति क. ।
८. 'पुण्यतीर्थश्च' इति क. । ९. 'कर्त्ता कर्म च' नास्ति क. ।
१०. अत्राह निरुक्तकारो यास्कः—"शक्वर्य ऋचः, शक्नोतेः । 'तद् यदाभिर्वृत्र-मशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वम्' [तु०—कौ० ब्रा० २३।२ ॥ ऐ० ब्रा० ५।७।३] इति विज्ञायते" इति (निरु० १।८) । ११. 'रात्रिश्च' नास्ति क. ।
१२. 'रोदने च भौ०' इति नास्ति ख. । 'भौ०' इति नास्ति क. ।
१३. 'प्रादुर्भावे' इत्यधिकं ग. घ. ।

इन्द्रः। कर्त्ता। क्षि क्षये [भौ०]। क्षयतीति क्षित्वा—कालः। कर्त्ता[1]। सृ गतौ भौ० जौ०[2]। सरति[3] सर्सत्ति इति वा सृत्वा—वायुः। कर्त्ता। धृञ् अवस्थाने तौ०[4]। ध्रियन्तेऽस्मिन् भूतानीति धृत्वा—विष्णुः। धृत्वरी—भूमिः। अधिकरणम्॥

## ध्याप्योः सम्प्रसारणं च ॥७०॥ (पं० उ० ४।१२३)

आभ्यां क्वनिप् प्रत्ययो भवति सम्प्रसारणं च[5]। ध्यै चिन्तायां भौ०। ध्यायति अशुभमिति[6] धीवा—निषादः, शकुनिश्च[7]। कर्त्ता। प्यङ् वृद्धौ भौ०[8]। प्यायत इति पीवा—मांसोपचितिः। पीवरी। कर्त्ता। सम्प्रसारणस्य हलः [अ० ६।४।२] इति दीर्घः[9]॥

## अदेर्धश्च[10] ॥७१॥ (पं० उ० ४।१२४)

अदेर्धातोः क्वनिप् प्रत्ययो भवति धश्चान्तादेशः। अद भक्षणे आ०। अत्ति बलमिति अध्वा—मार्गः कर्त्ता॥

## प्र ईरिसद्योस्तुट् च ॥७२॥ (पं० उ० ४।१२५)

प्रशब्द उपपदे ईरिसद्योर्धात्वोः[11] क्वनिप् प्रत्ययो भवति तुट् चागमः। ईर क्षेपे चौ० प्रपूर्वः[12]। प्ररयतीति प्रेत्वा—वायुः। कर्त्ता। षद्लृ विशरणगत्यवसादनेषु भौ० प्रपूर्वः[12]। प्रसीदति प्रसद्यते वा प्रसद्वा[13]—मूढः। कर्त्ता कर्म च॥

## मनिन्[14] ॥७३॥ (पं० उ० ४।१५५)

सर्वधातुभ्यो मनिन् प्रत्ययो भवति। डुकृञ् करणे ता०। क्रियते तत्

---

१. 'क्षि क्षये······कर्त्ता' इति नास्ति ग. घ.। 'कर्त्ता' नास्ति क.।
२. 'जौ०' नास्ति क.। ३. 'धावति' इति क. ख.।
४. 'भौ०' इति क.। ५. 'आभ्यां····· च' नास्ति क.।
६. 'शुभम्' इति ख.। 'शुभाशुभम्' इति क.। ७. 'शाकुनिकः' इति क.।
८. 'भौ०' नास्ति क.। ९. 'सम्प्रसारणस्य हल उत्तरस्य दीर्घः' इति क.।
१०. 'अतेर्धश्च' इति नारायणश्वेतवनवासिनौ। ११. 'अनयोः' इति क.।
१२. 'प्रपूर्वः' इति नास्ति क.। १३. 'प्रसीदतीति प्रसद्वा' इति ख. ग. घ.।
१४. पञ्चपादीवृत्तिकाराः 'सर्वधातुभ्यो मनिन्' इत्येवं पठन्ति। देवराजस्तु 'मनिन्' इत्येव पठति (पृ० ८)।

अत्र 'इन्' (द० उ० १।४६) सूत्रस्था टिप्पणी द्रष्टव्या।

फलार्थिभिरिति **कर्म**—चेष्टा। कर्म[1]। चर गत्यर्थः भौ०। चरितं तत्र शस्त्रेणेति[2] **चर्म**—त्वक्। अधिकरणम्[3]। भूतकालः। वृञ् वरणे सौ०। वृणोति व्रियते वा **वर्म**—आवरणम्। कर्त्ता कर्म च। शॄ हिंसायां क्र्यै०। शृणाति दुःखमिति **शर्म**—सुखम्। कर्त्ता। जनी प्रादुर्भावे दि०। जायते जन्यते[4] इति **जन्म**। कर्त्ता कर्म च। भस भर्त्सनदीप्त्योः जौ०[5]। भसितं तदग्निनेति **भस्म**[6]—भूतिः। कर्म। भूतकालः॥

## बृंहेर्नोऽच्च[7] ॥७४॥ ( पं० उ० ४।१५६ )

बृंहेर्धातोर्मनिन् प्रत्ययो भवति नकारस्य चाकारः। बृहि वृद्धौ भौ०। बृंहति बृंह्यते वा **ब्रह्म**—परम्, तेजः, अध्ययनं च। कर्त्ता कर्म च॥

## अशिशकिभ्यां छन्दसि ॥७५॥ ( पं० उ० ४।१५८ )

आभ्यां मनिन् प्रत्ययो भवति छन्दसि विषये। अशू व्याप्तौ सौ०, अश भोजने क्र्यै०। अश्नुते अश्नाति वा **अश्मा**[8]—पाषाणः। कर्त्ता। शक्लृ शक्तौ सौ०। शक्नोति शक्यते वा **शक्मा**—समर्थः। कर्त्ता कर्म च[9]॥

## हृ[10]भृधृसृस्तृ[11]शृभ्य ईमनिन्[12] ॥७६॥ (पं० उ० ४।१५६)

---

१. 'कर्म' नास्ति क.। २. 'चरतीति चर्म' इति ग. घ.।

३. कर्मचर्मशब्दयोर्व्यस्ता व्युत्पत्तिः ग.घ.योः। ४. 'जन्यते' नास्ति क.।

५. 'जौ०' नास्ति क.। ६. 'कर्त्ता कर्म च......भस्म' इति नास्ति ग. घ.।

७. 'बृंहेरम् नलोपश्च' इति श्वेतवनवासी (पृ० १८१)। 'बृंहतेर्नोऽच्च' इति च.।

ब्रह्मशब्दो हि लिङ्गभेदेन द्विविधः। तत्र पुल्लिङ्गोऽन्तोदात्तः, नपुंसकलिङ्ग आद्युदात्तः। पुल्लिङ्गः प्रातिपदिकस्वरेणान्तोदात्त इति सायणः (ऋ० १।१०।१)। अन्यो हि प्रत्ययस्य नित्त्वेनाद्युदात्तो नब्विषयस्येति वा।

८. अत्राहोज्ज्वलदत्तः—"भाषायामपि दृश्यते। अश्मानं दृषदं मन्ये ....इति जिनेन्द्रबुद्धिः" इति (पृ० १८४)। ९. सूत्रं तद्वृत्तिश्च नास्ति ग. घ.।

१०. '०दृ०' इत्यधिकं च.।

११. 'स्तृसृसू' इति ग. घ.। वृत्तावपि पूर्वापरीभूतः पाठः।

१२. अत्राह नरसिंहाचार्यः—'यद्यपि पञ्चपाद्यां ह्रस्वेकारादिः प्रत्ययः पठ्यते

एभ्यो धातुभ्य ईमनिन् प्रत्ययो भवति छन्दसि[1] विषये। हृञ् हरणे भौ०, हृ प्रसह्यकरणे जौ०। हरति जिहर्त्ति वा हरीमा—मातरिश्वा, कालो वा[2]। कर्त्ता। डुभृञ् धारणपोषणयोः जौ०। बिभर्त्ति भ्रियते वा भरीमा—राजा कुटुम्बश्च। कर्त्ता कर्म च। धृङ् अवस्थाने भौ०। ध्रियत इति धरीमा—धर्मः। कर्त्ता[3]। सृ गतौ भौ० जौ०। धावति सर्सर्त्ति स्रियते[4] वा सरीमा—कालः। कर्त्ता कर्म च। स्तृञ् आच्छादने क्र्०। स्तीर्यत इति स्तरीमा—आच्छादनम्। कर्म[5]। षूङ् प्राणिगर्भविमोचने आ०, षू प्रेरणे भौ०, षूङ् प्राणिप्रसवे दै०। सूते सुवति सूयते वा सवीमा—गर्भः। कर्त्ता॥

## जनीहृ[6]भ्यामिमनिन् ॥७७॥ (पं० उ० ४।१६०)

आभ्यां धातुभ्यामिमनिन् प्रत्ययो भवति। जनी प्रादुर्भावे दै०। जायते जन्यते वा जनिमा—संसारः। कर्त्ता कर्म च। हृञ् हरणे भौ०, हृ प्रसह्य-

---

तथापि दशपाद्यां दीर्घादिपाठादयं शब्दः साधुः' इति (छलारीटीका भा० १, पत्र ८२ ख.)।

पञ्चपाद्यां क्वचिद् इमनिच् पठ्यतेऽन्यत्र च ईमनिच्, तदुभयमपि सवीमादिषु (यजुः ४।२५) शब्देषु प्रत्ययादेर्दीर्घत्वदर्शनादाद्युदात्तत्वदर्शनाच्चायुक्तम्।

अपि च 'इमनिच्' इति पाठे उत्तरसूत्रे तस्यैव नित्त्वं ब्रूयात् न तु प्रत्ययान्तरं, लाघवात्।

सायणेन 'हुस्तृभृधृस्वसृभ्य ईमन्' (ऋ० १।२२।१३) इत्युद्धृतम्।

१. 'छन्दसि विषये' नास्ति क.।

अत्राह तत्त्वबोधिनीकारः—"दशपाद्यां तु शृणातिर्न पठ्यते, तत्स्थाने सृधातुं प्रक्षिप्य प्रत्ययं च दीर्घादिं नितं च कृत्वा 'स्तृसृभ्य ईमनिन्' इति पठ्यते। छन्दोग्रहणं चानुवर्त्तितम्। युक्तं चैतत् ··· भाषायामदर्शनात्''इति (तत्त्व० पृ० ५५७)। मनोरमाकारोऽप्येवम् (मनो० पृ० ८००)। नारायण (पृ० ११२) श्वेतवनवासिना (पृ० १८२) वपि दशपादीवत् पठतः।

२. 'मातरिश्वा, कालो वा' नास्ति क.।

३. 'धृङ्······कर्त्ता' नास्ति ग. घ.। 'धरीमा–कर्म कर्त्ता' इति क.।

४. 'सर्सर्त्ति सरति वा स्रियते' इति ग. घ.।

५. 'धर्मः। कर्त्ता' इति ग. घ.। सूत्रवदत्रापि सरीमास्तरीमा इत्येतयोः पूर्वापरव्युत्पत्तिः।

६. 'जनीकृभ्याम्' इति ग. घ.।

करणे जौ०। हरति जिहर्त्ति वा हरिमा[1]—मृत्युः, वायुर्वा[2]। कर्त्ता॥

**वेञः सर्वत्र ॥७८॥ ( पं० उ० ४।१६१ )**

वेञः सर्वत्र इमनिन् प्रत्ययो भवति छन्दसि भाषायां च। वेञ् तन्तुसन्ताने भ्वौ०। वयति ऊयते वा **वेमा**—कुविन्दभाण्डम्। कर्त्ता कर्म च॥

**नामन्सामन्सोमन्[3]होमन्रोमन्[4]लोमन्व्योमन्विधर्मन्पाप्मन्व्येमन् ॥७९॥ (पं० उ० ४।१६२)**

एते शब्दा निपात्यन्ते मनिन् प्रत्यये निरूढाः। णमु प्रह्वत्वे[5] भ्वौ०। अस्य मकारलोपो निपात्यते दीर्घश्च। नमन्ति तेनेति **नाम**—संज्ञाकरणम्। [करणम्]। षिञ् बन्धने स्वौ०। अस्य आकारादेशो[6] निपात्यते। सिनोति स्वरानिति **साम**—गेयं छन्दः। कर्त्ता[7]। सुनोतेर्नकारलोपो निपात्यते प्रत्ययस्य[8]। सुनोति सूयते वा **सोम**—यज्ञद्रव्यं, चन्द्रमाश्च। कर्त्ता कर्म च। जुहो-

१. 'डुकृञ् करणे, कृञ गतौ। करोति करतीति वा करिमा' इति ग. घ.।
२. 'वायुः' नास्ति क.। ३. '०स्तोमन्' इति च. छ. ज.।
४. 'रोमन्' नास्ति ख. ग. घ.। ५. 'प्रह्वत्वे शब्दे च' इति ग. घ.।
६. 'अस्य इकारलोप उपधाया आकारश्च' इति क.।
७. 'गेयं कर्म कर्त्ता' इति क.।
८. 'षुञ् अभिषवे। अस्य नलोपो गुणश्च' इति ग. घ.। 'नुगागमो निपात्यते' इति ख.।

अस्य सूत्रस्य वृत्तिपाठोऽतिभ्रष्टः संजातः। सोमहोमशब्दयोर्नलोपो निपात्यते तेनानयोरकारान्तता द्योत्यते, परं सूत्रे नकारान्तावेव पठ्येते इति महद् वैपरीत्यं लक्ष्यते। श्वेतवनवासी तु 'सोमः अकारान्तोऽपि' इति (पृ० १८३) ब्रुवन्नकारान्तमकारान्तं चोभयं प्रतिजानीते, तस्मादत्र वृत्तेः सूत्रस्य वा सम्यक्पाठोऽन्वेष्यः।

नकारान्तः सोमन्शब्दो वेदेऽन्तोदात्तो दृश्यते, मनिन्प्रत्ययान्ते नित्त्वादाद्युदात्तत्वं प्राप्नोति। अतो निपातनादन्तोदात्तत्वं विधेयम्। श्वेतवनवासिवृत्तेः कस्मिश्चित् कोशे 'इमनिच् प्रत्ययान्ता निपात्यन्ते' (पृ० १८३) इत्युपलभ्यते। सर्वत्र च प्रत्ययस्येकारलोपो निपात्यते। तस्मिन् कोशे 'जनिहृभ्याम्' (पं० उ० ४।१६०) इत्यत्रापि 'इमनिच्' प्रत्ययः पठ्यते। तथा सति प्रत्ययस्य चित्त्वादन्तोदात्तत्वं सम्यगुपपद्यते प्रकरणमपि संगच्छते। मनिन्प्रत्ययान्तनिपातने प्रकरणविरोधपरिहाराय मण्डूकप्लुतिः समाश्रयणीया भवति, अन्तोदात्तत्वं चापि निपात्यमिति महद्गौरवं भवति।

तेरपि प्रत्ययस्य नलोपो निपात्यते[1]। हूयते इति **होम**—अग्निहवनम्। कर्म। लूञ् छेदने क्र्०। अस्य वा[2] लकारस्य रत्वं निपात्यते। लूयत इति **रोम**,[3] **लोम**—केशाः। कर्त्ता कर्म च। व्येञ् तन्तुसन्ताने भ्वौ०। व्येञ ओत्वं निपात्यते[4]। वीयते तद् वायुना घनैश्चेति[5] **व्योम**—नभः। कर्म। धृञ् अवस्थाने भ्वौ० विपूर्वः। विविधं ध्रियत इति **विधर्मा**—वायुः। कर्म। पा रक्षणे अ०। अस्य पुगागमो निपात्यते। पान्ति अस्मादात्मानमिति **पाप्मा**—रक्षः। पापं च[6]। अपादानम्। व्यतेरेत्वं च निपात्यते[7]। व्ययत इति **व्येम**—संसारः। कर्त्ता[8]॥

## शॄ[9] मिथुने मनिन्[10] ॥८०॥ (पं० उ० ४।१६३)

---

१. जुहोतेर्न[ कार-ख.पाठः ]लोपो निपात्यते प्रत्ययस्य गुणश्चोपधायाः इति ग. घ.। 'प्रत्ययस्य च गुणश्चोपधायाः' इति ख.॥

२. पदमिदं नास्ति ख. ग. घ.।

३. "रुहे रुचेश्च रौतेश्च रुदिरुध्योरुषेरपि।
**षण्णामेव च धातूनां रोमशब्दं निपातयेत्।**"
इति क्वाचित्कः श्वेतवनवासिग्रन्थः [ पृ० १८४ ]।

४. 'लूयत…निपात्यते' नास्ति क.। ५. 'मेघैश्चेति' इति क.।

६. 'पापं च' नास्ति ख.। ७. इतोऽग्रे 'गुणे कृते' इत्यधिकं क.।

८. "हिनोतेः सुनोते रौतेर्लुनातेर्ध्यायतेर्मनिन्नित्यनेनैव हेमन्नित्यादि च रूपाणि सिद्धानि। तेन निपातनं प्रपञ्चार्थम्" इति क्वाचित्कः श्वेतवनवासिग्रन्थः [पृ० १८४]।

९. अविभक्त्यन्तनिर्देशो विज्ञेयः।

१०. 'वसु शॄणातेः' ख. ग. घ. ज। 'वसौ शॄणातेर्मनिन्' इति ङ.। 'वसौ शॄणातेः' इति च.। 'मिथुने मनिन्' इति नारायण [पृ० ११३] श्वेतवनवासिनौ [ पृ० १८४ ] 'मिथुने मनिः' इत्युज्ज्वलदत्त [ पृ० १८५ ] भट्टोजिदीक्षितौ [ पृ० ५५८ ]।

इदमत्रावधेयम्—यथात्र सूत्रपाठे विसंवादस्तथा वृत्तावपि विप्रवदन्ते वृत्तिकाराः। वस्तुतत्त्वस्यानिश्चयत्वात् सर्वा अपि वृत्तयो निर्दिश्यन्तेऽधस्तात्—

तत्र तावत् श्वेतवनवासी—'मिथुने स्त्रियां पुंसि च गम्यमाने सर्वधातुभ्यो मनिन् प्रत्ययः। धर्माधर्म [ ? ] इत्यादि' इति क्वाचित्कः पाठः [पृ० १८४] 'मिथुने गम्यमाने मनिन्प्रत्ययः। मिथुने स्त्रीपुरुषयोरित्यर्थः। शॄ हिंसायाम्। सुशर्मा ब्राह्मणः ब्राह्मणी च। सुशर्मा क्षत्रियः क्षत्रिया च' इत्यपरः पाठः [ पृ० १८४ ]।

नारायणस्तु—'मैथुने द्योत्ये मनिन् स्यात्। श्र धातोः सुशर्मा मैथुनेच्छावती स्त्री।

मिथुने गम्यमाने मनिन् प्रत्ययो भवति[1] शॄ हिंसायां क्र्° वसुशब्दपूर्वः। वसवोऽस्य दुरितं शीर्यासुरिति **वसुशर्मा**। हरिरस्य दुरितं[2] शीर्यादिति **हरिशर्मा**। एवमन्येऽपि। भविष्यत्कालः॥

**सातिभ्यां मनिन्मनिणौ ॥८१॥ (पं० उ० ४।१६४)**

सा अति इत्येताभ्यां धातुभ्यां यथासंख्यं मनिन्मनिणौ इत्येतौ प्रत्ययौ भवतः। षो अन्तःकर्मणि दे°। स्यतीति **सामा**—अन्तःकर्म। कर्त्ता। अत सातत्यगमने भ्वा°। अतति अत्यते वा सर्वभूतैस्तेषु तेष्विति[3] **आत्मा**—पुरुषः। कर्त्ता कर्म च॥

**अर्त्तेर्भुक्षिनक्[4] ॥८२॥ ( पं० उ० ५।७५ )**

---

स्त्रीपुल्लिङ्गयोः सर्वधातोः मनिन् स्याद् इत्यन्ये। तत्राद्ये पक्षे सुशर्ममात्रार्थत्वे सामान्योक्त्यनुपपत्तिः। उत्तरत्र सर्वधातोः मनिनुक्त्यैव सिद्धेः वैयर्थ्यम्। स्वरार्थोऽनुबन्धान्तरपाठस्तु न दृष्टः' इत्याह [ पृ० ११३ ]।

भट्टोजिदीक्षितः—'उपसर्गक्रियासंबन्धो मिथुनम्। स्वरार्थमिदम्। सुशर्मा' इति [ सि० कौ० पृ० ५५८ ]।

उज्ज्वलदत्तोऽपि—'यत्रोपसर्गो धातुक्रियया सम्बद्धस्तन्मिथुनम्। तत्र धातोर्मनिः स्यात्। सुशर्मा—राजविशेषः। धृञ्। सुधर्मा—क्षत्रियः। एवमन्येऽपि। स्वरार्थमिदम्' इति [ पृ० १८५ ]।

उज्ज्वलदत्तभट्टोजिदीक्षितयोर्व्याख्याने कृदुत्तरपदप्रकृतिस्वरे प्रत्ययस्वरेणान्तोदात्तत्वं प्राप्नोति। परं सुशर्मन्शब्दो वेद उत्तरपदाद्युदात्तो दृश्यते, एवं सुधर्मन्शब्दोऽपि शतपथब्राह्मणे उत्तरपदाद्युदात्त एवोपलभ्यते।

१. 'शॄ हिंसायाम्। वसुशब्दपूर्वस्य शृणातेर्धातोर्मनिन् प्रत्ययो भवति' इति ख. ग. घ.। २. 'दुर्गति' इति क.। ३. सर्वभूतैरिति' इति क.।

४. 'भुक्षिनक्' इति ख. ग. घ. ङ.।

सूत्रमिदं पञ्चपाद्यां नोपलभ्यते। केवलं नारायण एवैतादृक् सूत्रं पठति, [ पृ० १३७ ] श्वेतवनवासी तु 'अर्त्तेर्भुक्षिन्' इति न्यासमाह [ पृ० २३३ ]।

अत्र भट्टोजिदीक्षितो विशेषमाह—"इह ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे 'अन्येभ्योऽपि दृश्यते' [ ? ] इति डः। ऋभुक्षः स्वर्गवज्रयोरिति विश्वः। ततो मत्वर्थीये इनिः। ऋभुक्षिन्निति नान्तं प्रातिपदिकम्। आत्वात्वे। ऋभुक्षा इन्द्रः, ऋभुक्षाणो ऋभुक्षाणः इत्युज्ज्वलदत्तः [ पृ० १४६ ]। दशपाद्यां तु 'अर्त्तेर्भुक्षिनक्' इति सूत्रमुपन्य-

अर्त्तेर्धातोर्भु क्षिनक्[1] प्रत्ययो भवति। ऋ गतौ भौ० जौ०। ऋच्छति इयर्त्ति वा ऋभुक्षा—इन्द्रः। कर्त्ता॥

लूञो मनिप्[2] ॥८३॥

लूञो धातोर्मनिप्[2] प्रत्ययो भवति। लूञ् छेदने क्र[3]०। लूयन्त इति लोमानि—रोमाणि। कर्म॥

हन्तेयु र्न्नाद्यन्तयोर्घत्त्वतत्त्वे च ॥८४॥ (पं० उ० ५।४४)

हन्तेर्धातोर्युन्प्रत्ययो भवति, आद्यन्तयोर्घत्त्वतत्त्वे च भवतः। हन हिंसागत्योः अा०। हन्त्याचारमात्मनो लज्जामिति घतनः[4]—पापकर्मा[5], निर्लज्जश्च। कर्त्ता॥

॥ नकारः॥

॥ इति दशपादी—उणादिवृत्तौ षष्ठः पादः॥

---

स्तम्। 'ऋभुक्षणमिन्द्रमाहुव ऊतये' [ ऋ० १।१११।४ ] इति मन्त्रस्य वेदभाष्ये [ सायणीये ]ऽपि तत्सूत्रमुदाहृतम्। अत्रायं विवेकः—आद्येऽन्तोदात्तत्वं न्याय्यम्, अवग्रहाभावो बाहुलकात्। द्वितीये तु—अवग्रहाभावो न्याय्यः, अन्तोदात्तस्तु बाहुलकादिति" इति [ मनो० पृ० ७८६ ]। तत्त्वबोधिनीकारोऽप्येवम् [ पृ० ५४८ ]।

'मानो मित्रा' [यजुः २५।२४ ] इति मन्त्रभाष्ये महीधरोऽपीदं सूत्रमुदाजहार।

१. 'मुक्षिनक्' इति ख. ग. घ. ङ.।

२. 'मनिन्' इति क. ख. च. छ. ज.।

३. 'युञ्' इति ख.।

४. 'घातनः' इति ख.। प्रक्रियाटीकाकारस्तु 'घातनः। बाहुलकाद् वृद्धिः' इत्याह [ भा० २ पृ० ६२८ ]।

५. 'पापकर्म' इति क. ख.।

# ॥ अथ सप्तमः पादः ॥

## आप्नोतेः क्विप् ह्रस्वत्वञ्च[1] ॥१॥ (पं० उ० २।५८)

आप्नोतेर्धातोः क्विप् प्रत्ययो भवति ह्रस्वत्वं च। आप्लृ व्याप्तौ सौ०। आप्नोतीति **आपः**—अम्भः। कर्त्ता॥

## पानीविषिभ्यः पः ॥२॥ (पं० उ० ३।२३)

एभ्यो धातुभ्यः पः प्रत्ययो भवति। पा रक्षणे आ०। पाति तस्मादात्मानं पायते[2] वा दुर्जनैरिति **पापम्**—कायवाङ्मनोदुश्चरितम्। पापो घोरश्च। अपादानं कर्म च। णीञ् प्रापणे भौ०। नयति नीयते वा **नीपम्**—उदकम्। कर्त्ता कर्म च। विष्लृ व्याप्तौ जौ०। वेवेष्टीति **वेष्पम्**—परमात्मा। कर्त्ता॥

## चुपेः कित् ॥३॥ (पं० उ० ३।२४)

चुपेर्धातोः पः प्रत्ययो भवति किच्च। चुप मन्दायां गतौ भौ०। चोपतीति **चुप्पम्**—मन्दगमनम्। कर्त्ता॥

## स्तुवो दीर्घश्च[3] ॥४॥ (पं० उ० ३।२५)

स्तौतेर्धातोः पः प्रत्ययो भवति किच्च दीर्घश्च। ष्टुञ् स्तुतौ आ०।

---

१. 'ह्रस्वश्च' इति ङ. च.। 'ह्रस्वः क्विप् च' इति क.।

२. 'पीयते' इति ख. ग. ङ.।

३. 'स्तौतेदीर्घश्च' इति च.।

**अत्राहोज्ज्वलदत्तः—'एतत्सूत्रं सूतीवृत्तौ न दृश्यते। सर्वस्वे तु ष्टुप् समुच्छ्राय इत्यस्माद् घञि स्तूप इति साधितम्। अतोऽनार्षमिदमिति लक्ष्यते' इति [पृ० १०७]।**

**केचन पञ्चपादीवृत्तिकारा अस्य सूत्रस्य अन्यथा पाठंस्वीकुर्वते। एतद्विषये १६० पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या।**

स्तौति स्तूयते वा स्तूपः[1]—बोधिसत्त्वभवनम्[2]। कर्त्ता कर्म च ॥

**कुसुयुभ्यश्च[3] ॥५॥ (पं० उ० ३।२६,२७)**

एभ्यो धातुभ्यः पप्रत्ययो भवति किच्च दीर्घश्च। कु शब्दे आ०। कूयतेऽस्मिन्निति **कूपः**—उदपानम्। अधिकरणम्। षुञ् अभिषवे सौ०। सुनोति सूयते वा **सूपः**—व्यञ्जनम्। कर्त्ता कर्म च। यु मिश्रणे आ०। यौति यूयते वा **यूपम्**—यज्ञपशुबन्धनकाष्ठम्। कर्त्ता कर्म च ॥

**सृशृभ्यामूच्[4] ॥६॥ (पं० उ० ३।२६)**

---

१. अत्र सूत्रपाठे केचन वृत्तिकारा विवदन्ते। तथापि 'स्त्यः सम्प्रसारणमुश्च' इति श्वेतवनवासी। तत्र हि दीर्घग्रहणमनुवर्त्य स्तूप इति साधितम्। (श्वे० पृ० १०५) 'स्त्यः सम्प्रसारणमूश्च' इति नारायणः। 'उश्च इति पठित्वा स्तुप इत्याह माधव' इत्यप्याह (नारा० पृ० ५६)। माधवस्तत्राह—'ऊ चेति वक्तव्ये दीर्घविधानं ह्रस्वस्यापि श्रवणार्थम्, तेन स्तुप इत्यपि भवति' (धा० वृ० १६८)।

अत्रायं विवेकः—काण्वमाध्यन्दिनसंहितयोः शतपथे च 'स्तुप' इत्येवमन्तोदात्तो दृश्यते। ऋग्वेदे तैत्तिरीयसंहितायां च 'स्तूप' इत्याद्युदात्तो दृश्यते। सायणस्त्वृग्भाष्ये (१।२४।७) निदनुवर्तनादाद्युदात्तत्वमाह। परं निद्ग्रहणं कुतोऽनुवर्तत इति तु नोक्तम्, नहि कुतश्चिन्निदनुवृत्तिः सम्भवति। भट्टभास्करस्तु तैत्तिरीयसंहिताभाष्ये (१।१।११) वृषादित्वादाद्युदात्तत्वमाह (भा० १, पृ० १६०) इति। तच्चातीव रमणीयम्।

२. हेमचन्द्रोऽपि 'स्तूपो बोधिसत्त्वभवनम्, उपायतनं च' इत्याह। (हैमो० २६७ पृ० ५१)। 'बोधिसतो भगवान्' इति क.।

३. अत्राह काशिकाकारः—"यूप शब्द उणादिषु 'कुसुयुभ्यश्च' इति पप्रत्यान्तः'। तत्र च दीर्घ इति निदिति च वर्तते तेनाद्युदात्तः" इति (अ० ६।२।१ पृ० ५३७ तथैव अ० ६।२।४३ पृ० ५५०)। अत्र हि दशपादीपाठे काशिकाकृता निद्ग्रहणं कुतोऽनुवर्त्तितमिति न प्रतीमः। नहि पुरस्तात् क्वचिन्निद्ग्रहणं दृश्यते। हरदत्तेनायं ग्रन्थो न व्याख्यातः। न्यासकृता तु पञ्चपादीपाठानुसारं 'कुयुभ्यामित्यादि' इति प्रतीकमुपादाय 'सुशृभ्यां निच्च' इत्यतो निद्ग्रहणं समर्थितम् (न्यास भा० २, पृ० ३५०)।

सूत्रमिदं प्रौढमनोरमायामप्युद्धृतं भट्टोजिदीक्षितेन (पृ० ७५५)।

४. अत्राह भट्टोजिदीक्षितः—"दशपाद्यां तु 'कुसुयुभ्यश्च सृशृभ्यामूङ् च' इति पठित्वा सूपं शूपं च व्युत्पादितम्" इति (मनो० पृ० ७७५)।

आभ्यां धातुभ्यां पः प्रत्ययो भवति 'ऊर्' च भवत्यादेशः। सृ गतौ भौ० जौ०। सरति[1] ससर्त्ति वा **सूर्पः**—अहिः[2]। कर्त्ता। शॄ हिंसायां क्र्यै०। शृणातीति **शूर्पः**—धान्यादिनिष्पवनभाण्डम्, संख्या च। कर्त्ता॥

**खष्पशिल्पशष्पबाष्परूपतर्पतल्पाः ॥७॥ (पं० उ० ३।२८)**

एते शब्दा[4] निपात्यन्ते पप्रत्यये निरूढाः[5]। खनु अवदारणे भौ०, कष हिंसायां भौ०। खनतेः षोऽन्त्यस्य निपात्यते, कषतेरादिखत्वं च निपात्यते। खनति खन्यते वा, कषति कष्यते वा **खष्पम्**—खलीनम्,[6] अङ्गारो वा। कर्त्ता कर्म च। शील समाधौ भौ०, शील उपधारणे चौ० ण्यन्तः प्रकृत्यन्तरो वा। अस्य णेर्लुक्, उपधाह्रस्वत्वं च निपात्यते। शीलन्ति तत् शीलयन्ति वा तदिति **शिल्पम्**—क्रियाकौशलं। कर्म। यत् कुम्भकारादीनां कौशलं[7] तच्छिल्पमित्यर्थः[8]। शिष हिंसायां भौ०। अस्योपधाया अत्वं निपात्यते। शिष्यते तद् गवादिभिरिति **शष्पम्**—घासः[9], वीरुच्च। कर्म। बाधृ विलोडने भौ०। अस्य पकारोऽन्त्यस्य निपात्यते। बाधते लोचनमिति **बाष्पम्**—अश्रु। कर्त्ता। रूप रूपक्रियायां चौ० ण्यन्तः। अस्य पकारलोपो निपात्यतेऽगुणत्वं च। रूपयति रूप्यते वा तच्छोभनमिति[10] **रूपम्**—चक्षुर्विषयः। कर्त्ता कर्म च। तॄ प्लवनतरणयोः भौ०। तरन्त्यनेन जना इति **तर्पः**—नदीप्लवः। करणम्। तृप तृप्तौ दि०। अस्य पकारलोपो गुणे कृते लत्वं च निपात्यते। तृप्यन्ति तस्मिन्निति **तल्पः**—पर्यङ्कः[11]। अधिकरणम्।

बाहुलकात् चण्पा[12] पम्पा एतौ शब्दौ[13] निपात्येते। चण दाने भौ०।

---

१. 'धावति' इति ख.।
२. 'उरगः' इति क.।
३. पञ्चपाद्यामस्य स्थाने पर्पशब्दः पठ्यते। 'अन्ये तु पर्पशब्दस्थाने पम्पाशब्दं पठन्ति' इत्युज्ज्वलदत्तः (पृ० १०६)।
४. 'शब्दा' नास्ति क.।
५. 'निरुद्धाः' इति क.।
६. 'खनित्रम्' इति प्रक्रियाकौमुदीटीकाकृत्।
७. अत्राह देवराजः—'यत् कुम्भकारादिकर्म इत्युणादिवृत्तिः' इति (पृ० १७१)।
८. 'कौशलं शिल्पमुच्यते' इति ख.। 'यत् कुम्भ·····मित्यर्थः' इति नास्ति क.।
९. 'घासः' नास्ति क.।
१०. 'तच्छोभनमिति' नास्ति क.।
११. 'शयनम्' इति क.।
१२. पञ्चपादीवृत्तिकाराः 'पम्पा' इति निपातयन्ति। प्रक्रियाकौमुदीटीकायामपि 'पम्पा' इत्येव।
१३. 'चण्पा नागरी, पम्पा पुष्करिणी इत्येतौ' इति क.।

चणतीति **चण्पा**—नगरी[1]। कर्त्ता। पा रक्षणे अ०, पा पाने भौ०। अनयोर्ह्रस्वत्वं नुमागमश्च निपात्यते। पान्ति पिबन्ति वा तस्यामिति **पम्पा**—पुष्करणी। कर्त्ता[2]॥

## सर्त्तेरपः षुक् च ॥८॥ (पं० उ० ३।१३५)

सर्त्तेर्धातोरपः प्रत्ययो भवति षुक् चागमः। सृ गतौ भौ० जौ०। धावति[3] ससर्त्तीति वा तस्माद्[4] रक्षांसीति **सर्षपः**—रक्षोघ्नं द्रव्यम्, शाकम्। अपादानम्॥

## उषिकुटिदलिकचिखजिभ्यः[5] कपन् ॥९॥ (पं० उ० ३।१३६)

एभ्यः कपन्प्रत्ययो भवति। उष दाहे भौ०। ओषतीति **उषपः**—अग्निः। कर्त्ता। कुट कौटिल्ये तौ०। कुटतीति **कुटपः**—मानभाण्डम्, द्रव्यं च[6]। कर्त्ता[7]। दल विदारणे भौ०। दल्यत इति **दलपम्**[8]—रणे मुखत्राणम्। कर्म। कच बन्धने भौ०। कचतीति **कचपम्**—बन्धनम्[9]। कर्त्ता। खज मन्थे भौ०। खज्यत इति **खजपम्**—दधि, उदकं वा[10]। कर्म[11]॥

## क्वणेः सम्प्रसारणं च ॥१०॥ ( पं० उ० ३।१३७ )

क्वणेर्धातोः कपन् प्रत्ययो भवति सम्प्रसारणं च। क्वण शब्दार्थः [भौ०]। क्वण्यते श्वापदैरिति **कुणपः**—उषितम्[12], मृतशरीरं च। कर्म॥

## कप[13]श्चाक्रवर्मणस्य ॥११॥ ( पं० उ० ३।१३८ )

क्वणेर्धातोः कपप्रत्ययो भवति चाक्रवर्मणस्याचार्यस्य मतेन सम्प्रसारणं च। क्वण शब्दार्थः भौ०। क्वण्यते तदिति **कुणपम्**। शब्दार्थयोः सादृश्यम्, स्वरे विशेषः॥

---

१. 'नगरी' नास्ति क.।

२. 'पान्ति तां पिबन्ति तामिति वा पम्पा कर्त्ता' इति क.।

३. 'सरति' इति ग.।

४. 'अस्माद्' इति ग.।

५. 'विशिभ्यः' इत्यधिकं ग.।

६. 'द्रव्यं च' नास्ति क. ख.।

७. 'कर्त्ता' नास्ति क.।

८. 'दलपः' इति क.।

९. 'कचपः बन्धः' इति क.।

१०. 'दध्युदकम्' इति ख. ग.।

११. इतोऽग्रे 'विश प्रवेशने भौ०। विशतीति विशपम्। कर्त्ता' इत्यधिकम् ग.।

१२. 'कुपितम्' इति ग.।

१३. 'कुण०' इति च.।

## विटपविष्टपविशिपोलपाः ॥१२॥ ( पं० उ० ३।१३६ )

एते शब्दा निपात्यन्ते कपन्प्रत्यये निरुद्धाः[२]। विश प्रवेशने तौ०। अस्य टकारोऽन्त्यस्य निपात्यते। विशन्त्यस्मिन् पक्षिण इति **विटपम्**—शाखावयवः। अधिकरणम्। अस्यैव धातोः षान्तादेशो निपात्यते तुडागमश्च[३]। विशन्त्यस्मिन्[४] पुण्यकृत इति **विष्टपम्**—सुकृतीनां स्थानम्। अधिकरणम्। अस्यैव धातोः प्रत्ययादेरित्वं निपात्यते। विशन्त्यस्मिन्निति[४] **विशिपम्**—वेश्म, आसनं च। पद्म चेत्येके[५]। अधिकरणम्। उष दाहे भ्वौ०। अस्यान्त्यस्य लत्वं निपात्यते। उष्यतेऽनेन तद्वावाग्निनेति **उलपम्**—पर्वततृणम्। कर्म। उत्पूर्वस्य वा लुनातेरन्तलोप उपसर्गान्तलोपश्च निपात्यते[६]। उल्लूयते तदिति **उलपम्**—तृणविशेषः[७]। कर्म॥

॥ पकारः ॥

## कलेः फगस्योच्च ॥१३॥ ( पं० उ० ५।२७ )

कलेर्धातोः फक् प्रत्ययो भवति अकारस्योकारः[८]। कल शब्दसंख्यानयोः भ्वौ०[९]। कलति कल्यते वा **कुल्फः**—जङ्घापादयोर्मध्यसन्धिः। कर्त्ता कर्म च॥

## गलेश्च ॥१४॥ ( पं० उ० ५।२८ )

---

१. '०मंडप०' इत्यधिकं च.।

२. 'अन्तोदात्तः' इति ख.। 'आद्योदात्ताः' इति ग.।

इदमत्रावधेयम्—आद्यास्त्रयः शब्दा वेदेषु नोपलभ्यन्ते, चतुर्थ उलपशब्दस्त्वाद्युदात्त उपलभ्यते। स च प्रत्ययस्य नित्त्वात्सिद्धः। विष्टपशब्दस्य 'पान्तानां गुर्वादीनाम्' (फिट् ५६) इत्यनेन मध्योदात्तत्वम्। अवशिष्टयोस्तु स्वरोऽनुसन्धेय.। प्रातिपदिकस्वरे (फिट् १) त्वन्तोदात्तत्वं प्राप्नोति।

३. 'विश धातोः पुगागमो निपात्यते' इति ग.।

४. 'विशन्ति तस्मिन्' इति क.। 'पक्षिणः······विशन्त्यस्मिन्' इति नास्ति ख.।

५. 'आसनं पद्मं वा' इति क.।

६. 'उलपर्चस्य (उसूर्यस्य इति ख.) वा लुनातेरुपसर्गान्तलोपो निपात्यते धातोरन्त्यलोपश्च' इति ख. ग.।

७. 'तृणविशेषः' नास्ति क.।

८. 'अस्य फक् प्रत्ययः, अकारस्य चोकारः' इति क.।

९. 'कल श' इति क.।

गलेर्धातोः फक्प्रत्ययो भवति अकारस्योकारश्च[1]। गल अदने भ्वा०। गलति गल्यते वा **गुल्फः**—पादोपरिग्रन्थिः। कर्त्ता कर्म च॥

॥ फकारः॥

## कदिकडि[2]कटिभ्योऽम्बच्[3] ॥१५॥ (पं० उ० ४।८७)

एभ्योऽम्बच् प्रत्ययो भवति। कद सौत्रो धातुः। कदतीति **कदम्बम्**—पुष्पजातिः। कर्त्ता। कड सौत्रो धातुः। कडतीति **कडम्बः**—शाकप्रकारः। कर्त्ता। कटी गतौ भ्वा०। कटतीति **कटम्बः**—वादित्रम्। कर्त्ता॥

## कदेर्णित् पक्षिणि ॥१६॥ ( पं० उ० ४।८८ )

कदेर्धातोरम्बच् प्रत्ययो भवति पक्षिण्यभिधेये[4] णिच्च। कद इति सौत्रो धातुः। कदतीति **कादम्बः**—कलहंसः[5]। कर्त्ता॥

## कृञश्च[6] ॥१७॥ ( पं० उ० ४।८९ )

कृञो धातोरम्बच् प्रत्ययो भवति। डुकृञ् करणे ता०, कृञ् हिंसायां सौ०, कृञ् करणे भ्वा०। करोति कृणोति करतीति वा **करम्बम्**—दधिसक्तवः। कर्त्ता[7]॥

॥ बकारः॥

## कॄगॄशॄशलिगर्दिभ्योऽभच् ॥१८॥ (पं० उ० ३।११६)

एभ्योऽभच् प्रत्ययो भवति। कॄ विक्षेपे तु०। किरतीति **करभः**—त्रिवर्ष[8] उष्ट्रः। कर्त्ता। गॄ निगरणे तु०, गॄ शब्दे क्र्या०। गिरति गृणातीति

---

१. 'गलेः फक्प्रत्ययः, अस्य चोकारः' इति क.।

२. 'गडि' इति ख. ग. छ. ज.। वृत्तावपि **गड** इत्येव, उदाहरणं च **'गडम्बः'** इति। 'गडि' इत्यधिकं च.।

३. 'अम्बक्' इति ख.। स चापपाठः, उत्तरत्र **कृञश्च** (द० उ० ७।१७) सूत्रे **'करम्बः'** इत्यत्र गुणदर्शनात्।

४. 'पक्षिणि विषये' इति क.। 'पक्षिनामाभिधेये' इति ग.।

५. 'पक्षी' इति क.। ६. 'कृञः कश्च' इति ज.।

७. 'कृञोऽम्बच् प्रत्ययो भवति। डुकृञ् क० ता०। क्रियते इति करम्बः—दधिसक्तवः। कर्म'। इति क.। ८. 'त्रिवर्षः' नास्ति क.।

वा गरभः—सिंहहा प्राणी[1]। कर्त्ता[2]। शॄ हिंसायां क्र्या॰। शृणातीति **शरभः**—हिंस्रः। कर्त्ता। शल हुल पत्लृ गतौ भ्वौ॰। शलतीति **शलभः**—पतङ्गः। कर्त्ता। गर्द शब्दे[3] भ्वौ॰। गर्दतीति **गर्दभः**—खरः। कर्त्ता॥

## ऋषिवृषिभ्यां कित् ॥१९॥ (पं॰ उ॰ ३।११७)

आभ्यामभच् प्रत्ययो भवति किच्च। ऋषी गतौ तौ॰[4]। ऋषतीति **ऋषभः**—गोपतिः, युवा वा[5]। कर्त्ता। वृष सेचने भ्वौ॰। वर्षतीति **वृषभः**—गौः[6]। कर्त्ता॥

## रुशेर्[7]निच्च लुश च ॥२०॥ ( पं॰ उ॰ ३।११८ )

रुशेर्धातोरभच् प्रत्ययो भवति नित्संज्ञकः[8], लुश[9] इत्यय चादेशः। रुश हिंसायां तौ॰। रुशतीति **लुशभः**—मत्तहस्ती, हिंस्रो वा। कर्त्ता॥

## रासिवल्लिभ्यां च ॥२१॥ ( पं॰ उ॰ ३।११९ )

आभ्यामभच् प्रत्ययो भवति नित्संज्ञकः[10]। रासृ दीप्तौ भ्वौ॰। रासत इति **रासभः**—गर्दभः। कर्त्ता। वल्ल इति सौत्रो धातुः। वल्लति वल्ल्यते वा **वल्लभः**—दयितः। कर्त्ता कर्म च॥

## गडेः कड[11] च ॥२२॥ (पं॰ उ॰ ३।१२०)

गडेरभच् प्रत्ययो भवति कड इत्ययं चादेशः। गड सेचने भ्वौ॰। गडतीति **कडभः**[11]—हस्तिपोतः। कर्त्ता॥

---

१. 'उदरस्थः जन्तुः' इति ग.।

२. 'गॄ निगरणे ……कर्त्ता' इति नास्ति क.।

३. 'कुत्सिते' इत्यधिकं क.।    ४. 'तौ॰' नास्ति क.।

५. 'वायुर्वा' इति क.।    ६. 'वृषः' इति क.।

७. 'दशेः' इति क.। एवं सर्वत्र वृत्तावुदाहरणे च।

८. 'किच्च निच्च' इति क.।

९. अत्राह श्वेतवनवासी—"अन्ये लुशि प्रकृत्यन्तरमाहुः। तथा च धातुपारायणे 'अवृत्कृतत्वाद् भूवादयोऽपरिसमाप्ता एव। तेनान्ये लुशरुषादयोऽप्यत्रैव द्रष्टव्याः। टुओश्वि गतिवृद्ध्योः वृत् इति वृत्करणं यजादिपरिसमाप्त्यर्थम्, न भ्वादिपरिसमाप्त्यर्थम्' इति। एवं चादेश[न]मनर्थकम्" इति (पृ॰ १२८)।

१०. 'निच्च' इति क.।

११. नारायणश्वेतवनवासिनो 'कल'आदेशं कृत्वा 'कलभ'पदं साधयतः।

## दरिदलिभ्याम्भः ॥२३॥ (पं० उ० ३।१४५)

आभ्यां भः प्रत्ययो भवति । दॄ विदारणे[1] क्र्यौ० । दृणाति दीर्यते वा **दर्भः**—कुशः । कर्त्ता कर्म च । दल विदारणे चौ० प्रकृत्यन्तरो वा[2] । दलयति दल्यते वा **दल्भः**—वल्कलम्, विदारणं वा । कर्त्ता कर्म च ।।

## अर्त्तिगॄभ्यां भन् ॥२४॥ (पं० उ० ३।१४६)

आभ्यां भन् प्रत्ययो भवति । ऋ गतौ । ऋच्छत्यर्यते वा **अर्भः**—सूक्ष्मः प्राणी । कर्त्ता कर्म च । गॄ निगरणे तौ० । गिरति गीर्यते वा **गर्भः**—जठरस्थः प्राणी । कर्त्ता कर्म च ॥

## इणः कित् ॥२५॥ (पं० उ० ३।१४७)

इणो भन् प्रत्ययः किच्च भवति । इण् गतौ अा० । एति ईयते वा **इभः**—हस्ती । कर्त्ता कर्म च[3] ।।

॥ भकारः ॥

## अर्त्तिस्तुसुहुसृधृक्षि[4]क्षुभायावापदियक्षिनी[5]भ्यो[6] मन् ॥२६॥ (पं० उ० १।१२७)

एभ्यो मन् प्रत्ययो भवति । ऋ गतिप्रापणयोः[7] । ऋच्छत्यर्यते वा **अर्मः**—व्याधिः[8] । कर्त्ता कर्म च । ष्टुञ् स्तुतौ अा० । स्तौति स्तूयते वा **स्तोमः**—मन्त्रस्तवः । कर्त्ता कर्म च । षुञ् अभिषवे सौ० । सुनोति सूयते वा **सोमः**—चन्द्रः, यज्ञद्रव्यं च । कर्त्ता कर्म च । हु दानादनयोः जौ० । हूयत इति **होमः**—आहुतिः । कर्म । सृ गतौ भौ० जौ० । धावति[9] सर्सर्त्ति इति वा **सर्मः**—नदः । कर्त्ता । धृङ् अवस्थाने भौ० । धरति[10] ध्रियते वाऽस्मिन्नाचार इति

---

१. 'भये' इति क. ।

२. 'दल विशरणे, दल विदारणे चौ०' इति ग. । 'अनित्यणिजन्ताश्चुरादयः । दलति' इत्यधिकं क. ।

३. सवृत्ति सूत्रमिदं नास्ति ख. ग. ।

४. 'क्षु' नास्ति क. ।

५. 'नी' नास्ति क. ।

६. 'पक्षिनीयक्षिभ्यः' इति ग. ।

७. 'गतौ' इति क. ।

८. 'अङ्गनाम' इत्यधिकं क. ।

९. 'सरति' इति ग. ।

१०. 'धरति' नास्ति क. ।

**धर्मः**—न्यायः। अधिकरणम्। क्षि निवासगत्योः भौ०, क्षि हिंसायां सौ०[1]। क्षयति क्षिणोतीति **क्षेमम्**—कुशलम्। कर्त्ता। टुक्षु शब्दे। क्षौतीति **क्षौमम्**—दुकूलम्[2]। भा दीप्तौ आ०। भात्यत्यर्थमिति **भामः**—क्रोधः। कर्त्ता। या प्रापणे आ०। यातीति **यामः**—कालविशेषः[3]। कर्त्ता। पद गतौ दै०। पद्यते तन्मधुकरैरिति **पद्मम्**—कमलम्। कर्त्ता[4]। यक्ष पूजायाम्[5]। यक्ष्यते पूज्यते वासादिभी[6]रोगराजत्वात् **यक्ष्मा**[7]—व्याधिः[8]। कर्म। बाहुलकत्वादभिधान-लक्षणाद्वा नकारस्येत्संज्ञा[9] न भवति[10]। णीञ् प्रापणे। नयति नीयते वा **नेमः**—शकलम्। कर्त्ता कर्म च[11]॥

## अवतेष्टिलोपश्च ॥२७॥ (पं० उ० १।१२८)

अवतेर्धातोर्मन्प्रत्ययो भवति टिलोपश्च। अव रक्षणादौ भौ०। 'ज्वर-

---

१. 'क्रै०' इति क. ग.। २. 'टुक्षु ······ दुकूलम्' इति नास्ति क.।

३. 'दिवसरात्रिचतुर्थभागः' इति क.। ४. 'कमलम्। कर्त्ता' नास्ति क.।

५. 'चौ०' इत्यधिकं ग.। ६. 'यक्षतेऽसौ मांसादिभिरिति' इति क.।

७. यद्यपि वृत्तिकारो नकारान्तमिच्छति तथापि 'यक्ष्म'शब्दोऽकारान्तः। **'आत्मा यक्ष्मस्य नश्यति'** (यजु० १२।८५) इत्यादिप्रयोगदर्शनाद् अकारान्त एवात्र साधुः। नकारान्तो मनिना साधनीयः।

८. नास्ति ख. ग.। 'रोगः' इति क.। ९. 'नकारस्यानुबन्धसंज्ञा' इति क.।

१०. अत्राह देवराजः—"**सुक्षेम···'बाहुलकादभिधानलक्षणाद्वा क्वचिन्नकारस्ये-त्संज्ञा न भवति' इत्युणादिवृत्तिः**" इति (पृ० १०६)।

उत्तरत्रापि—"**नेमा······तदा 'बाहुलकादभिधानलक्षणाद्वा नकारस्येत्संज्ञाया अभावः' एवमेवास्मिन् सूत्रे (द० उ० ७।२६) वृत्तिकारेणोक्तम्**" इति (पृ० २१०)।

'बाहुल···भवति' इति पाठः ख.ग.पुस्तकयोः 'पद्म'शब्दानन्तरं पठ्यते।

११. अत्र ग.पुस्तके पाठान्तरम्—"पक्षिः सौत्रो धातुः। पक्षतीति पक्ष्मरोगवि-शेषः। कर्त्ता। णीञ् प्रापणे। नयति नीयते वा नेमः—शकलम्। कर्त्ता कर्म च। यक्ष पूजायां चौ०। यक्ष्यते पूज्यते वासादिभी रोगराजत्वाद् यक्ष्मा—व्याधिः। कर्म" इति। अयमेव पाठो भट्टोजिदीक्षितेनोदाहृतः। तद्यथा—'**दशपादीवृत्तौ तु इह सूत्रे पक्षीति पवर्गादिं पठित्वा 'सौत्रो धातुः' (?) बाहुलकान्नकारस्य नेत्संज्ञा इत्युक्त्वा अक्षिपक्ष्मे(?)त्युदाहृतं तन्न, पक्ष परिग्रहे इत्यस्मान्मनिना गत्यर्थत्वात्**' (प्रौ० मनो०, पृ० ७६१)।

'णीञ् ··· कर्म च' नास्ति क.।

त्वर' [अ० ६।४।२०] इति वस्योपधायाश्च ऊठ्, सवर्णदीर्घो[1] गुणश्च[2]। अवति ब्रह्मे ति ओ३म्—प्रणवः, परमात्मा च[3]। कर्त्ता। 'ओमभ्यादाने'[4] [अ० ८।२।८७] इति प्लुतः ॥

## ग्रसतेरा च ॥२८॥ (पं० उ० १।१२९)

ग्रसतेर्धातोर्मन् प्रत्ययो भवति आकारश्चान्तादेशः। ग्रसु अदने भ्वा०। ग्रसतेऽस्मिञ्जनाः, ग्रस्यते वा जनैरिति ग्रामः—नगरविपरीतो जनसन्निवेशः। अधिकरणं कर्म च॥

## प्रथेरट् च ॥२९॥

प्रथेर्धातोर्मन् प्रत्ययो भवति अट् चागमः। प्रथ प्रख्याने। प्रथन्तेऽस्माद् द्वितीयादयः संख्याशब्दा इति प्रथमः—आदिः। अपादानम् ॥

## अविसिविशुषिभ्यः किच्च ॥३०॥ ( पं० उ० १।१३० )

एभ्यो मन् प्रत्ययो भवति किच्च। अव रक्षणादौ भ्वा०। अवति अव्यते वा उमः[5]—जनः[6]। कर्त्ता कर्म च। षिवु तन्तुसन्ताने दि०। सीव्यतेऽनेनेति स्यूमः—सूत्रतन्तुः। करणम्। शुष शोषणे दि०, चु०, प्रकृत्यन्तरो ण्यन्तो वा[7]। शुष्यति[8] शोषयति परदर्पम्, शुष्यते वा भयादिभिरिति[9] शुष्मम् —बलम्। कर्त्ता कर्म च॥

---

१. 'ज्वरत्वर' (अ० ६।४।२०) सूत्रेऽन्ये वृत्तिकारा वकारस्योपधायाश्चोभयोः स्थान एकमेवादेशं विदधति। परमयं दशपादीवृत्तिकारो वकारस्योपधायाश्च द्वयोः स्थानिनोर्द्वावादेशौ विदधाति, ततश्चोभयोः स्थाने सवर्णदीर्घत्वम्। इदं च वृत्त्यन्तरानुरोधात्। भाष्येऽपीदं मतमुपन्यस्यते। तद्यथा—'स्तां द्वावूठौ, नास्ति दोषः, सवर्णदीर्घत्वेन सिद्धम्' (भाष्ये अ० ६।१।८४)।

२. 'ज्वर·····गुणश्च' इति नास्ति क. ग.।

३. 'परमात्मा च' इति नास्ति ख. ग.।

४. 'प्रणवष्टेः (अ० ८।२।८९)' इति ख. ग.।

५. इहान्ये वृत्तिकाराः 'ऊम' इति दीर्घादिं साधयन्ति। ह्रस्वादिपक्षे ऊठि सति बाहुलकत्वाद्ध्रस्वत्वं बोध्यम्। तथा चाह प्रक्रियाकौमुदीटीकाकारः—'बाहुलकत्वाद्ध्रस्वत्वम्' इति। (प्र० कौ० भा० २, पृ० ६३०)।

६. 'अन्नम्' इति क.।

७. 'चौ०·····वा' इति नास्ति ख. ग.।

८. 'शुष्यति' नास्ति ख. ग.।

९. 'तदिति' इति क.।

## इषियुधीन्धिदसिश्याधूसूभ्यो[१] मक् ॥३१॥ (पं० उ० १।१३१)

एभ्यो मक् प्रत्ययो भवति। इषु उञ्छे भौ०। इषति इष्यते वा **इष्मः**[२]—वसन्तः, बाणश्च। कर्त्ता कर्म च। युध संप्रहारे दै०। युध्यतेऽस्मिन् राजेति **युध्मः**—शरत्कालः। अधिकरणम्। युध्यते वा **युध्मः**—शूरः। कर्त्ता। ञिइन्धी दीप्तौ रौ०। इध्यतेऽनेनाग्निरिति **इध्मः**—काष्ठ[म्। करणम्]। दसु च दै०। दस्यति दस्यते वा **दस्मः**—हीनः। कर्त्ता कर्म च। श्यैङ् गतौ। श्यायतेऽसौ चक्षुर्मनोभिरिति **श्यामः**—नातिकृष्णवर्णः। कर्म। धूञ् कम्पने सौ०, धू विधूनने तौ०। धुनोति धुवति धूयते वा वायुनेति[३] **धूमः**—अग्निवर्त्मा। कर्त्ता कर्म च[४]। षूङ् प्राणिगर्भविमोचने आ०, षू प्रेरणे तौ०, षूङ् प्राणिप्रसवे दै०। सूते सुवति सूयते वा कर्माणीति[५] **सूमः**—रविः, रसविकारश्च[६]। कर्त्ता कर्म च॥

## गलेरुच्चोपधायाः ॥३२॥

गलेर्मक् प्रत्ययो भवति उत्वं चोपधायाः। गल अदने भौ०। गलति गल्यते वा **गुल्मः**—वातजो व्याधिः। कर्त्ता कर्म च[७]॥

## युजिरुचितिजां कुश्च ॥३३॥ (पं० उ० १।१३२)

एभ्यो मक् प्रत्ययो भवति, एषां कवर्गादेशश्च[८]। युजिर् योगे रौ०, युज समाधौ दै०। युनक्ति युज्यते वा **युग्मम्**—युगलम्[९]। कर्त्ता कर्म च। रुच दीप्तौ भौ०। रोचते तदतिशयेनेति **रुक्मः**[१०]—सुवर्णम्[११]। कर्त्ता। तिज निशाने क्षमायां च[१२] भौ०। तितिक्षते तेजनं वा **तिग्मम्**—तीक्ष्णम्, दीप्तम्, तेजश्च। कर्त्ता भावश्च॥

---

१. 'ईषि··· धूश्यासूभ्यो' इति क.।

२. 'ईष ·····ईषति इष्यते वा ईष्मः' इति क.। ३. 'वायुनेति' नास्ति क.।

४. 'धूञ् कम्पने ·····कर्म च' अयं पाठः क.पुस्तके 'श्यैङ् गतौ' इत्यस्मात्पूर्वं पठ्यते। ५. 'कर्मणेति' इति ख. ग.।

६. 'रसविकारश्च' नास्ति क. ख। ७. सवृत्ति सूत्रमिदं नास्ति क.पुस्तके।

८. 'कुत्वं चैषामादेशः' इति क.। ९. 'मिथुनम्' इति क.।

१०. तुलना कार्या देव० नि० टी० पृ० १९। ११. 'हिरण्यम्' इति क.।

१२. 'शाने क्षमायां च' इति नास्ति क.।

## हन्तेर्हि च ॥३४॥ ( पं० उ० १।१३३ )

हन्तेर्मक्प्रत्ययो भवति हिरित्ययं चादेशः। हन हिंसागत्योः अ०। हन्ति दुर्गतान् सत्त्वान् इति **हिमम्**—तुषारः। बाहुलकत्वाद् गुणः—**हेमम्**[1]। कर्त्ता॥

## भियः षुग्वा ॥३५॥ (पं० उ० १।१३४)

भियो धातोर्मक् प्रत्ययो भवति षुक् चागमो वा। ञिभी भये 'जौ०'। बिभेत्यस्माज्जन इति **भीष्मः, भीमः**—भयानकः अपादानम्॥

## घर्मः ॥३६॥ ( पं० उ० १।१३५ )

घर्म इत्ययं शब्दो निपात्यते मक्प्रत्यये[2]। घृ क्षरणदीप्त्योः 'जौ०'। जिघर्त्ति स्वतेजसा जगदिति **घर्मः**—निदाघः। निपातनादत्र गुणः[3]। कर्त्ता॥

## ग्रीष्मः ॥३७॥ (पं० उ० १।१३५)

ग्रीष्म इत्ययं शब्दो निपात्यते मक्प्रत्यये[4]। ग्रसु अदने भौ०। अस्योपधाया ईत्वं निपात्यते षश्चान्तादेशः। ग्रसते जनान् स्वतेजसेति **ग्रीष्मः**—घर्मः। कर्त्ता॥

## पच एलिमच् ॥३८॥ ( पं० उ० ४।३८ )

पचेर्धातोरेलिमच् प्रत्ययो भवति। डुपचष् पाके। पचतीति **पचेलिमः**[5]—अग्निरादित्यो वा। कर्त्ता। पच्यन्त इति **पचेलिमाः**—माषाः। कर्म॥

## भिदेः केलिमच्[6] ॥३९॥ ( पं० उ० ४।३९ )

भिदेर्धातोः केलिमच्[6] प्रत्ययो भवति। भिदिर् विदारणे रौ०। भिन-

---

१. **'कृष्णोऽश्वो हेम इत्युच्यते'** (महा० २।२।२८)। **'बाहुल······हेमम्'** नास्ति क.।

२. **'घृ इत्येतस्माद धातोर्मप्रत्ययो भवति'** इति क.।

३. **'निपातनादत्र गुणः'** नास्ति क.। ४. **'मप्रत्यये निरुद्धः'** इति क.।

५. **'केलिमर उपसंख्यानम्'** (अ० ३।१।९६ वा०) इति वार्त्तिकेनाप्ययं सिद्ध्यति। स्वरभेदात् पुनर्व्युत्पादनम्। क.पुस्तके तु 'एलिमन्'प्रत्ययो विधीयते।

६. **'केलिमन्'** इवि घ. च. ज.।

त्तीति **भिदेलिमः**—तस्करः। कर्त्ता। भिद्यत इति **भिदेलिमम्**—काष्ठम्। कर्म[1]॥

## कर्दिकडोरमः ॥४०॥ (पं० उ० ४।६०)

आभ्यां धातुभ्याममप्रत्ययो भवति। कर्द कुत्सिते शब्दे भ्वा०। कर्दतीति **कर्दमः**—जलपर्यन्तः। कर्त्ता। कड इति सौत्रो धातुः, अथवा तौदादिकः कड उद्यमने[2]। कडतीति **कडमः**[3]—शालिः। कर्त्ता॥

## सूचेः स्मन्[4] ॥४१॥ (पं० उ० ४।१८२)

सूचेर्धातोः स्मन्[4] प्रत्ययो भवति। सूच पैशुन्ये चौ०। सूचयति सूच्यते वा **सूक्ष्मम्**—अणुः। कर्त्ता कर्म च॥

## गुधेरूमः ॥४२॥ (पं० उ० ५।२)

गुधेर्धातोरूमप्रत्ययो भवति। गुध परिवेष्टने दै०। गुध्यति गुध्यते वा प्राणिभिरिति **गोधूमः**—सस्यम्। कर्त्ता कर्म च॥

## इणो दमक्[5] ॥४३॥ (पं० उ० ४।१५६ उज्ज्वल०)

इणो धातोर्दमक् प्रत्ययो भवति। इण् गतौ अ०। एतीति **इदम्**—सर्वनाम। कर्त्ता॥

## कायतेर्डिम्[6] ॥४४॥ (पं० उ० ४।१५७ उज्ज्वल०)

कायतेर्धातोर्डिम् प्रत्ययो भवति। कै गै शब्दे भ्वा०। कायतीति **किम्**—प्रश्नविषयोऽर्थ उच्यते। कर्म॥

---

१. 'भिद्यत ···· कर्म' इति नास्ति क.।

२. 'अथवा······उद्यमने' नास्ति क.।

३. अत्राह प्रक्रियाकौमुदीटीकाकृत्—'**डलयोरभेदात्कलमः**' इति (भा० २, पृ० ६३१)।

४. 'क्ष्मन्' इति क.।

५. अत्राह भट्टोजिदीक्षितः—"**दशपाद्यां तु 'इणो दमक्' इति सूत्रितम्, इदम्**" इति (मनो० पृ० ८००)। तत्त्वबोधिनीकारोऽप्येवम् (तत्त्व० पृ० ५५८)। 'दमुक्' इति क. च.।

६. अत्राप्याह दीक्षितः—"**दशपाद्यां तु 'कायतेर्डिम्' इति सूत्रितम्**" इति (मनो० पृ० ८००)। तत्त्वबोधिनीकारोऽप्येवम् (पृ० ५५८)।

**क्रमिगमिक्षमिभ्यस्तुमुन्[1] वृद्धिश्च ॥४५॥ ( पं० उ० ५।४५ )**

एभ्यो धातुभ्यस्तुमुन्[1] प्रत्ययो भवति वृद्धिश्चैषाम्। क्रमु पादविक्षेपे भ्वा०। क्रामति क्रमणं वा **क्रान्तुम्**। कर्त्ता भावश्च। गम्लृ गतौ। गच्छतीति **गान्तुम्**—पथिकः। कर्त्ता। क्षमूष् सहने दि०। क्षाम्यतीति **क्षान्तुम्**—भूमिः। कर्त्ता॥

**प्रथेरमच् ॥४६॥ ( पं० उ० ५।७३ )**

प्रथेर्धातोरमच् प्रत्ययो भवति। प्रथ प्रख्याने भ्वा०। प्रथन्तेऽस्माद् द्वितीयादयः शब्दा[2] इति **प्रथमः**—आदिः। अपादानम्[3]। स्वरे विशेषः[4]॥

**चरेश्च ॥४७॥ ( पं० उ० ५।७४ )**

चरेर्धातोरमच् प्रत्ययो भवति। चर गत्यर्थः भ्वा०। चरतीति **चरमः**—अन्त्यः। कर्त्ता[5]॥

॥ मकारः ॥

**॥ इति दशपादी-उणादिवृत्तौ सप्तमः पादः ॥**

---

बाहुलकान्मकारस्येत्संज्ञा न भवति। पञ्चपाद्यां मकारपरित्राणाय 'डिमिः' पठ्यते।

१. 'तुम्' इति ख. ग. ङ.।

२. 'अस्मात् संख्यावाचिनः' इति क.।

३. 'कर्त्ता' इति क.।

४. अत्राह प्रक्रियाकौमुदीटीकाकारः—'प्रथेरट् च (द० उ० ७।२६) इति सिद्धे स्वरार्थं सूत्रम्' इति (प्र० कौ० भा० २, पृ० ६३१)।

५. पञ्चपाद्यामितोऽग्रे 'पुरश्च' इति सूत्रान्तरं दृश्यते (श्वेत० पृ० २३३ नारा० पृ० १३७)। 'पॄ धातोरप्यमच् प्रत्ययः। परमम्—उत्कृष्टम्' (श्वेत० २३३)।

# ॥ अथाष्टमः पादः ॥

## श्रुदक्षिस्पृहिभ्य[1] आय्यः ॥१॥ (पं० उ० ३।९०)

एभ्य आय्य: प्रत्ययो भवति । श्रु श्रवणे भ्वा० । शृणोति श्रूयते वा श्रवाय्य:—यज्ञपशुः, ग्रहणम्[2], अथः, श्रोता वा[3] । कर्त्ता कर्म च । दक्ष वृद्धौ शीघ्रार्थे च[4] भ्वा० । दक्षत इति दक्षाय्य:—वैनतेय:, दक्षो[5] जनश्च । [कर्त्ता] । स्पृह ईप्सायां चु०[6] । स्पृहयतीति स्पृहयाय्य:—स्पृहणशील: । कर्त्ता[7] ॥

## दधिषाय्यः[8] ॥२॥ (पं० उ० ३।९१)

दधिषाय्य इत्ययं शब्दो निपात्यते आय्यप्रत्यये निरुद्धः । डुधाञ् धारण-पोषणयो:[9] जु० । अस्य द्विर्वचनं निपात्यते इत्वं षुगागमश्च[10] । धीयत इति दधिषाय्य:—पृषदाज्यम्[11] । कर्म ॥

अथवा—धिष शब्दे जु० । अस्य द्विर्वचनं निपात्यतेऽत्वं चाभ्यासस्या-गुणत्वं च[12] । धिष्यत इति दधिषाय्य: । कर्म ॥

---

१. 'स्पृहिगृहिभ्य:' इति ग. । 'स्पृहिगृहिदृजिभ्य:' इति ङ. ।

२. 'यज्ञपशुग्रहणम्' इति ख. ग. ।

३. 'अर्थक्रेता' इति ग. । 'अर्थश्चाश्रोता' इति ख. ।

४. 'शीघ्रार्थे च' नास्ति क. ख. ।

५. 'दक्षजनश्च' इति ख. ।

६. 'अदन्त:' इत्यधिकं क. ।

७. 'कर्म इति ख. । इतोऽग्रे ग.पुस्तकेऽधिक: पाठ:—'ग्रह उपादाने चु० । ग्राहयतीति ग्रहयाय्य: । जि जये भ्वा० । जयतीति जयाय्य:' इति ।

८. 'दिधिषाय्य:' इति ङ. च. ज., भट्टोजिदीक्षितश्च ।

९. 'धारणपोषणयो:' नास्ति क. ।

१०. 'दधातेर्द्वित्वमित्वं षुक् च' इति वृत्तिरेव सूत्रत्वेन स्वीकृता (अज० सं० ३।९७) ।

११. "अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च" शत० ३।८।४७॥ द्र० मी० शाबरभा० १०।४।५४ ।

१२. अत्राह भट्टोजिदीक्षित:—"उज्ज्वलदत्तस्तु 'दधिषाय्य:' इति सूत्रे पठित्वा

## वृङ[1] एण्यः ॥३॥ ( पं० उ० ३।९२ )

वृङो धातोरेण्यप्रत्ययो भवति । वृङ् सम्भक्तौ क्र्यै० । वृणीते व्रियते वा वरेण्यः—परब्रह्मधाम[2] । कर्त्ता कर्म च ॥

## स्तुवः[3] क्सेय्य[4]श्छन्दसि ॥४॥ ( पं० उ० ३।९३ )

स्तुवो[3] धातोः क्सेय्यः[4] प्रत्ययो भवति छन्दसि विषये[5] । ष्टुञ् स्तुतौ

---

दधिपूर्वात् स्यतेराय्यः षत्वं च, दधिषाय्यो घृतमिति व्याख्यत् । दशपादीवृत्तिकारस्तु दधिशब्दस्य (? धिष शब्द इत्यस्य) द्वित्वं गुणाभावोऽत्वं चाभ्यासस्य निपात्यत इत्याह । प्रसादकारादयोऽप्येवमेव प्रतिपन्नाः । तदेतत् सर्वं लक्ष्यविरोधाद् वेदभाष्यविरोधाच्चापेक्ष्यम्'' इति (मनो० पृ० ७८२) । एवं तत्त्वबोधिनीकारोऽपि (त० बो० पृ० ५४३) ।

मुद्रितायां प्रसादटीकायां 'दिधिषाय्यः, दिधिषाय्यम्–मद्यम्' इत्येव पाठ उपलभ्यते । (प्र० कौ० भा० २, पृ० ६३१) । न चात्र किञ्चित् पाठान्तरमस्ति । अतो भट्टोजिदीक्षितवचनादेव तत्र पुरा दधिषाय्य इत्येव पाठ आसीदिति प्रतीयते ।

उज्ज्वलनारायणश्वेतवनवास्यादयः पञ्चपादीवृत्तिकारा दशपादीवृत्तिकारो भोजदेवश्च सर्व एवैते 'दधिषाय्य.' पदमेव व्युत्पादयन्ति । तस्मात् 'दधिषाय्यः' इत्येव पाठः साधीयान् । तदेवं 'आत्मेव शेवो दिधिषाय्यो भूत्' (ऋ० १।७३।२) इत्यत्र सायणीये वेदभाष्ये 'दिधिषाय्यः । दधातेः 'दिधिषाय्यः' इति साय्यप्रत्ययान्तो निपात्यते' इति पाठदर्शनादेव 'दिधिषाय्यः' इति सूत्रपाठकल्पना चिन्त्यैव । वैदिको दिधिषाय्यशब्दस्तु बाहुलकात् सेत्स्यत्येव किं च 'साय्यप्रत्ययान्तो निपात्यते' इति सायणीयवचनमपि चिन्त्यम्, आय्यप्रत्ययाधिकारात् ।

१. 'वृञ' इति ङ. च. । २. 'परं ब्रह्म, वाचंयमश्च' इति क. ।
३. 'स्तौतेः' इति ख. ग. च. छ. ज. । ४. 'क्सेयः' इति क. ।
५. 'विषये' नास्ति क. ।

अत्राह मनोरमाकारः—'स्तुषेय्यं स्तोतव्यं बहुरूपमिति वेदभाष्यम् (साय० ऋ० १०।१२०।६) । यत्तूज्ज्वलदत्तेन स्तुवः केय्य इति पठित्वा कित्वाद् गुणाभाव उवङादेशे स्तुवेय्यः पुरन्दर इत्युक्तम् । तत्र । वेदतद्भाष्यादिविरोधात् । तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव न्यायान्' इति (मनो० पृ० ७८२) । तत्त्वबोधिनीकारोऽप्यत्रैवानुकूलः (तत्त्व० पृ० ५४३) ।

आ० । स्तूयतेऽसाविति **स्तुषेय्यः**—गुरुः । कर्म । स्तौतीति **स्तुषेय्यः**[1]—स्तोता देवो वा । कर्त्ता ॥

## राजेरन्यः ॥५॥ (पं० उ० ३।९४)

राजेर्धातोरन्यप्रत्ययो भवति । राजृ दीप्तौ भौ० । राजतीति[2] **राजन्यः**—ज्योतिः, अग्निः, क्षत्रियो वा । कर्त्ता[3] ॥

## अर्त्तेर्निंत् ॥६॥ ( पं० उ० ३।९५)

अर्त्तेर्धातोरन्यप्रत्ययो भवति निच्च । ऋ गतौ भौ० । अर्यते तन्मृगश्वापदैरिति **अरण्यम्**—निर्जनस्थानम् । कर्म ॥

## पर्जन्यः ॥७॥ ( पं० उ० ३।९६ )

पर्जन्य इत्ययं शब्दो निपात्यते 'अन्य'प्रत्यये निरुद्धः । वृषु सेचने भौ०, गर्ज शब्दे । वर्षतेः परिपूर्वस्य जकारादेशो निपात्यते इकारलोपश्चोपसर्गस्य[4], गर्जतेश्च गकाररेफोपसर्गान्त्यलोपो निपात्यते[5] । परिवर्षति परिगर्जति वा **पर्जन्यः**—महेन्द्रः । कर्त्ता ॥

## शृरम्योश्च[6] ॥८॥ ( पं० उ० ३।१०१ उज्ज्वल० )

आभ्यां धातुभ्यामन्यप्रत्ययो भवति निच्च । शॄ हिंसायां क्र्यै० । शृणात्यर्थिनो भयमिति **शरण्यः**—आर्त्तिहरः । कर्त्ता । रमु क्रीडायाम् । रमन्तेऽस्मिन्निति **रमण्यम्**—शोभनम् । अधिकरणम् ॥

---

१. **'स्तुषेय्यं—स्तोतव्यम्'** इति निरुक्ते (११।२१) ।

२. 'राजतेऽत्यर्थम्' इति क. । ३. सवृत्ति सूत्रं नास्ति ख.पुस्तके ।

४. अत्र पाठस्त्रुटितः प्रतिभाति । 'वृष'धातोः 'वृ' इत्यस्यापि लोपो भवितव्यः ।

५. पर्जन्यशब्दनिर्वचने विप्रवदन्ते वृत्तिकाराः । तथाहि **'अर्जतेः पुडागमः'** इति श्वेतवनवासी (पृ० १२२), **'पृणातेरन्यप्रत्ययस्य जुट्'** इति नारायणः (पृ० ७२), दण्डनारायणश्च (भो० उ० ३।३।४ पृ० ७९) **'पृषु सेचने षस्य जः'** इति दीक्षितः (सि० कौ० पृ० ५४३), उज्ज्वलदत्तोऽप्येवम् (पृ० १२९) **'तृपेराद्यन्तविपर्ययेण तकारलोपेन च जन्यप्रत्ययान्तस्यैतद् रूपम्'** इति निरुक्तसमुच्चयकारः (पृ० ५६) ।

६. उज्ज्वलदत्तवृत्तौ सूत्रमिदं **'अर्त्तेर्नित्'** (द० उ० ८।६) इत्यस्मात्प्राक् पठ्यते । तथा सति प्रत्ययस्वरेण शरण्यरमण्यशब्दयोः मध्योदात्तत्वं प्राप्नोति । दशपादीवृत्त्यनुसारं त्वाद्युदात्तत्वम् । तदेवं विप्रतिपत्तौ विद्वद्भिः स्वरो निर्णेतव्यः ।

## वदेरान्यः ॥९॥ ( पं० उ० ३।९७ )

वदेर्धातोरान्यप्रत्ययो भवति । वद व्यक्तायां वाचि भ्वा० । वदतीति वदान्यः—दाता । कर्त्ता ॥

## वलिमलितनिभ्यः कयन् ॥१०॥ ( पं० उ० ४।१०८ )

एभ्यो धातुभ्यः कयन् प्रत्ययो भवति । वल संवरणे भ्वा० । वलति वल्यते वा तदिति वलयम्—आभरणविशेषः । कर्त्ता [कर्म च][1] । मल मल्ल धारणे भ्वा० । मलते[2] क्षितिमिति मलयः—भूधरः । कर्त्ता । तनु विस्तारे ता० । तनोति कुलमिति तनयः—पुत्रः । कर्त्ता ॥

## वृह्वोः षुक्[3]दुकौ च[4] ॥११॥ ( पं० उ० ४।१०९ )

आभ्यां धातुभ्यां कयन् प्रत्ययो भवति यथासंख्यं षुक्[3]दुकौ चेत्येतावागमौ भवतः । वृञ् वरणे स्वा० । वृणोति व्रियते वा वृषयः—आशयः । कर्त्ता कर्म च । हृञ् हरणे भ्वा० । ह्रियते तदिति हृदयम्—मनः । कर्म ॥

## माच्छाससिसूभ्यो यः ॥१२॥ ( पं० उ० ४।११८ )

एभ्यो धातुभ्यो यः प्रत्ययो भवति । मा माने अ०, माङ् माने शब्दे च जु० । माति[5] मिमीते मीयते वा माया—शाठ्यम् । कर्त्ता कर्म च । छो छेदने [दि०] । छ्यति छायते वा छाया—प्रतिरूपम् । कर्त्ता कर्म च । षस् स्वप्ने अ० । सस्तीति सस्यम्—यवादिः । कर्त्ता । षूङ् प्राणिगर्भविमोचने अ०, षूङ् प्राणिप्रसवे दि०, षू प्रेरणे तु० । सूते सूयते सुवति वा सव्यम्—वामम् । कर्त्ता । 'वान्तो यि प्रत्यये' [अ० ६।१।७९] 'धातोस्तन्निमित्तस्यैव'[6] [अ० ६।१।८०] इत्यवादेशः ॥

---

१. 'आभरणं । कर्म' इति क. ।

२. 'मलति' इति ख. ग. । प्रसादे (प्र० कौ० भा० २, पृ० ६३१) श्वेतवनवास्युणादिवृत्तौ (पृ० १६३) चापि 'मलति' इति पाठ उपलभ्यते । धातुपाठे त्वयमात्मनेपदिषु पठ्यते । तस्मात् 'मलति' इति लेखककृतः प्रमादो वा स्यात् प्रकृत्यन्तरं वा । एवं 'वलति' इत्यत्रापि बोद्धव्यम् ।

३. 'सुक्०' इति क. ज. ।

४. 'वृह्वोः षुक्दुक् इत्वं च' इति च. । तत्र 'वृ'धातोः 'विषयः' इत्युदाहरणमस्ति ।

५. 'माति' नास्ति क. ।

६. 'धातो……स्यैव' इति नास्ति ख. ।

## जनेर्यक् ॥१३॥ ( पं० उ० ४।११६ )

जनेर्धातोर्यक्प्रत्ययो भवति। जनी प्रादुर्भावे दै०, जन जनने जौ०। जायते जजन्ति जन्यते वाऽस्यामपत्यमिति **जाया**—भार्या। अधिकरणम्। **'जनसनखनां सञ्झलोः'** [अ० ६।४।४२] इत्यात्वम्[1]॥

## अघ्न्यादयश्च[2] ॥१४॥ ( पं० उ० २।१४० )

अघ्न्यादयः शब्दा[3] निपात्यन्ते यक्प्रत्यये निरुद्धाः। हन हिंसागत्योः आ०। अस्य नञ्पूर्वस्योपधालोपो निपात्यते। न हन्ति न हन्यते वा **अघ्न्यः**—धर्मः, गोपतिर्वा। कर्त्ता कर्म च। ध्यै चिन्तायां भौ० सम्पूर्वः। अस्याकार-यकार[4]लोपो निपात्यते। संध्यायन्ति[5] अस्या विप्रा इति **सन्ध्या**—दिननिशान्तरम्। अधिकरणम्। डुधाञ् धारणपोषणयोः[6] जौ०। अस्य सम्पूर्वस्याकारलोपो निपात्यते। सन्धानं **सन्ध्या**—अर्कोदयास्तमितकालः[7]। भावः। कमु कान्तौ भौ०। अस्यान्त्यस्य नकारो निपात्यते। काम्यतेऽसाविति **कन्या**—कुमारी। कर्म। हन हिंसागत्योः आ०। अस्य बधादेशो निपात्यते नुगागमश्च। हतमस्याः कर्मभिरशुभैर्बीजमिति[8] **बन्ध्या**—वशा, अनपत्या स्त्री। कर्म। भूतकालः। ईर्ष्य ईर्ष्यार्थे भौ०। अस्य यकारलोपो निपात्यते। ईर्ष्यतीति **ईर्ष्या**—मात्सर्यम्। कर्त्ता। ईर्ष्यणं वा **ईर्ष्या**। भावः। शक्लृ शक्तौ सौ०। अस्योपधाया इत्वं निपात्यते। शक्यते तद् वक्तुमिति **शक्यम्**[9]—असारम्। कर्म॥

---

१. 'जनसन······इत्यात्वम्' इति नास्ति क.।

२. 'एभ्यो धातुभ्यः कयन् प्रत्ययो भवति। वल संवरणे······अघ्न्यादयश्च' इति नास्ति छ.।

३. 'एते' इति क.।

४. 'अस्यास्यकार' इति ख. ग.। 'अस्य यकार' इति क.।

५. 'सम्यक्ध्यायन्ते' इति ग.।

६. 'धारणपोषणयोः' नास्ति क.।

७. '०स्तमानकालः' इति ख.। '०स्तमयकालः' इति क.।

८. 'जीवनम्' इति ख. ग.।

९. अत्र कदाचित् 'शिक्यम्' [इत्येव युक्तः। 'तिल्यशिक्य०' (फि० ७६) इत्यादिनाऽन्तस्वरितत्वात्]इति पाठः स्यात्। अन्यथा शकेरुपधाया इत्वनिपातनं निष्प्रयोजनं स्यात्। अन्ये वृत्तिकारास्तु 'शक्य'पदमेव व्युत्पादयन्ति।

## रुचिभुजिभ्यां किष्यन् ॥१५॥ (पं० उ० ४।१८४)

आभ्यां किष्यन् प्रत्ययो भवति। रुच दीप्तौ भौ०। रुच्यत इति **रुचिष्यम्**—भोज्यम्। कर्म। भुज पालनाभ्यवहारयोः रौ०। भुज्यत इति **भुजिष्यम्**—भोग्यम्[1]। **भुजिष्या**—दासी[2]। कर्म॥

## पूञो[3] यण्णुट्[4] ह्रस्वश्च ॥१६॥ (पं० उ० ५।१३)

पूञो[3] धातोर्यत् प्रत्ययो भवति, णुट्[4] चागमः, उपधाया[5] ह्रस्वश्च। ह्रस्वकरणसामर्थ्याद् गुणो न भवति। पूञ्[6] पवने भौ०। पवति[7] पूयते वाऽनेनेति **पुण्यम्**—शुभम्। कर्त्ता करणं च॥

## स्रंसेः शिः[8] कुट् किच्च ॥१७॥ (पं० उ० ५।१४)

स्रंसेर्धातोर्यत् प्रत्ययो भवति कित्संज्ञकः, कुट् चागमः, शिरित्ययं चादेशः। स्रंसु अवस्रंसने भौ०। स्रंसत इति[9] **शिक्यम्**[10]—परिव्राड्भिक्षाभाण्डस्थानम्, असारश्च। कर्त्ता[11]॥

## हर्यतेः कन्यन्[12] हिर् च[13] ॥१८॥ (पं० उ० ५।४६)

---

१. 'भोज्यम्' इति क.। २. 'भुजिष्या—दासी' नास्ति क.।
३. 'पूङो' इति क.। ४. 'णुः' इति क.। 'णट्' इति ङ.।
५. 'उपधाया' नास्ति क.। ६. 'पूङ्' इति क.।
७. 'पवते' इति क.। ८. 'शि' इत्यविभक्तिको निर्देशः क. ख. ग. छ. ज.।
९. 'चादेशः……इति' नास्ति क.।

१०. पदमिदं **'अघ्न्यादयश्च'** (द० उ० ८।१४) इति सूत्रे निपातितम् (द्र०—अस्मट्टिप्पणम्)। अत्र विशेषमाह श्वेतवनवासी—**'अघ्न्यादित्वात् स्वरस्यानिषिद्धत्वादनर्थकमिदं सूत्रमिति केचित्। अन्तरिते (अस्वरिते) त्वसिद्धये निपातनमवश्यमाश्रयणीयम्'** इति। (पृ० २१५)।

११. इतोऽग्रे—"हन्तेर्यो द्वे च। हन्तेर्धातोर्यप्रत्ययो द्वे चास्य रूपे भवतः। हन हिंसागत्योः आ०। हन्तीति जघन्यः—प्रत्यन्तः। कर्त्ता" इत्यधिकः पाठः क.पुस्तके।

१२. **'कन्य'** इति क. ख. ग. ज.। पञ्चपाद्यां सर्वत्र 'कन्यन्' इत्येव पाठः। 'कन्य'प्रत्यये हिरण्यस्य मध्योदात्तत्वं प्रसज्येत। इष्यते त्वाद्युदात्तत्वम्, वेदे तथा दर्शनात्। यत्त्वथर्ववेदे (२०।१३२।१४) हिरण्यपदस्यान्तोदात्तत्वमुपलभ्यते तत्तु बाहुलकाद् बोध्यम्। तत्र च पाठान्तरेषु हिरण्यस्याद्युदात्तत्वमप्युपलभ्यते (द्र०—औंधमुद्रिते पृ० ५१६)। १३. 'हिर च' क. 'हिरच्' इति ख. ग. ज.।

हर्यतेर्धातोः कन्यन्[1] प्रत्ययो भवति हिरित्ययं[2] चादेशः। हर्य गतिकान्त्योः भौ०। हर्यति हर्यते वा **हिरण्यम्**—सुवर्णम्। कर्त्ता कर्म च॥

## दधातेर्यन्[3] नुट् च ॥१९॥ (पं० उ० ५।५५)

दधातेर्धातोर्यन् प्रत्ययो भवति नुट् चागमः। डुधाञ् धारणपोषणयोः[4] जौ०। दधाति सत्त्वानिति **धान्यम्**[5]—व्रीहिः। कर्त्ता॥

## कवतेर्यक् डुक् च[6] ॥२०॥

कवतेर्धातोर्यक् प्रत्ययो भवति डुक् चागमः। कुङ् शब्दे भौ०। कवते कूयते वा **कुड्यम्**—भित्तिः। कर्त्ता कर्म च॥

॥ यकारः॥

## मन्दिवाशि[7]मथिचतिचङ्क्यङ्किभ्य उरच् ॥२१॥ ( पं० उ० १।३८)

---

१. 'कन्य' इति क. ख. ग. छ. ज.। २. 'हिर इत्ययं' इति क.।

३. 'यत्' इति ङ.। पञ्चपाद्यामपि च। ४. 'धारणपोषणयोः' नास्ति क.।

५. 'धान्य'शब्दोऽन्तःस्वरितः। तथाहि फिट्सूत्रम्—'**तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः**' (फि० ७६) तत्र यनि नित्त्वाद्, यति 'यतोऽनावः' (अ० ६।१।२१३) इत्याद्युदात्तत्वं प्राप्नोति। तदेवं 'धान्ये नित्' (द० उ० १।६४) 'धान्यानां भवने क्षेत्रे खञ्' (अ० ५।२।१) इत्यत्र निपातनादन्तःस्वरितत्वम्। महाभाष्यकारस्तु '**धिनोतेर्धान्यम्। एते चापि धिनुतः**' इत्यादिना धिनोतेर्धान्यशब्दनिष्पत्तिमाह। तथा च मन्त्रवर्णः—'**धान्यमसि धिनुहि देवान्**' (यजुः १।२०)। अस्मिन् पक्षे बाहुलकादिकारस्याकारः।

श्वेतवनवासिकृतोणादिवृत्तिरप्यत्रानुसंधेया (पृ० २२७)।

६. सवृत्ति सूत्रमिदं नास्ति क.पुस्तके।

काशिकाकारस्त्वन्यथेदं सूत्रं पपाठ। तथादि—"**कुड्यशब्दोऽपि 'कवतेर्यत् डक् किच्च' इति यत्प्रत्ययान्त आद्युदात्त इत्येके। ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपरे**" इति (अ० ६।२।८ पृ० ५३९)। अत्राह न्यासकारः—"**ड्यक्प्रत्ययान्तोदात्त इत्यपर इति। ते 'कवतेर्ड्यक्' इति सूत्रमधीयते**" (पृ० ३३३)। पदमञ्जरीकारस्तु '**डकारस्येत्संज्ञा न भवति गुणप्रतिषेधार्थात् ककारानुबन्धात्**' इति विशेषमाह। कौमुदीकारः पक्षान्तरे 'यक्' प्रत्ययमाह (पृ० ६३३)।

७. '**मन्दिवासि**' इति नारायणश्वेतवनवासिनौ।

एभ्यो धातुभ्य उरच्प्रत्ययो भवति। मदि स्तुत्यादिषु भ्वा०। मन्दतेऽस्यां वाजिन इति **मन्दुरा**—वाजिशाला। अधिकरणम्। वाशृ शब्दे दै०[1]। वाश्यतेऽत्यर्थमिति **वाशुरः**—गर्दभः, अगतिश्च। कर्त्ता। मथी विलोडने। मथ्यतेऽसौ जनैरिति **मथुरा**—नगरी। कर्म। मथितावस्यां मधुलवणा[2] इति **मथुरा**—अधिकरणम्। चते चदे याचने भ्वा०। चततीति **चतुरः**—पटुर्जनः। कर्ता। चत्यतेऽसौ जनैरिति **चतुरः**। कर्म। चकिः[3] सौत्रो धातुः। चङ्कत्यत्यर्थमिति **चङ्कुरः**—रथः। कर्त्ता। अकि लक्षणे चु०। अङ्क्यत इति **अङ्कुरः**—प्रादुर्भावः। कर्म॥

## व्यथेः सम्प्रसारणं धः[4] किच्च ॥२२॥ (पं० उ० १।३६)

व्यथेर्धातोरुरच् प्रत्ययो भवति, धश्चान्तादेशः[5], किच्च, सम्प्रसारणं चास्य भवति। व्यथ भयसंचलनयोः भ्वा०। व्यथ्यन्तेऽस्मात् प्राणिन[6] इति **विधुरः**[7]

---

१. 'वाशृ शब्दे वाश्यते वाशृ दीप्तौ सौ०' इति ग.।

२. 'मथ्यतेऽस्यां वा लवणम्' इति क. ख.।

३. 'वकिः' इति ख.। एवं सर्वत्र चकारप्रसङ्गे वकारः।

४. 'धः' इति नास्ति क.। यद्यपि ग.पुस्तके 'धः' इति पदं नास्ति, उदाहरणे च 'विथुरः' पठ्यते तथापि 'धकारश्चान्तादेशः' इत्यस्यार्थे सद्भावादशुद्धोऽयं पाठः स्यात्। एवं ङ.पुस्तकेऽपि 'धः' पदं नास्ति। परमर्थोदाहरणयोः सद्भावात् तत्राप्यावश्यकः। तदेवं क.पुस्तकं विहाय सर्वत्रापि 'धः' पदं पठ्यत इति विज्ञेयम् (द्र०—मनो० पृ० ७५२ तत्त्व० पृ० ५१६)। पञ्चपाद्यामुभयथोपलभ्यते।

५. 'धकारश्चान्तादेशः' इति ग.। 'अस्य उरच् प्रत्ययः' इत्येव क.।

६. 'जनाः' इति क.।

७. 'वियुरः' इति क. ख.।

अत्राह प्रौढमनोरमाकारः—"दशपाद्यां तु 'धः किच्च' इति पठित्वा धकारमन्तादेशं विधाय विधुरोऽनग्निक इत्युदाहृतम्, माधवेनापि तदेवानुसृतम् (द्र०—व्यथधातौ) न त्वेतद् युक्तम्। 'त्वमेषां विथुरा शवांसि' (ऋ० ६।२५।३) 'अतिविद्धा विथुरेणा चिदस्त्रा' (ऋ० ८।९६।२) इत्यादि मन्त्रेषु थकारपाठस्य निर्विवादत्वात्। यदपि माधवेनोक्तम् 'विदिभिदि' इत्यत्र 'व्यथे. सम्प्रसारणं च' इति वचनात् कुरचि थान्तं रूपमिति (द्र०—व्यथधातौ पृ० १३४) तदतिस्थवीयः। कुरज्विधायके सूत्रे व्यथेरुपसंख्यानस्याप्रसिद्धत्वात्। तस्मादिह 'धः किच्च' इति दशपादीपाठं पुरस्कुर्वन्तः

--चोरः, अनग्निकः[1] राक्षसश्च । अपादानम् ॥

## मुकुर[2] दर्दुरौ ॥२३॥ (पं० उ० १।४०)

मुकुरदर्दुर इत्येतौ शब्दौ निपात्येते[3] उरच्प्रत्यये निरुद्धौ । मकि मण्डने भ्वा० । अस्य नलोप उपधाया उत्वं च[4] निपात्यते । मङ्क्यतेऽनेनेति मुकुरः[5]--आदर्शः । करणम् । अथवा मद मर्दने भ्वा० । अस्य रेफलोपो निपात्यते कश्चान्तादेशः उपधाया उत्वं च[4] । मद्यतेऽसाविति मुकुरः[5] । कर्म । दॄ भये [क्र्या०] । अस्य दुगागमो निपात्यते गुणश्च[6] । दृणातीति दर्दुरः—मण्डूकः[7], भेकः । कर्त्ता ॥

बहुलवचनादन्येभ्योऽपि उरच्प्रत्ययो भवति । शॄ हिंसायां क्र्या० । अस्य कुगागमो निपात्यते गुणश्च । शृणातीति शर्कुरः—तरुणः । कु शब्दे अ्रा० । अस्य द्विर्वचनं निपात्यते कुगागमो धातोश्चोकारलोपः । अत्यर्थं कौतीति कुक्कुरः—श्वा । कर्त्ता । अथवा कुक वृक [आदाने] भ्वा० । अस्य कुगागमो निपात्यते । कोकत इति कुक्कुरः । कर्त्ता[8] ॥

---

प्रसादकारादयोऽप्युपेक्ष्याः । कथं तर्हि विधुर इति प्रयोगस्य निर्वाह इति चेत् धुरो विगत इति प्रादिसमासेनेत्यवधेहि । 'समासान्तः' (अ० ५।४।६८) इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात् ' इति (मनो० पृ० ७५१, ७५२) । एवं तत्त्वबोधिनीकारोऽपि (पृ० ५१९) ।

अत्रैव सूत्रे श्वेतवनवास्यप्याह—"ताच्छीलप्रकरणे 'व्यथेः सम्प्रसारणं कुरच् (?) वक्तव्यः' इति वार्त्तिकेन वा विधुरसिद्धिः" इति (पृ० २०) ।

१. 'चोरः अनग्निकः' इति नास्ति क. । 'अनग्निकः' इति नास्ति ग. ।

२. 'मकुर' इति क. । ३. 'एतौ निपात्येते' इत्येव क.पाठः ।

४. 'उपधाया उत्त्वं च' इति नास्ति क. ।

५. 'मकुरः' इति क. । पञ्चपाद्यामपि 'मकुरः' इत्येव व्युत्पाद्यते । तत्राहोज्ज्वलदत्तः—'उकारसहितो मुकुर इत्यपि भवति इति केचित्, प्रमाणं चिन्त्यम्' इति (पृ० १९) । दीक्षितस्तु 'बाहुलकान्मुकुरोऽपि' (सि० कौ० पृ० ५१९) इत्याह । तद्व्याख्यायां च "धातोरुपधायाः पक्ष उकार इति भावः । 'मुकुरो मकुरोऽपि च' इति विश्वः" इत्याह (मनो० पृ० ७५२) ।

६. 'गुणश्च' नास्ति क. । "केचित्तु गुणो दुगागमश्च निपात्यत इत्याहुः" इति मनोरमाकारः (मनो० पृ० ७५२) । ७. 'मण्डूकः' नास्ति क. ।

८. 'अथवा·····कर्त्ता' नास्ति ख. ग. ।

## असेरुरन् ॥२४॥ (पं० उ० १।४१)

असेर्धातोरुरन् प्रत्ययो भवति । असु क्षेपणे दै० । अस्यन्ते देवैरिति असुराः—देवारयः[1] । कर्म[2] ॥

## शाव्शेराप्तौ ॥२५॥ (पं० उ० १।४३)

शावुपपदेऽशेर्धातोरुरन् प्रत्ययो भवति, आप्तौ गम्यमानायाम् । अशू व्याप्तौ सौ० । श्वश्यन्ते तस्मिन् विविधाः कामा[3] इति श्वशुरः[4]—जायापिता । अधिकरणम् । अश भोजने क्र्यै० । अश्नाति तस्मिन् विविधान् कामान् इति श्वशुरः ॥

## इषिमदिमुदिखिदिछिदि[5]भिदिमन्दिचन्दितिमि[6]मिहि[7]मुहिमुचिरुचिरुधिशुषि[8]बन्धिभ्यः किरच् ॥२६॥ (पं० उ० १।५०)

एभ्यो धातुभ्यः किरच् प्रत्ययो भवति । इषु इच्छायां तौ०, इष आ-

---

१. 'दैत्याः' इति ख. ग. ।

२. 'कर्म' इति नास्ति ख. ग. ।

इतोऽग्रे 'मसेश्च । उरन् । मसुरः' इत्यधिकं च. ।

३. 'अश्नुते तस्मिन् विविधान् कामान्' इति क. ।

४. अत्राह श्वेतवनवासी—"उणादीनां यथाकथंचित् व्युत्पादनादप्रसिद्धोऽपि शुशब्दः उपपदत्वेन परिकल्प्यः रूढित एवार्थनिश्चय इत्युक्तम् । अन्ये 'आशुशब्दे यः शुशब्दः तस्योपपदत्वेन निर्देशः, कर्मणि चोरन् प्रत्ययः, पृषोदरादित्वादुपपदादेर्लोपः' इति वर्णयन्ति । आशु आप्तव्यः श्वशुरः । तथा च भाष्यकारेण एकशेषप्रकरणे (अ० १।२।७२) 'आश्वाप्तव्यः श्वशुरः' इत्युक्तम्" इति (पृ० २१, २२) ।

'शुशब्दोऽत्राशुशब्दाभिधायी' इत्युज्ज्वलदत्तः (पृ० २१) । युक्तं चैतत् निघण्टौ शुशब्दस्य क्षिप्रनामसु (निघ० २।१५) पाठात्, 'आशु इति च शु इति च क्षिप्रनामनी भवतः' इति निरुक्तकारवचनाच्च (निरु० ६।१) । 'श्वानं बस्त ....इति निगमः (ऋ० १।१६१।१३)' इति देवराजः (पृ० २६१) । पदपाठेऽनवग्रहदर्शनात् सन्दिग्धोऽयं निगमः । 'अप्रसिद्धोऽपि शुशब्द उपपदत्वेन परिकल्प्यः' इति श्वेतवनवासिवचनमयुक्तम्, निघण्टुनिरुक्तविरोधात् । न च लोकेऽप्रसिद्ध इत्येवाप्रसिद्ध इति शक्यते वक्तुम्, व्याकरणस्य लोकवेदसाधारणत्वात् ।

५. 'छिदि' इति मन्दिपदात् परं पठ्यते क. ।

६. 'तिमि' इषिधातोरनन्तरं पठ्यते क. । ७. नैतत् पठ्यते क. ।

भीक्ष्ण्ये क्रै०, इष गतौ दै०[1]। इच्छति इष्णाति इष्यति इष्यते[2] वा **इषिरः**—अग्निः, आहारो वा। कर्त्ता कर्म च[3]। मदी हर्षे दै०। माद्यन्तेऽनयेति **मदिरा**—सुरा। करणम्। ण्यन्तो वा, मदयतीति **मदिरा**—इरा[4]। कर्त्ता मुद हर्षे[5] भौ०। मोदन्तेऽनेनेति **मुदिरः**—मेघः। करणम्। खिद दैन्ये दै०। खिद्यतेऽनेनेति **खिदिरः**—त्रासः, सोमचक्रः[6]। करणम्। छिदिर् द्वैधीकरणे रौ०। छिनत्तीति **छिदिरः**—शस्त्रम्। कर्त्ता[7]। भिदिर् विदारणे रौ०। भिनत्तीति **भिदिरः** भेदः। कर्त्ता। मदि स्तुत्यादौ भौ०। मन्दतेऽस्मिन्निति **मन्दिरम्**—गृहम्। अधिकरणम्। चदि आह्लादने भौ०, प्रकृत्यन्तरं ण्यन्तो वा[8]। चन्दते चन्दयति वा प्राणिन इति **चन्दिरः**[9]—चन्द्रः, अनेकश्च[10]। कर्त्ता। तिम क्लेदने[11] दै०, प्रकृत्यन्तरं ण्यन्तो वा। तिम्यति तेमयतीति वा **तिमिरम्**—तमः[12]। कर्त्ता[13]। मिह सेचने भौ० ण्यन्तो वा। मेहति मेहयतीति वा **मिहिरः**—पूषा[14]। [कर्त्ता]। मुह वैचित्र्ये दै०। मुह्यतेऽनेनेति **मुहिरः**—कामः[15]। करणम्। ण्यन्तो वा[16], मोहयतीति वा **मुहिरः**। कर्त्ता। मुच्लृ मोक्षणे। मुच्यन्तेऽनेन दुःखेभ्य इति **मुचिरः**—धर्मः। करणम्। ण्यन्तो वा। मोचयति दुःखादिति **मुचिरः**। कर्त्ता। रुच दीप्तौ भौ०। रोचते तत् सर्वेभ्य इति **रुचिरम्**—दयितम्[17], दीप्तिमच्च[18]। कर्त्ता। रुधिर् आवरणे रौ०।

१. 'इषु गतौ दै०, इषु आर्द्रीभावे क्रै०' इति क.।

२. 'इष्यति' इति नास्ति ख. ग.। तत्र 'इष्णाति' पदात् पूर्वम् 'इषति' इति पठ्यते। 'इच्छति इष्यति इष्णातीति' इति क.। ३. 'कर्म च' नास्ति क.।

४. 'आसवः' इति क.।

५. 'हर्षग्लेपनयोः' इति ख.। 'हर्षग्लानयोः' इति ग.।

६. 'सोमवक्रः' इति ग.। पदमिदं नास्ति क.।

७. 'छिदिर् ····· कर्त्ता' इत्ययं पाठः 'गृहम्। अधिकरणम्' इत्यतोऽनन्तरं पठ्यते क.पुस्तके। ८. 'भौ०······ण्यन्तो वा' नास्ति ख. ग.।

९. 'चन्दति चन्दिरः' इति ख.। 'चन्दयति चन्दिरः' इति ग.।

१०. 'चन्द्रोऽनेकपश्च' इति ग.। 'अनेकश्च' इति नास्ति क.।

११. 'आर्द्रीभावे' इति क.। १२. 'अन्धकारः' इति क.।

१३. 'तिम······कर्त्ता' इत्ययं पाठः क.पुस्तके 'ईषिरः······कर्म च' इत्यनन्तरं पठ्यते। १४. 'मिह······पूषा' इत्ययं पाठो नास्ति क.।

१५. 'कालः' इति क.। १६. 'ण्यन्तो वा' इति नास्ति ख. ग.।

१७. 'दैवम्' इति ख. ग.।

१८. 'दीप्तिमच्च' नास्ति ग.। परमत्र स्थानं रिक्तं वर्तते।

रुद्धणीति **रुधिरम्**—रक्तम्[1]। कर्त्ता। शुष शोषणे दि०। शुष्यते शोषयति वा **शुषिरम्**—शुष्कम्। कर्त्ता कर्म च[2]। बन्ध बन्धने क्र्यै०। बद्धमस्य श्रवणेन्द्रियमिति **बधिरः**—श्रोत्रेन्द्रियविहीनः[3]। कर्म। भूतकालः॥

## अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥२७॥
## (पं० उ० १।५२)

एते निपात्यन्ते किरच्प्रत्यये निरुद्धाः[4]। अज गतिक्षेपणयोः भ्वा०। अजन्ति तस्मिन्निति **अजिरम्**—वेश्म[5], अनङ्गं च। अस्य वीभावाभावः[6]। अधिकरणम्। अथवा नञ्पूर्वस्य वा जीर्यतेर्ऋवर्णलोपो निपात्यते[7]। जॄष् वयोहानौ दि०[8]। न जीर्यन्त इति **अजिराः**—देवाः[9]। कर्त्ता। शॄ हिंसायां क्र्यै०। अस्य द्विर्वचनं सन्वद्भाव ऋवर्णलोपश्च निपात्यते, सन्वद्भावे सतीत्वम्[10]। शीर्यन्तेऽस्मिन् तृणगुल्म[11]वनस्पतीनां तेजांसीति **शिशिरः**—ऋतुः। अधिकरणम्। श्रथि शैथिल्ये भ्वा०। अस्य रेफलोप उपधाया इत्वं प्रत्ययस्य च लत्वमनुस्वारलोपश्च निपात्यते[12]। श्रन्थनम् **शिथिलम्**—शान्तरसमित्यर्थः। भावः। ष्ठा गतिनिवृत्तौ भ्वा०। अस्याकारलोपो निपात्यते। तिष्ठतीति **स्थिरम्**—दृढम्। कर्त्ता। स्फायी वृद्धौ भ्वा०। अस्य टिलोपो[13] निपात्यते। स्फायनं **स्फिरम्**—बहुभावः। ष्ठा गतिनिवृत्तौ भ्वा०। अस्य ह्रस्वत्वं

---

१. 'क्षतजम्' इति क.। २. 'शुष···कर्म च' इत्ययं पाठो नास्ति क.।

३. 'श्रवणजडः' इति क.।

४. 'निरुद्धाः' इति नास्ति ग.। 'एते शब्दाः किरच्प्रत्यये निपात्यन्ते' इति ख.।

५. 'चत्वरम्' इति ख.।

६. 'अनङ्गं ··भावः' इति नास्ति ख. ग.। 'अस्य वीभावाभावः' नास्ति क.।

७. अत्राह भट्टोजिदीक्षितः—**'दशपादीवृत्तौ नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो निपात्यते इत्युक्तं तदपि ग्राह्यम्'** इति (मनो० पृ० ७५३)। एवं तत्त्वबोधिनीकारोऽपि (पृ० ५२०)।

८. 'जॄष्······दि०' नास्ति क. ख.। ९. 'अजिरं—देहश्च' इति क.।

१०. 'सन्वद्भावे सतीत्वम्' इति नास्ति ख. ग. अनावश्यकश्च।

११. 'नृगुल्म' इति ग.। 'तृणपर्णगुल्म' इति क.।

१२. 'लत्वं निपात्यतेऽनुषङ्गलोपश्च' इति क.।

१३. 'अस्याकारयकारलोपो' इति क.।

निपात्यते वुगागमश्च[1]। स्थितो विश्रमा[2]दिति **स्थविरः**—वृद्धः। कर्त्ता। भूतकालः। खादृ भक्षणे भ्वा०। अस्योपधाया ह्रस्वत्वं निपात्यते। खादन्ति तं कुष्ठव्याधिशान्त्यर्थ[3]मिति **खदिरः**[4]—वृक्षविशेषः। कर्म॥

**उणादयो बहुलम्** [अ० ३।३।१] इत्यन्येभ्योऽपि किरच् प्रत्ययो भवति[5]। शीङ् स्वप्ने अ०। अस्य ह्रस्वत्वं वुगागमश्च निपात्यते[6]। शेरतेऽस्मिन् राज्ञा बलानीति[7] **शिविरम्**—स्कन्धावारं, स्थावरं च[8]। अधिकरणम्। डुपचष् पाके भ्वा०। अस्योपधाया इत्वं ठश्चान्त्यस्य निपात्यते। पच्यते तस्मिन्निति **पिठिरम्**[9]—साधनभाण्डम्[10]। अधिकरणम्॥

## मीनातेरूरः[11] ॥२५॥ (पं० उ० १।६७)

मीनातेर्धातोरूरः[11] प्रत्ययो भवति। मीञ् हिंसायां क्र्या०। मीनाति सर्पा-

---

१. 'वुगागमश्च निपात्यते' इति क.। २. द्र०—काशिका अ० ७।३।७४॥

३. 'कुष्ठव्याधिनिमित्तम्' इति ख. ग.।

४. वेदे खदिरशब्दोऽन्तोदात्तः (अथर्ववेदे २०।१३१।१४ आद्युदात्तोऽप्यस्ति)। अन्तोदात्तत्वं चित्त्वात् सिद्धम्। अत्राह हरदत्तः—'खादेः खदिरशब्दः किरच्प्रत्ययान्तो निपातितः, तेनानुदात्तलक्षणो (४।३।१४०) वुञ् (? अञ्) प्राप्नोति। यदि तु 'अण्' इष्यते बिल्वादिषु (अ० ४।३।१३६) पठितव्यः' (पद० भा० २, पृ० १६२)। खदिरशब्दः पलाशादिषु (अ० ४।३।१३७) पठ्यते तस्मादणञावुभौ भवतः।

५. 'इतिवचनादन्येऽपि निपात्यन्ते किरच्प्रत्यये' इति क.।

६. 'निपात्यते वुगागमश्च' इति क.। ७. 'राजकुलम्' इति ख. ग.।

८. 'स्कन्धावारम्' इति क.। 'स्थावरं च' इति नास्ति क. ग.।

९. प्रक्रियाकौमुदीटीकायां (भा० २, पृ० ६३३) 'पठरम्' इत्येव पठ्यते। तत्र बाहुलकात् प्रत्ययादेरकारादेशोऽपि बोध्यः। १०. 'आधनभाण्डम्' इति ख.।

११. 'ऊरच्' इति ख. ग. छ. ज.। 'ऊरन्' इति ङ. च.। पञ्चपाद्यामपि 'ऊरन्' इत्येव।

इदमत्रावधेयम्—वेदेषु 'मयूर' शब्दो मध्योदात्त उपलभ्यते। तत्र ऊरच्पक्षेऽन्तोदात्तत्वं प्राप्नोति, ऊरनि त्वाद्युदात्तत्वम्। तदुभयमप्यनिष्टम्। 'ऊर'प्रत्यये (द० उ० क.पाठे) तु प्रत्ययस्वरेण मध्योदात्तत्वं सिध्यति। अतोऽयमेव पाठः साधिष्ठः। अव्युत्पत्तिपक्षे तु 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति फिट्सूत्रेण (४२) मध्योदात्तत्वं सिद्धम्। अत्र सूत्रे श्वेतवनवासिवृत्तिरप्यनुसंधेया (पृ० ३१)।

निति[1] मयूरः—बर्हिः । कर्त्ता ॥

कठिचकिभ्यामोरः[2] ॥२९॥ (पं० उ० १।६१)

आभ्यां धातुभ्यामोरः[2] प्रत्ययो भवति । कठ कृच्छ्रजीवने भौ० । कठतीति कठोरः—चिरन्तनः, अमृदुर्वा । कर्त्ता । चक तृप्तौ भौ० । चकतीति चकोरः—ज्योत्स्नापायिपक्षी[3] । कर्त्ता ॥

किशोरादयश्च ॥३०॥ (पं० उ० १।६२)

किशोरादयः शब्दा निपात्यन्ते ओरप्रत्यये निरुद्धाः । काशृ दीप्तौ भौ० । अस्योपधाया इत्वं निपात्यतेऽगुणत्वं च[4] । काशत इति किशोरः—बालः[5] । कर्त्ता । एवमन्येऽपि द्रष्टव्याः ॥

स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिभिदिछिदिमन्दिचन्दिदहिदसिदम्भिवहिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥३१॥ (पं० उ० २।१३)

एभ्यो धातुभ्यो रक्प्रत्ययो भवति । स्फायी वृद्धौ भौ० । स्फायत इति स्फारम्—बहु अव्ययधर्मः[6] । कर्त्ता तञ्चु गतौ भौ० । तच्यते तदिति तक्रम्—उदश्वित् । कर्म । न्यङ्क्वादित्वात्[7] [द्र०—अ० ७।३।५३] कुत्वम् । वञ्चु गतौ भौ० । वच्यते तदिति वक्रम्—कुटिलम् । कर्म । शक्लृ शक्तौ सौ० । शक्नोतीति शक्रः—इन्द्रः । कर्त्ता । क्षिप प्रेरणे भौ० । क्षिप्यते तदिति क्षिप्रम्—आशु । कर्म । क्षुदिर् सम्प्रेषणे रौ० । क्षुणत्तीति क्षुद्रः—हिंस्रः ।

---

अत्राह नारायणः—(पृ० १५)
मध्योदात्तो मयूरोऽयमिष्टो निस्त्वान्न सिध्यति ।
तस्मादूरान्त एवोक्तो मयूरो भोजभूभुजा ॥ इति ॥

१. 'सर्वानिति' इति ग. ।

२. 'ओरन्' इति ङ. । पञ्चपाद्यां 'ओरन्, ओरच्' इत्युभयथा पठ्यते । तदुभयमपि न । मध्योदात्तस्वरस्येष्टत्वात् । अव्युत्पत्तिपक्षे तु 'लघावन्ते द्वयोश्च बह्वषो गुरुः' (फिट् ४२) इत्यनेनेष्टस्वरसिद्धिः ।

३. 'ज्योत्स्नापायि' इति नास्ति ख. ग. ।

४. 'अगुणत्वं च' इति नास्ति ख. ग. ।

५. 'तरुणः' इति क. ।

६. '०र्धमि' इति क. ।

७. 'न्यङ्क्वादिपाठात्' इति क. ।

कर्त्ता। सृप्लृ गतौ भौ०। सर्पतीति **सृप्रः**—चन्द्रमाः, **सृप्रः**(? **प्रम्**)—मधु, **सृप्रा**—नदी[1]। कर्त्ता। तृप प्रीणने दै०। तृप्यतीति **तृप्रम्**—आज्यम्, काष्ठञ्च[2]। कर्त्ता। दृप हर्षविमोचनयोः[3] दै०। दृप्यतीति **दृप्रः**—बलम्, **दृप्रा**—बुद्धिः। कर्त्ता। वदि अभिवादनस्तुत्योः भौ०। वन्दते वन्द्यतेऽसाविति **वन्द्रः**—हेतुः, कामो वा। कर्त्ता कर्म च। उन्दी क्लेदने रौ० सम्पूर्वः। समुन्दन्ति तस्माद् ग्रीष्मकाले नद्य इति **समुद्रः**—उदधिः[4]। अपादानम्। श्विता वर्णे भौ०। श्वेतत इति **श्वित्रम्**—व्याधिः। कर्त्ता। वृतु वर्तने भौ०। वर्तत इति **वृत्रः**—दानवः, वायुश्च[5]। कर्त्ता। अज गतिक्षेपणयोः [ भौ० ]। अजति संग्राममिति **वीरः**—शूरः। कर्त्ता। णीञ् प्रापणे भौ०। नयति नीयते वा तदिति **नीरम्**—जलम्। कर्त्ता कर्म च। पद गतौ दै०। पद्यतेऽस्मिन्निति **पद्रः**—ग्रामः, घोषादिजनपदसन्निवेशः। अधिकरणम्। मदी हर्षे दै०। माद्यतेऽस्मिन्निति **मद्रः**—जनपदः, क्रीडा वा[6]। अधिकरणम्। मुदी हर्षे भौ०। मोदन्तेऽनयेति **मुद्रा**—प्रत्ययकारिणी[7]। खिद दन्ये दै०, प्रकृत्यन्तरं ण्यन्तो वा[8]। खिद्यते[9] खेदयति वा **खिद्रम्**—विषाणम्। कर्त्ता। भिदिर् विदारणे रौ०। भिनत्ति भिद्यते वा **भिद्रः**—शरः। कर्त्ता कर्म च। छिदिर् द्वैधीकरणे रौ०। छिद्यते तदिति **छिद्रम्**—विवरम्। कर्म। मदि स्तुत्यादौ भौ०। मन्दत इति **मन्द्रः**—मधुरः स्वरः। कर्त्ता। चदि आह्लादने दीप्तौ च भौ०। चन्दत इति **चन्द्रः**—सोमः। कर्त्ता। दह भस्मीकरणे। दहति दह्यते वा **दह्रः**—अग्निः, सूर्यो वा। कर्त्ता कर्म च। दसु उपतापे दै०। दस्यतीति **दस्रः**—देवभिषक्। कर्त्ता। दम्भु दम्भे सौ०। दभ्नोति दभ्यते वा **दभ्रः**—अल्पम्, सूर्याचन्द्रमसौ च। कर्त्ता कर्म च[10]। वह प्रापणे भौ०। वहतीति **उह्रः**—

---

१. 'सृप्रा—नदी' नास्ति क.।

२. अत्राह भट्टोजिदीक्षितः—"तृप्रः पुरोडाश इति। 'न तृप्रा उरुव्यचसम्' इति मन्त्रे वेदभाष्यकारैः (साय० ऋ० ८।२।५), प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्चेत्थं व्याख्यातम्। दशपादीवृत्तौ तु 'तृप्रमाज्यं काष्ठं च' इत्युक्तम्। 'तृप्रं दुखम्' इति सुब्धातुवृत्तौ माधवः" इति (मनो० पृ० ७६५)। तत्त्वबोधिनीकारोऽप्येवम् (तत्त्व० पृ० ५२६)।

३. 'हर्षे' इति क.।

४. 'उदधिः' नास्ति क.।

५. 'रिपुश्च' इति क.।

६. 'माद्यन्त्येष्विति मद्राः—जनपदाः' इति क.।

७. 'प्रत्ययः। करणम्' इति क.।

८. 'प्रकृत्यन्तरं ण्यन्तो वा' इति नास्ति ख. ग.।

९. 'खिन्ते इति क.।

१०. 'दह भस्मी······कर्त्ता कर्म च' इति नास्ति क.।

अनड्वान् । कर्त्ता । वस निवासे भ्वा० । वसत्यस्मिन् परं तेज इति उस्रः—रश्मिः । अधिकरणम् । वाशृ दीप्तौ दे० । वाश्यत इति वाश्रः—रासभः[1], पक्षी वा । कर्त्ता । शीङ् स्वप्ने अा० । शेतेऽत्यर्थमिति शीरः—अजगरः[2] । कर्त्ता । हस हसने भ्वा० । हसत्यत्यर्थमिति हस्रः—मूर्खः[3] । कर्त्ता । हसनं वा हस्रः । भावः[4] । सिधु संसिद्धौ स्वा० । सिध्नोतीति[5] सिध्रः—आसनप्रकारः[6] । कर्त्ता । शुभ दीप्तौ भ्वा० । शोभत इति शुभ्रः—सितः[7] । कर्त्ता ॥[8]

## चक्रिरम्योरुच्चोपधायाः ॥३२॥ ( पं० उ० २।१६ )

आभ्यां रक् प्रत्ययो भवति, उच्चोपधायाः[9] । चक तृप्तौ भ्वा० । चकति चक्यते वाऽनेनेति[10] चुक्रः—रसविशेषः । कर्त्ता करणं च[11] । रमु क्रीडायां भ्वा० । रमन्तेऽस्मिन्निति रुम्रः—सुन्दरः । अधिकरणम् ॥

## वौ कसेः ॥३३॥ ( पं० उ० २।१७ )

वावुपपदे कसे रक्प्रत्ययो भवति, उच्चोपधायाः । कस गतौ भ्वा० विपूर्वः[12] । विकसतीति विकुस्रम्—पुष्पितम् । विकुस्रः—चन्द्रमाः[13] । कर्त्ता ।।[14]

---

१. 'गर्दभः' इति क. । २. 'अजगरः' नास्ति क. ।
३. 'हसनशीलः' इति क. । ४. 'हसनं वा हस्रः । भावः' इति नास्ति क. ।
५. 'षिधु संसिद्धौ दे० । सिद्ध्यतीति' इति क. ।

इदमत्रावधेयम्—अयं धातुः साम्प्रतं स्वादौ नोपलभ्यते । दिवादावपि 'षिधु संराद्धौ' इत्येवं पठ्यते । प्रक्रियाकौमुदीटीकाकारोऽप्येतस्मिन् दशपाद्युणादिसूत्रे 'सिध्नोति सिध्रः' (भा० २, पृ० ६३३) इत्यादिना श्नुविकरणं मन्यते । तेनापठितोऽप्ययं धातुः स्वादौ द्रष्टव्यः ।

६. 'आसनप्रकारः' इति ग. । 'सप्रकारः' इति क. ।
प्रक्रियाकौमुदीटीकाकारस्तु 'सिध्र आसवप्रकारः' (भा० २, पृ० ६३३) इत्याह ।

७. 'शुभ्रम्—अवदातम्' इति क. ।
८. च.पुस्तके इतोऽग्रे 'निन्देर्नलोपश्च । निन्दे रक् नकारलोपश्च । निन्द्यते इति निद्रा' इत्यधिकः पाठ उपलभ्यते । ९. 'उपधाया उश्च' इति क. ।
१०. 'चकते इति' इत्येव क. । ११. 'कर्त्ता' इत्येव क. ।
१२. 'विपूर्वः' नास्ति क. । १३. 'विकुस्रः—चन्द्रमाः' नास्ति क. ।
१४. च.पुस्तके इतोऽग्रे 'तदेर्नुम् । तदे रक् नुम् च । तन्द्रा' इत्यधिकः पाठ उपलभ्यते ।

## शदेरूच ॥३४॥ ( पं० उ० २।१८, २१ )

शदेर्धातो रक्प्रत्ययो भवति, ऊ चोपधायाः[1]। शद्लृ शातने भौ०। शीयत इति शूद्रः—वर्णान्तः[2]। कर्त्ता॥

## स्थश्च ॥३५॥ ( पं० उ० २।१९॥५।४ )

स्था इत्येतस्माद् रक्[3] प्रत्ययो भवति, ऊकारश्चान्तादेशः। ष्ठा गतिनिवृत्तौ भौ०[4]। तिष्ठतीति स्थूरः[5]—उच्चः। कर्त्ता॥

## अमितम्योर्दीर्घश्च ॥३६॥ (पं० उ० २।२० )

आभ्यां धातुभ्यां रक् प्रत्ययो भवति दीर्घश्चोपधायाः[6]। अम गत्यादौ भौ०। अमति अम्यते वा आम्रः—चूतः[7]। कर्त्ता कर्म च। तमु काङ्क्षायां [दै०]। तम्यति तम्यते वा जनैरिति[8] ताम्रः—लोहविकारः। कर्त्ता कर्म च॥

## दुरीणो लोपश्च ॥३७॥ ( पं० उ० २।२२ )

---

१. 'प्रत्यय ऊ चादेश उपधाया भवति' इति क.।

२. 'वर्णः' इति ख.।

३. 'तिष्ठतेः रक्' इति क.।

४ 'ष्ठा······भौ०' नास्ति क.।

५. अत्राह श्वेतवनवासी—'पञ्चमेऽपि पादे (पं० उ० ५।४) ऊरन्प्रत्ययान्तः स्थूरशब्दो व्युत्पाद्यते, व्युत्पत्तेरनियमात्। केचिदेतत् सूत्रं नाधीयते' इति (पृ० ६४)।

अत्रायं विशेषः—श्वेतवनवासिवर्जमन्ये पञ्चपादीवृत्तिकारा इदं सूत्रं न पठन्ति। पञ्चपाद्यां 'स्थः किच्च' (पं० उ० ५।४) इत्यनेन 'ऊरन्'प्रत्ययान्तः स्थूरशब्दो व्युत्पाद्यते। तत्र कित्त्वादाकारलोपे नित्स्वरेणाद्युदात्तत्वं प्राप्नोति। अन्तोदात्तत्वं चेष्यते, वेदे तथा दर्शनात्। रक्प्रत्यये तु प्रत्ययस्वरेणान्तोदात्त एव भवति। 'स्थः किच्च' (पं० उ० ५।४) इत्येतत्तु दशपाद्यां नैव पठ्यते। तस्मादत्र दशपादीपाठ एव ज्यायान्।

'रलयोरभेदात् स्थूलः' इति प्रक्रियाकौमुदीटीकाकारः (भा० २, पृ० ६३४)।

६. 'दीर्घश्चानयोः' इति क.। अस्मिन् पाठे 'अचश्च' (अ० १।२।२८) इति परिभाषयाऽच एव दीर्घत्वम्।

७. 'फलवृक्षः' इति क.।

८. 'जनैरिति' नास्ति क.।

दुर्शब्द[1] उपपदे इणो धातो रक्प्रत्ययो भवति, लोपश्च धातोः[2]। इण् गतौ आ० दुर्पूर्वः। कृच्छ्रेणेयत **दूरम्**[3]—विप्रकृष्टम्। कर्म॥

## कृतेश्छक् क्रू च ॥३८॥ ( पं० उ० २।२३ )

कृते[4]र्धातो रक्प्रत्ययो भवति छक् क्रू चागमादेशौ[5] भवतः। कृती छेदने तौ०, कृत वेष्टने [रौ०]। कृन्तति [कृणत्ति] कृत्यते वाऽनेनेति[6] **कृच्छ्रम्**—दुःखम्। कर्त्ता कर्म[7] च। कृन्ततीति **क्रूरः**—पापकर्मा, अमृदुश्च। कर्त्ता॥[8]

## रोदेर्णिलुक् च ॥३९॥ (पं० उ० २।२४ )

रोदेर्धातो रक्प्रत्ययो भवति णिलुक् च[9]। रुदिर् अश्रुविमोचने अ०। रोदयति दानवयोषित इति **रुद्रः**[10]—शिवः[11]। कर्त्ता कर्म च[12]॥

---

१. 'दुरि' इति क.। २. लोपश्चास्य भवति धातोः, दुरोदीर्घश्च' इति ख.ग.।

३. "धातोर्लोपे 'रो रि' (अ० ८।३।१४) इत्युपपदरेफस्य लोपे च 'ढ्रलोपे पूर्वस्य दीर्घो णः' (अ० ६।३।१११) इति दीर्घः" इति श्वेतवनवासी (पृ० ६५)।

४. 'कृन्ते०' इति क.। ५. 'इत्येतावादेशौ च' इति क.।

६. 'तद् यत्रेति' इति ख.। 'कृती छेदने भौ०। कृन्तति कृत्यते तत्प्रयत्नेनेति' इति क.। ७. 'करणम्' इति युक्तं स्यात्।

८. 'हन्तेर्घुरच्। हन्तेर्घुरच् प्रत्ययः। हन्तीति हन्तुरम्' इत्यधिकं च.पुस्तके।

९. 'भवति' इत्यधिकं क.।

१०. तैत्तिरीयसंहितायान्तु—'सोऽरोदीत्, यदरोदीत् तद् रुद्रस्य रुद्रत्वम्' (तै० सं० १।५।१) इत्यण्यन्तादेव व्युत्पाद्यते। एवं भोजोऽपि (२।३।२१)।

'अरोदीदिति रुद्रः इति श्रुत्यानुगुण्यादण्यन्तादेवाह भोजः' इति नारायणः (पृ० ३७)। अत्र यः श्रुत्यानुगुण्यरूपो हेतुरुक्तः स त्वयुक्तः। अन्यत्र 'यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति, तद् यद् रोदयन्ति तस्माद् रुद्राः' (शत० ११।६।३।७) इति ण्यन्तादपि व्युत्पत्तिदर्शनात्।

'आराद् दुःखं द्रावयतीति नैरुक्ताः' (नैतद् यास्कवचनम्) णिलुग्वचनं प्रत्ययलक्षणेन गुणो मा भूद्' इति श्वेतवनवासी (पृ० ६६)।

अत्राह निरुक्तकारः—"रुद्रो रौतीति सतः, रोरूयमाणो द्रवतीति वा, रोदयतेर्वा। 'यदरुदत्तद् रुद्रस्य रुद्रत्वम्' इति काठकम् (तु० का० सं० २५।१)। 'यदरोदीत् तद् रुद्रस्य रुद्रत्वम्' इति हारिद्रविकम्" इति (निरु० १०।५)।

११. 'शङ्करः' इति क.। १२. 'कर्म च' नास्ति क.।

## बहुलमन्यत्रापि संज्ञाछन्दसोः ॥४८॥ (पं० उ० २।२५)

अन्यस्माद् धातोरन्यस्मिन् प्रत्यये परतः संज्ञायां छन्दसि च विषये बहुलं णेर्लुग् भवति। तत्र संज्ञायाम्—दिवु क्रीडादौ ण्यन्तः, क्विप्। देवयतीति **द्यौः**—स्वर्गः, अन्तरिक्षं वा[1]। कर्त्ता। डुकृञ् करणे ता० ण्यन्तः, पुण्यशब्दपूर्वः क्विप्। पुण्यं कारयतीति **पुण्यकृत्**। कर्त्ता। धृ धारणे भौ० ण्यन्तः, वज्रशब्दपूर्वः। वज्रं धारयतीति **वज्रधरः**—इन्द्रः। कर्त्ता[2]। अम्बु धारयतीति **अम्बुधरः**—मेघः। एवं **चक्रधरः छत्रधरः** इत्यादि[3]। छन्दसि खल्वपि "**वर्धन्तु** त्वा सुष्टुतयो गिरो मे" [ऋ० ७।९९।७]। वृधु वृद्धौ भौ० ण्यन्तः, लोट्प्रथमपुरुषबहुवचनम्। वर्धयन्तु इति प्राप्ते। "अग्ने **शर्ध** महते सौभगाय" [ऋ० ५।२८।३]। शृधु उन्दे भौ० [ण्यन्तः], लोण्मध्यमपुरुषैकवचनम्। शर्धयेति प्राप्ते। "नेमिं **नमन्ति**" [ऋ० ८।९७।१२]। णमु प्रह्वत्वे शब्दे च भौ० [ण्यन्तः], लटः प्रथमपुरुषबहुवचनम्। नमयन्तीति प्राप्ते। "**जजान** गर्भं महिमानमिन्द्रम्" [अथ० ३।१०।१२]। जन जनने [जौ०], जनी प्रादुर्भावे [दै० ण्यन्तः], लिटः[4] प्रथमपुरुषैकवचनम्। जनयामासेति प्राप्ते।

बाहुलकादसंज्ञाछन्दसोरपि णेर्लुग् भवति। शुष शोषणे दै०, मुच मोक्षणे तौ०, रुह बीजजन्मनि प्रादुर्भावे च भौ०, पर्णशब्दपूर्वः ण्यन्तः[5], क्विप्। पर्णानि शोषयतीति **पर्णशुट्**, पर्णशुषौ, पर्णशुषः; पर्णानि मोचयतीति **पर्णमुक्**, पर्णमुचौ, पर्णमुचः; पर्णानि रोहयतीति **पर्णरुट्**[6], पर्णरुहौ, पर्णरुहः—वायवः। कर्त्ता। उक्तं चात्र—

**"वान्ति पर्णशुषो वातास्ततः[7] पर्णमुचोऽपरे।**
**ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति[8]"** ॥ इति ॥

---

१. 'अन्तरिक्षं वा' इति नास्ति क.।

२. 'चक्र····· चक्रं······चक्रधरः' इति ख. ग.।

३. 'वज्रं धारयतीति वज्रधरः' इति ख. ग.।

४. 'प्रथमपुरुषबहुवचनम्। नमयन्तीति ·····लिटः' इति नास्ति ख.।

५. 'ण्यन्तेभ्यः' इति क.।

६. 'पर्णशुट्, पर्णमुक्, पर्णरुट्' इत्येव पाठः क.।

७. 'वान्ति' इत्युज्ज्वलदत्तोद्धृतः पाठः (पृ० ६९)।

८. अनुपलब्धमूलमिदम्। 'पर्णशुषिवण्णिलुग् भविष्यति' इति महाभाष्यम् (७।

डुकृञ् करणे ता० ण्यन्तः। अस्य लिटः प्रथमपुरुषबहुवचने 'महतः कारयाञ्चक्रुरानन्दान्' इति प्राप्ते 'महतश्चक्रुरानन्दान्'[1] इति भवति। घुषिर् शब्दार्थः[2] भौ० ण्यन्तः।

"महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः"[3]।

घोषयाञ्चक्रुरिति प्राप्ते जुघुषुरिति भवति[4]॥

## जोरी च ॥४१॥ (पं० उ० २।२६)

जु इत्येतस्माद् धातो रक्प्रत्ययो भवति ईकारश्चान्तादेशः।[5] जु गतौ भौ०[6]। जवति जूयते वा जीरः[7]—अग्निः, द्रव्यं[8] वायुर्वा। कर्त्ता कर्म च॥

## सुसूधाञ्गृधिभ्यः क्रन् ॥४२॥ (पं० उ० २।२७)

एभ्यो धातुभ्यः क्रन् प्रत्ययो भवति। षुञ् अभिषवे सौ०। सुन्वन्ति सूयते वा सुराः—देवाः, [मदिरा वा]। कर्त्ता कर्म च। षूङ् प्राणिगर्भविमोचने अा०, षु प्राणिप्रसवे दै०, षू प्रेरणे भौ०। सूते सूयते सुवति वा सूरः—आदित्यः। कर्त्ता। डुधाञ् धारणपोषणयोः[10] जौ०। दधात्यापत्सु चित्तमिति धीरः—सत्त्ववान्। कर्त्ता। गृधु अभिकाङ्क्षायां दै०। गृध्यति यत्र तत्रेति गृध्रः—लुब्धकः। गृध्यत्यामिषमिति गृध्रः—श्येनः। कर्त्ता॥

---

४।६५) अत्रानुसन्धेयम्। तत्राह कैयटः—"पर्णशुषिवदिति यथा पर्णानि शोषयन्ति 'पर्णशुषो वाताः' इत्यादौ क्विपि 'बहुलमन्यत्रापि संज्ञाछन्दसोः' (द० उ० ८।४०। पं० उ० २।२५) इति णिलुग् भवतीत्येवं दाधर्त्तीत्यादौ भविष्यतीत्यर्थः" (प्रदीपे ७। ४।६५)।

१. अनुपलब्धमूलमिदम्।

२. 'अविशब्दे' इति ग.। 'शब्दे' इति ख.।

३. अनुपलब्धमूलमेतत्। महाभाष्येऽप्ययमुद्धृतः (अ० ७।२।२३)।

४. 'भवति' नास्ति क.।

५. 'जो रक्प्रत्यय ई चान्तादेशो भवति' इति क.।

६. 'जु इति सौत्रो धातुः' इत्युज्ज्वलदत्तः (पृ० ७०)। 'जु सौत्रो धातुः गतौ वर्तत इत्याहुः। गतिहेतौ वेग इत्यपरे' इति श्वेतवनवासी (पृ० ६६)।

७. अत्राहोज्ज्वलदत्तः—"ज्यश्चेत्येके। तथा हि 'जीवेरदानुक्' (दश० उ० १। १६३) इत्यस्य प्रत्याख्यानार्थं 'नैतज्जीवे रूपं किन्तु रकि ज्यः सम्प्रसारणम्' (म० भा० १।१।४) इति भाष्य उक्तम्" इति (पृ० ७०)।

८. 'द्रव्यम्' इति नास्ति क.। ९. '०घा' इति क. च. छ. ज.।

१०. 'धारणाविरणयोः' नास्ति ङ.।

## शुषिचिमिभ्यो[1] दीर्घश्च ॥४३॥ ( पं० उ० २।२८)

एभ्यः क्रन् प्रत्ययो भवति दीर्घश्चैषाम्[2]। शु गतौ भौ०। शवति[3] संग्रामं, शूयते वाऽसौ रिपुभिरिति **शूरः**[4]—जेता[5]। कर्त्ता कर्म च। षिञ् बन्धने सौ०। सिनोति सीयते वा **सीरः**—लाङ्गलम्, हलविलेखिता लेखा[6] च। कर्त्ता कर्म च। चिञ् चयने सौ०। चिनोति चीयते वा **चीरः**—मुनिजनवासः। कर्त्ता कर्म च। डुमिञ् प्रक्षेपणे सौ०। मिनोति मीयते वा **मीरः**[7]—देशसीमा। कर्त्ता कर्म च ॥

## वाविन्धेः ॥४४॥ ( पं० उ० २।२९ )

वावुपपदे इन्धेर्धातोः क्रन् प्रत्ययो भवति। ञिइन्धी दीप्तौ रौ० विपूर्वः। विविधमिन्धते इध्यते वा ज्योतिभिरिति **वीध्रम्**—निर्मलं नभः, पूर्णचन्द्रमण्डलं वा। कर्त्ता कर्म च ॥

## वृधिवपिभ्यां रन् ॥४५॥ (पं० उ० २।३०)

आभ्यां रन् प्रत्ययो भवति। वृधु वृद्धौ भौ०। वर्धते तदम्भसा स्पृष्टमिति **वर्ध्रम्**—चर्मच्छेदः। कर्त्ता। डुवप बीजतन्तुसन्ताने। उप्यतेऽस्मिन् बीजमिति **वप्रम्**—क्षेत्रम्, प्राकारजातिर्वा। अधिकरणम् ॥

## ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्र[8]क्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लतीव्रवर्णे[9]रामालाः ॥४६॥ ( पं० उ० २।३१ )

---

१. '०मिञाम्' इति क. ज.।  २. 'दीर्घश्चैषां' इति नास्ति क.।

३. 'शु गताविति सौत्रः' इत्युज्ज्वलदत्तः (पृ० ७०)। दशपादीवृत्तिकारस्तु भौवादिकं मन्यते। पुरुषकारोऽप्यत्रैवानुकूलः (दैवम् पृ० ३१)। 'भूवादेरवृत्कृतत्वात् शु इत्ययं धातुरुह्यत इति पुरुषोत्तमदेवः' इत्युज्ज्वलदत्तः (पृ० ७१)।

४. अत्राहोज्ज्वलदत्तः—'केचित् कुमुदाकारा इवासोढसूरभास इति सुबन्धुश्लेषात् दन्त्यादिरपि वीरवाचकः सूरः इति सर्वस्वे (तु० टीकासर्वस्वे भा० १, पृ० ७०) व्याख्यातम्' (पृ० ७०)।  ५. 'वीरः' इति क.।

६. 'रेखा' इति ख.।  ७. 'मीरा' इति क.।

८. 'कुप्रवप्र' इति ङ.। 'कुप्रचुप्र' इति च.।

९. 'वन्रे' इति ग.; ङ.पुस्तकपाठान्तरं च।

एते शब्दा निपात्यन्ते रन्प्रत्यये निरूढाः[1]। अर्ज सर्ज अर्जने भौ०, ऋजि भृजी भर्जने[2]। अर्जे रलोप उपधाया ऋकारादेशच निपात्यते,[3] ऋञ्जेर्नलोपोऽगुणत्वं च[4]। अर्जति ऋञ्जते[5] वा ऋज्रः—नायकः। कर्त्ता। इदि परमैश्वर्ये भौ०, इन्धी दीप्तौ रौ०। इन्धेर्दकारोऽन्त्यस्य निपात्यते[6]। [इन्दति] इन्धते इध्यते वा तेजोभिरिति[7] इन्द्रः[8]—शक्रः। कर्त्ता कर्म च। अगि गत्यर्थः। अस्य नलोपो निपात्यते। अङ्ग्यत इति अग्रम्—प्रान्तः, श्रेष्ठं च। कर्म। व्रज गतौ भौ०। अस्य रेफलोपो निपात्यते। व्रजति सर्वत्र प्ररित इति वज्रम्—पविः[9]। कर्त्ता। प्रा पूरणे अ०, पा रक्षणे अ० विपूर्वः। प्राते रेफाकारलोपो निपात्यते, पातेरालोपो निपात्यते। विविधं प्राति पाति वा दातारमिति विप्रः—ब्राह्मणः। कर्त्ता। कुवि आच्छादने। अस्य नलोपो

१. 'स्वरोऽपि केषुचिन्निपातनान्न भवति। तथाहि इन्द्रशब्दोऽन्तोदात्तोऽपि दृश्यते' इति श्वेतवनवासी (पृ० ६७, ६८)।

२. 'ऋजि भृजी भर्जने' इति नास्ति क.।

३. 'अर्जते रेफलोपो निपात्यते उपधाया ऋकारादेशच' इति क.।

४. 'अञ्जेर्नलोपः····· ऋजतेरगुणत्वं च' इति ग. पाठः। अस्माभिः प्रकरणानुसारं संशोधितः।

५. 'अर्जयते' इति ग.। 'अर्जति' इति क.।

६. 'ऋञ्जेर्नलोपोऽगुणत्वं ····निपात्यते' इति नास्ति ख.।

७. 'तेजोभिः' नास्ति क.।

८. 'इन्द्रशब्दो वृषादिः' इति सायणः (तै० सं० १।१।१ भा० १, पृ० ४६)। तस्यायमभिप्रायः—इन्द्रशब्दे 'वृषादीनां च' (अ० ६।१।२०३) इत्यनेनाद्युदात्तत्वम्। तत्स्वग्रन्थविरोधादेवोपेक्ष्यम्। तथा ह्यृग्भाष्ये (१।२।६)—"इन्द्रशब्दः 'ऋज्रेन्द्राग्र' इत्यादिना रन्प्रत्ययान्तत्वेन निपातितो 'ञ्नित्यादिर्नित्यम्' (अ० ६।१।१६७) इत्याद्युदात्तः" इत्युक्तम्। व्युत्पत्तिपक्षे निस्वादाद्युदात्तत्वम्, अव्युत्पत्तिपक्षे तु 'ग्रामादीनां च' (फिट् सू० ३८) इत्यनेन। तदुभयथाऽपि स्वरे सिद्धे वृषादिकल्पना सर्वथैवायुक्ता।

'ऋज्रेन्द्राग्रेति इन्द्रशब्द आद्युदात्तो निपातितः' इति काशिकाकारः (अ० ६।२।१४१)। एवम् 'अग्र' शब्दविषयेऽपि 'अग्रशब्द आद्युदात्तो निपातितः' (काशिका अ० ६।१।१२०) इत्युक्तवान्। तदुभयत्रापि नित्त्वादेवाद्युदात्तत्वे सिद्धे आद्युदात्तनिपातनमयुक्तम्। रक्प्रत्ययान्ता निपात्यन्ते इति तु न वक्तुं शक्यम्, क्रन्रन्भ्यां व्यवहितत्वाद् रकः।

'इन्द्रशब्दः अन्तोदात्तोऽपि दृश्यते' इति श्वेतवनवासी (पृ० ६८)। तन्मृग्यम्।

९. 'वज्रः—इन्द्रायुधम्' इति क.।

निपात्यते वश्चान्त्यस्यागुणत्वं च । कुंव्यत इति **कुब्रम्**—गृहाच्छादनम् । कर्त्ता । चुबि वक्त्रसंयोगे । अस्यागुणत्वं नलोपश्च निपात्यते[१] । चुम्बत इति **चुब्रम्**—मुखम् । कर्त्ता । क्षुर खुर विलेखने[२] तौ० । अनयो रेफलोपः[३] । क्षुरतीति **क्षुरः**—नापितशस्त्रम्[४] । कर्त्ता । खुरतीति **खुरः**—शफः । कर्त्ता । भदि कल्याणे सुखे च । अस्य नलोपो निपात्यते । भन्दत इति **भद्रम्**[५]—कल्याणम् । कर्त्ता[६] । गम्लृ गतौ भौ० उत्पूर्वः । उपसर्गान्तिलोपो गमेरन्त्यलोपश्च निपात्यते । उद्गच्छतीति **उग्रः**—क्रूरः । कर्त्ता । गॄ निगरणे तौ० उत्पूर्वः । अस्य ऋवर्णलोपो निपात्यते, उपसर्गान्त्यस्य लोपश्च । उद्गिरतीति **उग्रः**—कपटी[७] । ञिभी भये जौ० । अस्य प्रत्ययस्य वा लत्वं निपात्यते । बिभेतीति **भेरः, भेलः**—शरः, मण्डूको वा । कर्त्ता । शुभ दीप्तौ । अस्य कोऽन्तादेशो निपात्यतेऽगुणत्वं च[८] । शोभते इति **शुक्रः**[९]—कविः, दैत्यगुरुः[१०] । **शुक्रम्**—रेतश्च । 'शोकतेः[११]' इत्येके[१२] । शुभ शोभार्थे । अस्यान्त्यस्य कत्वमगुणत्वं च निपात्यते प्रत्ययस्य च लत्वम् । शोभत इति **शुक्लम्**[१३]—पाण्डुरो वर्णः[१४] । कर्त्ता । तिपृ क्षरणार्थः । अस्योपधाया दीर्घत्वं निपात्यते वश्चान्तादेशः ।

---

१. 'अस्य नलोपो वश्चान्त्यस्यागुणत्वं च निपात्यते' इति ग. ।

२. 'खुर छेदने' 'क्षुर विलेखने' इति साम्प्रतिकः पाठः ।

३. 'अगुणत्वं च निपात्यते' इत्यधिकः क.पुस्तके ।

४. 'नापितभाण्डम्' इति क. ।

५. अस्यान्तोदात्तत्वमपि निपात्यते, वेदे तथा दर्शनात् ।

६. 'भदि···कर्त्ता' इति नास्ति ग. ।   ७. 'गॄ···कपटी' इति नास्ति क. ।

८. 'निपात्यते प्रत्ययस्य च वा लत्वम्' इति ख. ग. ।

९. अयमप्यन्तोदात्त एव । यत्तु 'शुक्रस्य शोचिषस्पते' (ऋ० ५।६।५) इत्यत्राद्युदात्तत्वम्, तत्पराङ्गवदभावेन बोध्यम् ।   १०. 'असुरगुरुः' इत्येव क. ।

११. 'शुक'धातोः पाठस्त्वसार्वत्रिकः । तदाह धातुवृत्तिकृत् सायणः—'अस्यानन्तरं मैत्रेयः शुक गताविति पठित्वा शोकति शुकः शुक्रः इत्युदाजहार । अस्मिन् हि सति शुकवल्कोल्काः (द० उ० ३।२०॥ पं० उ० ३।४२) इति शुभेः कनि भलोपे शुकशब्दनिपातनमनर्थकं स्यात्, इगुपधलक्षणेन कप्रत्ययेनैव सिद्धत्वात्, तथा शुकेरन्विधानेनाऽपि शुक्रशब्दे सिद्धे ऋज्रेन्द्रादौ शुचेर्निपातनमनर्थकं स्यादित्यस्य पाठोऽनार्ष इव प्रतीयते' इति (धा० वृ० पृ० ५८) ।   १२. 'शोकतेः इत्येके' नास्ति क. ।

१३. अयमप्यन्तोदात्त एव निपात्यते ।   १४. 'पाण्डुवर्णः' इति ख. ग. ।

तिप्यत इपि तोञम्--निष्ठुरम्। कर्म। वृञ् वरणे सौ०। अस्य प्रत्ययस्य नत्वं[1] निपात्यते। वृणोति व्रियतेऽसाविति **वर्णः**—श्वेतादिगुणसंज्ञा ब्राह्मणादीनां वा सामान्यसंज्ञा। कर्त्ता कर्म च। अथवा वर्ण क्रियादौ[2] चौ०। अस्य प्रत्ययस्याकारादेशो निपात्यते। वर्णयति वर्ण्यतेऽसाविति **वर्णः**—अकारादिः। कर्त्ता कर्म च। इण् गतौ आ०। अस्यागुणत्वं च निपात्यते। एति ईयते वा **इरा**--पानजातिः। कर्त्ता कर्म च। मान पूजायां भौ०, मल मल्ल धारणे भौ०। आद्यस्य धातोर्नलोपो निपात्यते प्रत्ययस्य च लत्वम्, द्वितीयस्यो[3] पधाया दीर्घत्वं निपात्यते प्रत्ययस्य चाकारः। मान्यतेऽनया मलन्ते वा तामिति **माला**—स्रक्। करणं कर्म च॥

## कॄगॄशॄवृञ्चतिभ्यः ष्वरच्[4] ॥४७॥ ( पं० उ० २।१२४ )

एभ्यो धातुभ्यः ष्वरच्[5] प्रत्ययो भवति। कॄ विक्षेपे तौ०। किरति कीर्यते वा **कर्वरः**—व्याघ्रः, विष्टरा वा। कर्त्ता कर्म च। गॄ निगरणे तौ०, गॄ शब्दे क्र्यौ०। गिरति गृणाति वा **गर्वरः**—अहङ्कारः। **गर्वरी**—संध्या। कर्त्ता। शॄ हिंसायां क्र्यौ०। शृणाति शीर्यते वाऽस्मिन् जन इति **शर्वरः**—तमः। **शर्वरी**—रात्रिः, संध्या च। कर्त्ता अधिकरणं च[6]। वृञ् वरणे सौ०। वृणोति व्रियते वा **वर्वरः**—कामः[7]। **वर्वरी**—नदी। कर्त्ता कर्म च। चते याचने भौ०। चतन्तेऽस्मिन् भूतानीति **चत्वरम्**—चतुष्पथम्[8]। **चत्वरी**—वेदिः। अधिकरणम्॥

## नौ सदेः ॥४८॥ ( पं० उ० २।१२५ )

नावुपपदे सदेर्धातोः ष्वरच्[9]प्रत्ययो भवति। षद्लृ विशरणगत्यवसा-

---

१. 'नकारादेशः' इति क.। २. 'क्रियाविस्तारगुणवचनेषु' इति क.।

३. 'पूजायां भौ०। अस्य नलोपो निपात्यते प्रत्ययस्य च लत्वम्। अथवा मल मल्ल धारणे भौ०। अस्यो०' इति क.। ४. '०शॄपवृञ्०' इति क.।

५. 'ट्वरच्' इति क.। एवमग्रेऽपि। 'ष्ट्वरच्' इति च.।

६. इतोऽग्रे 'पॄ पा जौ०। पूर्यंत इति पर्वरः। कर्म' इत्यधिकः पाठः क.।

७. 'कचः' इति क.। ८. 'अरण्यम्' इति ख. ग.।

९. 'ट्वरच्' इति क.।

दनेषु भौ० निपूर्वः। नियतं सीदन्त्यस्मिन्निति निषद्वरः—जम्बालः[1]। **निषद्वरी**—प्रपा[2]। अधिकरणम् ॥

छित्वरछत्वरधीवरपीवरचीवरगह्वरकट्वर[3]संयद्वरोपह्वराः[4] ॥४९॥
(पं० उ० ३।१)

एते शब्दा निपात्यन्ते ष्वरच्[5]प्रत्यये निरुद्धाः। छिदिर् द्वैधीकरणे रौ०। छिनत्ते[6]स्तकारोऽन्त्यस्य निपात्यतेऽगुणत्वं च। छो छेदने दै०। अस्येत्वं[7] तुगागमश्च निपात्यते। छिनत्ति छ्यति वा **छित्वरः**—छेदकः,[8] धूर्तश्च। कर्त्ता। छद संवरणे चौ०। अस्य णिचो लुकि कृते तकारोऽन्त्यस्य निपात्यते। छादयतीति **छत्वरम्**—छादनम्। कर्त्ता। ध्वंसु गतौ। अस्य 'धी' आदेशोऽनेकाल्त्वात् सर्वस्य निपात्यते, आदेशसामर्थ्यादगुणत्वम्। ध्वंसत इति **धीवरः**—निषादजातिः। कर्त्ता। पीव स्थौल्ये। अस्य **व**लोपोऽगुणत्वं च निपात्यते। ओप्यायी वृद्धौ भौ०। अस्य पीभावोऽगुणत्वं च निपात्यते[9]। पीवति प्यायति वाऽल्पेन प्रहारेणति **पीवरः**—मांसलः। कर्त्ता। चिञ् चयने सौ०। अस्य दीर्घत्वमगुणत्वं च निपात्यते[10]। चिनोति चीयते वा तद्धर्मपरैरिति[11] **चीवरः**—मुनिजनवासः। कर्त्ता कर्म च। गुहू संवरणे भौ०। ण्यन्तः प्रकृत्यन्तरं वा। अस्य णिचि लुकि कृत उपधाया अत्वं निपात्यते। गूहते[12] गूहयति वा तांस्तानर्थानिति **गह्वरम्**—गहनम्, प्रत्यन्तदेशश्च[13]। कर्त्ता। कटी गतौ भौ०।

---

१. 'आसनम्' इति क.। 'जम्बालः, आसनं च' इति प्र० कौ० टी०।
२. 'प्रभा' इति ख. ग.। ३. 'कट्वर' इति नास्ति क.।
४. 'उपह्वर' इति नास्ति ङ.। ५. 'ट्वरच्' इति क.।
६. 'रौ०, छो छेदने दै०। छिनत्तेः' इति क.।
७. '०गुणत्वं च छ्यतेरित्वम्' इति क.। ८. 'छेदकः' नास्ति क.।
९. 'गतौ, ध्यै चिन्तायां भौ०। अनयोर्धी—आदेशो निपात्यतेऽगुणत्वं च। ध्वंसतेऽसौ सत्पथादिभिरिति ध्यायत्यशुभमिति वा धीवरः—निषादः। पीव स्थौल्ये, प्यायी वृद्धौ भौ०। पीवतेर्वकारलोपो निपात्यते, प्यायतेः पी—आदेशो निपात्यते, उभयोर्गुणाभावश्च' इति क.। १०. 'दीर्घो निपात्यतेऽगुणत्वं च' इति क.।
११. 'चिनोतीति चीवरः' इति ख. ग.।
१२. 'मुनिजननिवासः। कर्त्ता। गुहू संवरणे भौ०। अस्योपधाया अत्वं निपात्यते ण्यन्तोऽपि गूहति' इति ख. ग.। १३. 'प्रत्यन्तदेशश्च' इति नास्ति क.।

कटचत इति **कट्वरम्**—व्यञ्जनम्। कर्म[1]। यम उपरमे भौ० सम्पूर्वः। **अस्य**[2] दकारोऽन्त्यस्य निपात्यते। संयच्छतीति **संयद्वरः**—वाग्यतः। कर्त्ता। **ह्वेञ्** स्पर्धायां शब्दे च भौ० उपपूर्वः। अस्याकारवकारलोपो[3] निपात्यते। उपहूयत इति **उपह्वरम्**—रहस्य[4], सन्धिश्च। कर्म॥[5]

## अशेः सरन्[6] ॥५०॥ ( पं० उ० ३।६७ )

अशेर्धातोः सरन्[6] प्रत्ययो भवति। अशूङ् व्याप्तौ सौ०, अश भोजने क्र०। अश्नुते अश्नाति वा **अक्षरम्**[7]—वर्णः, मोक्षपदं च। कर्त्ता॥

---

१. 'कटी……कर्म' इति नास्ति क.। २. 'भौ०। अस्य सम्पूर्वस्य' इति क.।

३. 'भौ०। अस्योपपूर्वस्याकारवकारलोपो' इति क.।

४. 'रहस्यम्' नास्ति क.।

५. इतोऽग्रे '**उणादयो बहुलम्** (अ० ३।३।१) इति बहुलाधिकारादन्येऽपि निपात्यन्ते ट्वरच्प्रत्यये। कटी गतौ भौ०। कटचत इति कट्वरम्—व्यञ्जनम्। कर्म। एवमन्येऽपि' इत्यधिकः क.पुस्तके।

६. अत्राह प्रौढमनोरमाकारः—"उज्ज्वलदत्तादयस्तु '**अशेः सरन्**' इति पेठुः। तन्न। नित्स्वरापत्तेः। इष्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम्। '**ऋचो अक्षरे परमे व्योमन्**' (ऋ० १।१६४।३९) '**अक्षरेण मिमते सप्तवाणी**' (ऋ० १।१६४।२४) इत्याद्यृङ्मन्त्रेषु, '**त्रीणि च शतानि षष्टिश्चाक्षराणि**' इति यजुषि च तथैव पाठात्। **अत एव द्वितीयाह्निकान्ते** '**अश्नोतेर्वा सरोऽक्षरम्**' इति (लण्सूत्रे) भाष्यकृतोक्तम्" इति (मनो० पृ० ७७९)। तत्त्वबोधिनीकारोऽप्येवम् (पृ० ५४१)।

यदत्र भट्टोजिदीक्षितेनाक्षरशब्दस्य मध्योदात्तत्वमुक्तं तदिष्टमेव वेदे तथा दर्शनात्। परं 'सरः' इति पाठे या भाष्यसम्मतिरुक्ता सा चिन्त्यैव। यतो हि तत्रैव भाष्ये वार्त्तिकव्याख्यानावसरे '**अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः**' इत्युक्तम्। व्याख्यातं च कैयटेन '**सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणं सर इति**' (प्रदीपे पृ० १३१ मु० सं०)। तस्माद् भाष्यकारमतेऽपि '**सरन्**' इत्येव पाठ इति सिद्धम्। तथा पाठे स्वरस्तु बाहुलकाद् बोध्यः।

भाष्यकारस्त्वन्यथाप्यक्षरशब्दं निरवोचत्। तथा हि '**अक्षरं न क्षरं विद्यात्। न क्षीयते न क्षरतीति वा**' इति (लण्सूत्रे)।

'**अक्षरं न क्षरति न क्षीयते वा**' इति यास्कः (निरु० १३।१२)।

७. "**वेदे पुनरक्षरशब्द उदकेऽपि वर्तते उणादयो बहुलमित्यत्र छात्रमित्रः**" इत्युज्ज्वलदत्तः (पृ० १२०)। द्र०—निघ० १।१२॥

## वसेश्च ॥५१॥ ( पं० उ० ३।६८ )

वसेः सरन् प्रत्ययो भवति । वस निवासे भौ०। वसन्त्यस्मिन् ग्रहनक्षत्र-र्तुदेवता इति **वत्सरः**—अब्दः[1] । अधिकरणम् ॥

## सपूर्वाच्चित्[2] ॥५२॥ (पं० उ० ३।६९)

सह पूर्वेण वर्तत इति सपूर्वः । तस्मात्[3] सपूर्वाद्[2] [वस] धातोः सरन् प्रत्ययो भवति चित्संज्ञकः । वस निवासे भौ० सम्पूर्वः । समेत्य वसन्त्यस्मिन् क्षणलवमुहूर्त्ताहोरात्रपक्षमासा इति[4] **संवत्सरः**। एवं **परिवत्सरः**, **विवत्सरः**,[5] **इद्वत्सरः**,[6] **इदावत्सरः**[7]। इद्वत्सरो[8]ऽयनद्वयविषयः,[9] अहोरात्रो देवानाम् । अधिकरणम् ॥

## कृधूमदिभ्यः कित् ॥५३॥ ( पं० उ० ३।७० )

एभ्यः सरन् प्रत्ययो भवति किच्च । डुकृञ् करणे ता०। क्रियत इति **कृसरः**—अन्नम् । कर्म । धूञ् कम्पने सौ०, क्र्० । धुनोति धुनाति धूयते वा **धूसरः**—वायुः,[10] **धूसरम्**—मलिनं च । कर्त्ता कर्म च । मदी हर्षे दै० । माद्यत्यसौ[11] परव्यसनेष्विति **मत्सरः**—ईर्ष्या । कर्त्ता । बाहुलकात् षत्वं न भवति[12] ॥

---

१. 'कालपरिमाणम्' इति क. ।

२. 'सम्पूर्वात्' इति ग. ङ. । 'संपरिपूर्वाच्चित्' इति टीकासर्वस्वकारः (भा० १, पृ० ८९) । ३. 'सह पूर्वेण······तस्मात्' इति नास्ति क. ।

४. '०रात्रमासं त्वयनानीति' इति क. । ५. नास्ति ख. ग. ।

६. 'उद्वत्सरः' इति ग. । ७. अत्र यजुः ३०।१५; काण्व ३४।१५ द्रष्टव्यः ।

८. अयं नास्ति क. ।

९. 'परिवत्सरादीन्यपि वर्षविशेषाभिधानानीत्येके' इति हेमचन्द्रः (हैमोणा० वृ० पृ० ७८) ।

संवत्सराद्यः पञ्च युगमित्यभिधीयते ।
संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
इद्वत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः ॥
पंचमो वत्सरस्तेषां कालस्तु परिसम्मितः । (वायुपु० ५०।१८२;१८३)।

१०. 'वास्नु' इति ख. । 'बास्नुः' इति ग. । ११. 'माद्यतेऽसौ' इति ख. ग. ।

१२. 'बाहुलकात्······भवति' इति नास्ति ख. ग. । षत्वाभावः कृसरे धूसरे च बोध्यः ।

## पतेरश्च लः[1] ॥५४॥ ( पं० उ० ३।७१ )

पतेर्धातोः सरन् प्रत्ययो भवति प्रत्ययरेफस्य च लकारः। पत्लृ गतौ भ्वा०। पततीति **पत्सलः**—तोयधारा[2]। कर्त्ता॥

## तन्यृषिभ्यां क्सरन् ॥५५॥ (पं० उ० ३।७२)

आभ्यां क्सरन्[3] प्रत्ययो भवति। तनु विस्तारे ता०। तनोति तन्यते वा **तसरः**—तन्तुभाण्डं कुविदभाण्डं वा[4]। कर्त्ता कर्म च। ऋषी गतौ तौ०। ऋषतीति **ऋक्षरा**—तोयधारा, कुविदभाण्डम्[5]। कर्त्ता॥

## अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥५६॥ ( पं० उ० ३।९८ )

एभ्योऽत्रन् प्रत्ययो भवति। अम गत्यादौ भ्वा०। अमत्यस्मिन्नन्नपानमिति **अमत्रम्**—भाजनम्। अधिकरणम्। णक्ष[6] गतौ। नक्षत्रीति **नक्षत्रम्**[7]—ज्योतिः। कर्त्ता। यज देवपूजनादौ भ्वा०। इज्यतेऽस्मिन् देवता इति **यजत्रम्**—यज्ञस्थानम्[8]। अधिकरणम्। हन हिंसागत्योः अ०। 'बहुलमन्य-

---

१. 'लो वा' इति ङ.। पञ्चपाद्यामपि क्वचित्।

२. 'तोयाधारः' इति ग.। 'प्रहारः' इति क.। 'पादप्रहारः' इति प्र० कौ० टी० (भा० २, पृ० ६३५)।

३. प्रत्ययस्य कित्त्वात् तसर इत्यत्रानुनासिकलोपः।

अत्राह श्वेतवनवासी—"कित्त्वादनुनासिकलोपः। अनुनासिकलोपे 'अतो लोपः' (अ० ६।४।४८) इति न भवति, अतो लोपेऽनुनासिकलोपस्य 'असिद्धवदत्राभात्' (अ० ६।४।२२) इत्यसिद्धत्वात्। आर्धधातुकोपदेशे यदकारान्तस्तस्य लोप इति विज्ञानाद्वा" इति (पृ० ११६)।

अत्र सूत्रे 'क्सरन्' इति पदं शक्यमकर्तुम्। 'कृधूमदिभ्यः कित्' (द० उ० ८।५३) इत्यतः किद्विशिष्टस्य सरनोऽनुवृत्तेः। उज्ज्वलदत्तस्तु—'कृधूमदिभ्यः कित् (द० उ० ८।५३ पं० उ० ३।७०) इत्यत्र न ऋषिकृतं वैचित्र्यार्थम्' इत्याह (पृ० १२१)।

४. 'च' इति ग.। 'कुविन्दभाण्डम्' इति क.।

५. 'कुविदभाण्डम्' इति नास्ति क. ख.। ७. 'नक्ष' इति ख. ग.।

६. "नभ्राणनपान्नवेदा (अ० ६।३।७५) इत्यपि व्युत्पत्त्यन्तरम्" इत्युज्ज्वलदत्तः (पृ० १२९)। अत्राह हेमचन्द्रः—'तत्र त्वस्य निपातनं नाम्नां व्युत्पत्तेरव्यवस्थेति ज्ञापनार्थम्' इति (हेमधातु० पृ० ७०)। ८. 'अग्निहोत्रम्' इति क.।

त्रापि' [द० उ० ८।४०] इति वचनाद्[1] वधादेशः । हन्यते[2]ऽनेनेति वधत्रम्—शस्त्रम्, विषं च । करणम् । पत्लृ पतने भ्वा० । पतन्त्यनेनेति पतत्रम्—वाहनम् । करणम् ॥

## गडेरादेश्च कः ॥५७॥ ( पं० उ० ३।९९ )

गडेर्धातोरत्रन् प्रत्ययो भवति, आदेश्च कः[3] । गड सेचने भ्वा०[4] । स्नेहेन गडतीति कडत्रम्[5]—दाराः । कर्त्ता ॥

## वृञश्चित् ॥५८॥ (पं० उ० ३।१००)

वृञो धातोरत्रन् प्रत्ययो भवति चित्सञ्ज्ञकः । वृञ् वरण स्वा० । वृणोति व्रियते वा वरत्रा—चर्मरज्जुः । कर्त्ता कर्म च ॥

## सौ विदेः[6] कत्रन् ॥५९॥ (पं० उ० ३।१०१)

सावुपपदे[7] विदेर्धातोः कत्रन् प्रत्ययो भवति । विद ज्ञाने अ०, विद सत्तायां दि०, विद्लृ लाभे तु० [सुपूर्वः] । शोभनं वेत्ति[8] विद्यते विन्दतीति वा सुविदत्रम्—कुटुम्बम् । कर्त्ता ॥

## कृतेर्नुम्[9] च ॥६०॥ (पं० उ० ३।१०२)

कृतेर्धातोः कत्रन् प्रत्ययो भवति नुम्[9] चागमः । कृती छेदने तु०, कृती वेष्टने रु०। कृन्तति कृणत्तीति वा कृन्तत्रम्[10]—छेदनम्, वेष्टनम्, भाण्डम्[11] । कर्त्ता ॥

---

१. 'अ० । बाहुलकाद्' इति ख. ग. ।

२. 'हन्यते भोग' इति ग. । 'हन्ति' इति क. ।

३. 'ककारः' इति क. । 'कादेशः' इति ख. ।

४. 'ण्यन्तः' इत्यधिकः क.पुस्तके ।

५. 'डलयोरभेदात् कलत्रम्' इति प्र० कौ० टी० (भा० २, पृ० ६३५) । एवमुज्ज्वलदत्तोऽपि (पृ० १२९) । ६. 'सुञि विदेः' इति क. । 'सुविदेः' इति च. ।

७. 'सुञ्युपपदे' इति क. । ८. 'सुञ्पूर्वः । शोभनं सुष्ठु वा वेत्ति' इति क. ।

९. 'नुट्' इति क. । १०. 'छेदने । कृन्ततीति कृन्तत्रम्' इति ख. ग. ।

११. 'वेष्टनं च, कर्मभाण्डी' इति क. । 'कर्मलाभः' इति श्वेतवनवासी (पृ० १२३) । 'छेदनवेष्टनभाण्डम्' इति ग. ।

## ऋच्छेररन्[1] ॥६१॥ (पं० उ० ३।१२६)

ऋच्छेररन्[1] प्रत्ययो भवति। ऋच्छ गत्यादौ तौ०। ऋच्छतीति **ऋच्छरा**—इन्द्रियप्रलयः[2]। कर्त्ता॥

## अर्त्तिकमिभ्रमिदेविवाशिभ्यश्चित् ॥६२॥ (पं० उ० ३।१२७)

एभ्योऽरन्प्रत्ययो भवति चित्संज्ञकः। ऋ गतौ भौ०। ऋच्छत्यर्यते वा **अररः**—रणः[3]। कर्त्ता कर्म च। कमु कान्तौ भौ०। काम्यतेऽसाविति **कमरः**—कोमलः[4], बालः। कर्त्ता[5]। भ्रमु अनवस्थाने दै०, भ्रमु चलने भौ०। भ्राम्यति भ्रमतीति वा[6] **भ्रमरः**—शिलीमुखः। कर्त्ता। देवृ देवने भौ०। देवत इति **देवरः**—पतिभ्राता कनीयान्[7]। कर्त्ता। वाशृ शब्दे। वाश्यत इति **वाशरः**[8]—कोकिलः। कर्त्ता॥

---

१. पञ्चपाद्यां 'अरः' इति पाठः। अत्राहोज्ज्वलदत्तः—'**अरन्निति प्रमादः इति पारायणीयम्**' इति (पृ० १३५)। युक्तं चैतत्—'**ऋच्छरा ये च ते शफाः**' (अ० १०।६।२३) इति मन्त्रे '**ऋच्छराः**' पदस्य मध्योदात्तत्वदर्शनात्। 'अर'प्रत्यये प्रत्ययस्वरेण मध्योदात्तत्वं सिद्ध्यति, अरन्प्रत्यये नित्त्वादाद्युदात्तत्वं प्राप्नोति। तस्माद् '**अरः**' इत्येव पाठो ज्यायान्।

२. 'त्वरा' इति क.। 'इन्द्रियं प्रलयः' इति प्र० कौ० टी० पाठान्तरम्।

३. 'रणं द्वारं च' इति क.। ४. 'कोमलम्' इति क.।

५. 'कर्त्ता' नास्ति क.। ६. '०स्थाने दै०। भ्राम्यतीति' इत्येव ख. ग.।

७. 'कनीयान्' नास्ति क.।

अत्राह निरुक्तकारः—'**देवरः कस्माद् द्वितीयो वर उच्यते**' (निरु० ३।१५)। यद्यपि देवरशब्दो लोके पत्युः कनीयसि भ्रातरि प्रसिद्धस्तथापि निरुक्तकृदुक्त एव मूलार्थः। अन्यथा—

'**कौसल्ये देवरस्तेऽस्ति सोऽद्य त्वाऽनुप्रवेक्ष्यति**'। (महाभारत आदि० १०६।२)। इति सत्यवतीवचनमसङ्गतं स्यात्। सत्यवत्या हि व्यासो विचित्रवीर्यस्य भार्यासु नियोगधर्मेण नियुक्तः। व्यासो हि विचित्रवीर्यस्य ज्येष्ठो भ्राता इति सर्वलोकप्रसिद्धम्। एवमन्यत्रापि देवरशब्दस्यैतादृशो व्यवहारो दृश्यते।

८. अत्राह मनोरमाकारः—'**केचित्तु सूत्रे वाशिभ्य इति तालव्यं पठित्वा वाशृ शब्दे वाश्यते वाशरः कोकिल इत्याहुः**' इति (मनो० पृ० ७८४। द्र० तत्त्व० पृ० ५४४)।

बाहुलकात्—चमु अदने भौ०। चमतीति **चमरः**—श्वापदविशेषः[1]। कर्त्ता। वासृ शब्दे भौ० ण्यन्तः। वासयतीति **वासरः**—दिवसः। कर्त्ता। एवमन्येऽपि[2]॥

## कुवः क्ररन्[3] ॥६३॥ (पं० उ० ३।१२८)

कु इत्येतस्मात्[4] क्ररन्[5] प्रत्ययो भवति। कुङ् शब्दे भौ०, कु शब्दे अ०। कवते कौति वा **कुररः**—पक्षी। कर्त्ता॥

## अङ्गिमदिमन्दिभ्य आरन्[5] ॥६४॥ (पं० उ० ३।१२९)

एभ्य आरन् प्रत्ययो भवति। अगि गत्यर्थः भौ०। अङ्ग्यतेऽसौ सुवर्णकारादिभि[6]रिति **अङ्गारः**—दग्धकाष्ठम्[7], भौमश्च[8]। कर्म। मदी हर्षे। माद्यतीति **मदारः**—पानशौण्डः। कर्त्ता। मदि स्तुत्याद्यौ भौ०। मन्दतेऽनेनेति **मन्दारः**—देवकुसुमम्। करणम्॥

## गडेः कड[9] च ॥६५॥ (पं० उ० ३।१३०)

गडेर्धातोरारन् प्रत्ययो भवति कड[9] इत्ययं चादेशः। गड सेचने भौ०। गडति गड्यते या तदिति[10] **कडारः**—पिङ्गलः। कर्त्ता कर्म च॥

## भृङ्गारभृङ्गारौ ॥६६॥ (पं० उ० ३।१३१)

---

१. 'श्वापदः' इति क.।　　२. 'एवमन्येऽपि' नास्ति क.।

३. 'क्ररच्' इति उज्ज्वलदत्तः। प्रत्ययस्य चित्त्वे नित्त्वे वा स्वरभेदः स्पष्ट एव। श्वेतवनवासिवृत्तौ 'कुवन्' इति पाठो मुद्रितः। B पुस्तकस्य 'क्ररन्' इति शुद्धं पाठमुपेक्ष्य कथं 'कुरर'प्रयोगसिद्धिः कृता सम्पादकेनेति न विज्ञायते।

४. 'कुवः' इति क.।　　५. '०भ्यश्चारन्' इति च.।

६. 'सुवर्णकारादिभिः' इति नास्ति क.।　　७. 'दग्धेन्धनम्' इति क.।

८. 'मङ्गलग्रहः' इत्यर्थः। स हि अङ्गारसदृशवर्ण इति कृत्वा 'अङ्गार'पदेनाभिधीयते। 'भौमश्च' इति नास्ति क.।

९. नारायणश्वेतवनवासिनौ 'कट' आदेशं विधत्तः।

"कटे वर्षावरणयोरित्यत आदेशविधानमन्तरेणापि सिद्धे आदेशविधानमनर्थकम्। केचित् 'गडेः कड च' इति सूत्रं पठन्ति। गडेरारन्प्रत्ययः कडादेशश्च। कडारः वर्णविशेष इति वर्णयन्ति उभयमपि ग्राह्यम्" इति श्वेतवनवासी (पृ० १३१)।

१०. 'तदिति' नास्ति क.।

एतौ शब्दौ निपात्येते आरन्प्रत्यये निरुद्धौ। श्रिञ् सेवायां भ्वा०। अस्य 'शृ' आदेशो गुणाभावो नुग्गुकौ चागमौ निपात्येते। श्रयति सौभाग्यं, श्रीयते वा विद्वद्भिरिति **शृङ्गारः**—प्रथमरसः[1], विदग्धता वा[2]। कर्त्ता कर्म च। अथवा शृणातेर्ह्रस्वत्वं गुणाभावो[3] नुग्गुकौ चागमौ निपात्येते। शृणाति माधुर्येण श्रोत्रमनांसीति[4] **शृङ्गारः**—कामाश्रयसम्बन्धः सुकुमाराभिधान[5]-काव्यविशेषः, प्रधानशोभने दत्तार्थश्च। कर्त्ता[6]। डुभृञ् धारणपोषणयोः जौ०। अस्यागुणत्वं नुग्गुकौ चागमौ निपात्येते[7]। बिभर्त्ति उदकं भ्रियते वा मङ्गलार्थिभिरिति **भृङ्गारः**—उदककलशः। कर्त्ता कर्म च॥

## कञ्जिमृजिभ्यां चित् ॥६७॥ (पं० उ० ३।१३२)

आभ्यां धातुभ्यामारन् प्रत्ययो भवति चित्संज्ञकः। कञ्जि सौत्रो धातुः[8]। कञ्जति कज्यते[9] वा **कञ्जारः**—कुशूलजातिः[10], व्यञ्जन वा। कर्त्ता कर्म च। मृजूष् शुद्धौ अ०। मार्ष्टि भवनामिति **मार्जारः**—ओतुः[11] कर्त्ता॥

## कमेः किदुच्चोपधायाः[12] ॥६८॥ (पं० उ० ३।१३३)

कमेर्धातोरारन् प्रत्ययो भवति किच्च, उच्चोपधायाः। कमु कान्तौ भ्वा०। काम्यत इति **कुमारः**—महासेनः, बालो वा। कर्म॥

---

१. 'रसः' इत्येव क.।

२. 'विदग्धता वा' इति नास्ति क.। ३. 'अगुणत्वम्' इति क.।

४. 'श्रोत्रानिति' इति ग.। ५. '०भिधानम्, काव्य०' इति ख.।

६. 'सुकुमारा..... कर्त्ता' इति नास्ति क.। ७ 'निपात्येते' नास्ति क.।

८. 'कजि खजि वैक्लव्ये' भ्वादौ। तस्येदित्त्वात् कज्यत इत्यत्रानुनासिकलोपो न प्राप्नोतीत्यत आह। ९. 'कञ्जते' इति ग.। 'कञ्ज्यते' इति ख.।

१०. 'कुसूल०' इति क. ख.। ११. 'बिडालः' इति क.।

१२. सूत्रमिदं नास्ति ज.। 'कमेरुच्चोपधायाः' इति ङ.। नारायणश्वेतवनवासि-टीकासर्वस्वकारादयोऽपीत्थमेव पेठुः। (ना० ८०। श्वे० १३२। टी० स० भा० १; पृ० ३१)। अयमेव च युक्तः पाठः। किद्विधानमनर्थकम्, उत्वविधानसामर्थ्यादेव गुणो न भविष्यति। अन्यथा प्रक्रियालाघवाय 'ओच्च' इत्येव ब्रूयात्। कुमारशब्दस्यान्तो-दात्तत्वदर्शनात् पूर्वसूत्रात् चिदित्यनुवर्तनीयम्।

**अत्राह श्वेतवनवासी—"कुमार क्रीडायामिति चौरादिकः, अस्मात् पचाद्यचि कुमारः। तथा च 'कुमारशब्दोऽन्तोदात्तः' इति वृत्तावुक्तम् (का० वृ० पृ० ५४४)। सर्वथाऽन्तोदात्तत्वादारन्प्रत्ययपक्षेऽपि चिद्ग्रहणमनुवर्त्यम्"** इति (पृ० १३२)। एव-मुज्ज्वलवृत्तावपि (पृ० १३७)।

## तुषारादयश्च ॥६९॥ ( पं० उ० ३।१३४ )

तुषारादयः शब्दा निपात्यन्ते आरन्प्रत्यये निरुद्धाः[1]। तुष प्रीतौ दै०। अस्यागुणत्वं निपात्यते। तुष्यन्त्यस्मिन् प्राणिन[2] इति **तुषारः**—तुहिनम्[3]। अधिकरणम्। कस गतौ भौ०। कसति तस्मादिति **कसारः**—हिंस्रः। अपादानम्। अस्यैवोपधाया दीर्घत्वं निपात्यते। **कासारः**—सरः[4], तेजनविशेषः[5]। एवमन्येऽपि॥

## शिरः[6] करन्[7] ॥७०॥ (पं० उ० ४।३)

शॄ इत्येतस्माद् धातोः करन्[7] प्रत्ययो भवति। शॄ हिंसायां क्र्०। शृणाति पित्तं पादौ वा[8] **शर्करा**—गुडविकारः, शिलाचूर्णं च। कर्त्ता॥

## पुषः[9] कित् ॥७१॥ ( पं० उ० ४।४ )

पुषेर्धातोः करन् प्रत्ययो भवति किच्च। पुष पुष्टौ भौ०, दै०, क्र्०। पोषति पुष्यति पुष्णाति वा **पुष्करम्**[10]—पद्मम्, तीर्थं च। कर्त्ता॥

## कॄशॄगॄ[11]पूकटिपटिशौटिभ्य ईरन् ॥७२॥ ( पं० उ० ४।३१ )

एभ्य ईरन् प्रत्ययो भवति। कॄ विक्षेपे तौ०। कीर्यते इति **करीरम्**—वृक्षः। कर्म। शॄ हिंसायां क्र्०। शीर्यत इति **शरीरम्**—देहः। कर्म। गॄ निगरणे। गीर्यत इति **गरीरम्**—अन्नम्। कर्म[12]। पूञ् पवने क्र्०। पुनातीति **पवीरम्**—पवित्रम्। कर्त्ता। कटी गतौ भौ०। कटचतेऽसौ[13] **कटीरः**—जन-

---

१. 'शब्दा आरन्प्रत्ययान्ता निपात्यन्ते' इति ख.।

२. 'शिशिरिताः प्राणिनः' इति क.। ३. 'हिमम्' इति ख.।

४. 'सरः' इति नास्ति ख.। ५. 'अस्यैव……विशेषः' इति नास्ति क.।

६. 'शृणातेः' इति ङ. च। पञ्चपाद्यां 'श्रः' इति पाठः, स च युक्तः।

७. उत्तरसूत्रे (द० उ० ८।७१) कित्त्वविधानादत्र ककारस्येत्संज्ञा न भवति।

८. 'चित्तमिति' इति ख. ग.। ९. 'पुषेः' इति क. च.।

१०. "कराग्रं करिणां व्योम कुशेशयमसेः फलम्।
आननं चानकादीनां ब्रुवते पुष्करं बुधाः॥"

इति नारायणश्वेतवनवासिभ्यामुद्धृतः श्लोकः। (नारा० पृ० ८५ श्वेत० पृ० १३९)।

११. 'गॄ' इति नास्ति क. ङ.। १२. 'गॄ निगरणे……कर्म' नास्ति क.।

१३. 'तदिति' ख.। 'इति' इति क.।

पदः। कर्म। पट गतौ भौ०। पटचत इति **पटीरम्**—कार्मुकम्। कर्म। शौटृ गर्वे भौ०। शौटतीति **शौटीरः**—वीरः[1]। कर्त्ता॥

## वशेः कित् ॥७३॥ ( पं० उ० ४।३२)

वशेरीरन् प्रत्ययो भवति किच्च। वश कान्तौ आ०। उश्यते तदिति **उशीरम्**—नलदः[2]। कर्म॥

बहुलवचनात् कुटतीति **कुटीरम्**—आलयः। कर्त्ता॥

## कशेर्मुट् च ॥७४॥ ( पं० उ० ४।३३ )

कशेर्धातोरीरन् प्रत्ययो भवति[3] मुट् चागमः। कश इति सौत्रो धातुः। कशतीति **कश्मीरः**[4]—जनपदः। कर्त्ता॥

## कृञ उच्च ॥७५॥ ( पं० उ० ४।३४ )

कृञो धातोरीरन् प्रत्ययो भवति[3] उच्चास्य। डुकृञ् करणे ता०। क्रियते तदिति **कुरीरम्**—मैथुनम्, वेश्म वा। कर्म॥

## घसेः किच्च[5] ॥७६॥ ( पं० उ० ४।३५ )

---

१. 'धीरः' इति क.। २. 'गन्धद्रव्यम्' इति क.।

३. 'किच्च' इत्यधिकं ग.। अत्र कित्कार्यस्याभावादुत्तरत्र (द० उ० ८।७६) च कित्त्वविधानादनर्थकं प्रतिभाति, विशेषस्तूपरिष्टाद् द्रष्टव्यः।

४. 'कशस्तीति कश्मीराः' इति क.। 'कश्मीरम्' इति ख.।

५. 'कित्' इति ङ. ज.। 'घसेः शित् किच्च' इति च.।

अत्रायं विशेषः—क्षीरशब्दो वेदे अन्तोदात्त उपलभ्यते, प्रत्ययस्य नित्त्वादाद्युदात्तत्वं प्राप्नोति। तदर्थम् 'घसेः किच्च' इत्येवं सूत्रपाठो द्रष्टव्यः। चकारात् पूर्वसूत्रात् (द० उ० ८।७३) कित्त्वमनुवर्त्तनीयम् (द्र०—द० उ० वृ० ८।७४, ७५ ग. पाठः पृ० ३३७, श्वे० वृ० पृ० १४६)। अस्मत्सूत्रपाठकल्पने न केवलमन्तोदात्तत्वमेव हेतुः, अपि तु क्वचित् तथाविधः पाठोऽप्युपलभ्यते। तथाहि—नारायणवृत्तौ 'चिच्च' इति P. पाठः, 'चिश्च' इति G.D. पाठः (पृ० ६०); श्वेतवनवासिवृत्तौ 'चिच्च' इति B. पाठः। 'घसेरीरः किच्च, पिच्च स्यात्' इति नारायणवृत्तौ मुद्रितः पाठः (पृ० ६०), '......भवति किश्च चकारात् किच्च' इति श्वेतवनवासिवृत्तौ मुद्रितः पाठः (पृ० १४६)। उभयत्र 'पिच्च' 'किश्च' इत्येताभ्यां किं विधीयते इति तु न ज्ञायते। अहो सम्पादकस्य दुःसोढः प्रमादः।

घसेर्धातोरीरन् प्रत्ययो भवति किच्च[1]। अद भक्षणे अ०। बाहुलकत्वाद् घस्लादेशः, कित्त्वाद् "गमहन" [अ० ६।४।९८] इत्युपधालोपः, जश्त्वचर्त्वे, तथा 'शासिवसिघसीनां च' [अ० ८।३।६०] इति षत्वे कृते रूपम्[2]। अदन्ति तदिति **क्षीरम्**—पयः। कर्म ॥

## गभीरगम्भीरौ ॥७७॥ ( पं० उ० ४।३६ )

एतौ शब्दौ निपात्येते ईरन्प्रत्यये निरुद्धौ[3]। गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च भ्वा०। अस्य ह्रस्वत्वं निपात्यते भश्चान्त्यस्य नुम् च वा। गाधत इति **गभीरं, गम्भीरम्**—निम्नजलम्। कर्त्ता[4]। नास्य गाधो विद्यते इति **गभीरः, गम्भीरः**—अगाधः, अचपलः। भावः[5] ॥

बाहुलकात् कटयत इति **कटीरम्**[6]—हरीतकी। कर्म ॥

## चतेरुरन् ॥७८॥ ( पं० उ० ५।६१ )

चतेर्धातोरुरन् प्रत्ययो भवति। चते याचने भ्वा०। चतन्त इति **चत्वारः**—संख्या[7]। कर्त्ता॥

## ष्ट्रन्[8] ॥७९॥ ( पं० उ० ४।१६५ )

---

१. 'शिद्वा किद्वा' इति ग.।

२. 'कित्त्वाद्····· कृते रूपम्' इति नास्ति ख. ग.।

३. 'निरुद्धौ' नास्ति ख. ग.। ४. 'गाधते······कर्त्ता' इति नस्ति क.।

५. 'कर्त्ता' इति क.। 'नास्य गाधः······भावः' इति नास्ति ख.।

६. 'कडि मदे भ्वा०। कड्यत इति कडीरम्' इति क.।

७. 'चतत इति चतुरः—पटुर्जनः' इति ख. म.। अयमपपाठः, पूर्वत्र (द० उ० ८।२१) सिद्धत्वात्।

प्रसादकारस्त्वाह—"बाहुलकाद् 'अकारस्य' इत्संज्ञाऽपि, चत्वारः" इति (प्र० कौ० टी० भा० २, पृ० ६३७)।

८. अत्राह भट्टोजिदीक्षितः—"दशपाद्यां तु 'ष्ट्रन्' इत्येव सूत्रम्। अत एवाधिकं प्रक्षिप्तमित्याहुः" इति (मनो० पृ० ८००)। तत्त्वबोधिनीकारोऽप्येवम् (तत्त्व० पृ० ५५५)।

उज्ज्वलदत्तोऽपि—'ष्ट्रन् इत्येतावदेव सूत्रं सर्वधातुग्रहणमपारायणीयमिति हट्टचन्द्रः' इत्याह (पृ० १८७)।

नारायणश्वेतवनवासिनावपि 'ष्ट्रन्' इत्येवाधीयाते (नारा० पृ० ११४ श्वेत० पृ० १८४)।

सर्वधातुभ्यः ष्ट्रन् प्रत्ययो भवति। छद अपवारणे चौ०। छाद्यते[1]ऽनेनेति[2] **छत्रम्**—आतपत्रम्। करणम्। वस आच्छादने आ०। वस्ते शरीरमिति **वस्त्रम्**—वासः। कर्त्ता। पत्लृ गतौ भौ०। पतत्यनेनेति **पत्रम्**—यानम्[3]। करणम्। राजृ दीप्तौ भौ०। राजत इति **राष्ट्रम्**—जनपदसन्निवेशः[4]। कर्त्ता॥

## भ्रस्जिगमिनमिहनिविष्यशां वृद्धिश्च ॥८०॥ ( पं० उ० ४।१६६ )

एभ्यः ष्ट्रन् प्रत्ययो भवति वृद्धिश्चैषाम्। भ्रस्ज पाके तौ०। भृज्जन्ति तन्निमित्तमिति[5] **भ्राष्ट्रम्**[6]—अम्बरीषम्। अधिकरणम्। गम्लृ गतौ भौ०। गच्छतीति **गात्रम्**[7]—वपुर्मनश्च[8]। कर्त्ता। णमु प्रह्वत्वे शब्दे च भौ०। नमति नम्यते वा **नात्रम्**[7]—शिरः। कर्त्ता कर्म च। हन हिंसागत्योः आ०। हन्तीति **हात्रम्**[7]—रक्षः, वधश्च[9]। कर्त्ता। विष्लृ व्याप्तौ जौ०। वेवेष्टीति **वैष्ट्रः**—विष्णुः, वायुश्च। कर्त्ता। अशूङ् व्याप्तौ सौ०, अश भोजने क्र्०। अश्नुते अश्नाति वा **आष्ट्रम्**—आकाशः, बहुभुक् च[10]। कर्त्ता॥

## दिवेर्द्युु[11] च ॥८१॥ ( पं० उ० ४।१६७ )

दिवेर्धातोः ष्ट्रन् प्रत्ययो भवति द्यु श्चादेशः[12], वृद्धिश्च भवति। दिवु क्रीडादिषु दै०। दीव्यन्ति तस्मिन् सुकृतिन इति **द्यौत्रम्**—त्रिदिवम्[13], वि-

---

**'ष्ट्रन्प्रत्ययान्तं क्वचिदन्तोदात्तं स्वरव्यत्ययस्याभ्युपगमात्'** इति श्वेतवनवासी (पृ० १८४)। १. 'छादयति' इति ग.।

२. 'अनेन आतप इति' इति क.। ३. 'वाहनम्' इति ग.।

४. 'जनपदवेशः' इति ख.। 'जनपदनिवासः' इति ग.।

५. 'तस्मिन्निति' इति क.।

६. अत्राहोज्ज्वलदत्तः—'भ्रस्जोरोपधयोः (अ० ६।४।४७) इति रम् त्वत्र नास्ति संज्ञाया नियतवर्णत्वात्' इति (पृ० १८७)।

७. पञ्चपाद्याः सर्वास्वपि वृत्तिषु 'गान्त्रम्, हान्त्रम्, नान्त्रम्' इत्यादीनि पदान्युदाहृतानि। दशपादीवृत्तिकारेण प्रसादकारेण च गात्रादिषु कथमनुनासिकलोपः कृत इति न ज्ञायते। बाहुलकादेव कथञ्चित् सम्भवति।

८. 'मनः' इत्येव क.। ९. 'वधश्च' नास्ति क.।

१०. 'बहुभुक् च' नास्ति क.। ११. 'द्यू' इति ग.।

१२. 'द्यू च' इति ग.। 'द्युश्चास्यादेशः' इति क.। १३. 'त्रिदिवः' इति क.।

मानं वा[1]। अधिकरणम् ॥

## उषिखनिभ्यां कित् ॥८२॥ ( पं० उ० ४।१६८ )

आभ्यां धातुभ्यां ष्ट्रन् प्रत्ययो भवति किच्च। उष दाहे भ्वा०। ओषति वनस्पतीनिति **उष्ट्रः**—तिर्यग्जातिः। कर्त्ता। खनु अवदारणे भ्वा०। खन्यते तदिति **खात्रम्**—तडाकम्[2]। कर्म। "**जनसनखनां सञ्झलोः**" [अ० ६।४।४२] इत्यात्वम्[3] ॥

## षिवि[4]मुच्योष्टेरू च ॥८३॥ ( पं० उ० ४।१६९ )

आभ्यां ष्ट्रन् प्रत्ययो भवति टेश्च ऊकारादेशः। षिवु तन्तुसन्ताने दि०। सीव्यन्त्यनेनेति **सूत्रम्**[5]—तन्तुः[6]। करणम्। मुच्लृ मोक्षणे। मुच्यते तदिति **मूत्रम्**[5]—प्रस्रावः। कर्म ॥

## हुयामाश्रुभसिभ्यस्त्रन् ॥८४॥ ( पं० उ० ४।१७० )

एभ्यस्त्रन् प्रत्ययो भवति। हु दानादनयोः जु०। हूयत इति **होत्रम्**—हविः। कर्म। या प्रापणे अ०। यानं **यात्रा**—गमनम्, आचारश्च[7]। भावः। मा माने अ०[8], माङ् माने शब्दे च जु०। मानं **मात्रा**, मीयत इति वा **मात्रा**—अल्पपरिमाणम्। भावः कर्म च। श्रु श्रवणे[9]। शृण्वन्त्यनेनेति **श्रोत्रम्**—कर्णः। करणम्। भस भक्षण[10]दीप्त्योः जु०। बभस्तीति

---

१. 'विमानं वा' इति नास्ति ख. ग.।

२. द्रष्टव्यम्—द० उ० पृ० १४६, टि० ६। 'तडागः' इति ग.।

३. 'जनसन······आत्वम्' इति नास्ति ख. ग.।

४. 'सिवि' इति ङ.। 'सिवु' इति च.।

५. अत्राह भट्टोजिदीक्षितः—'**सूचिसूत्रिभ्यामरचा सिद्धे स्वरार्थमिदम्। न च घञा तत्सिद्धिः, अचा घञो बाधात्**' इति (मनो० ८०१)।
श्वेतवनवासिवृत्तिरप्यत्रानुसन्धेया (पृ० १८७)।

६. 'तन्तु' इति ख. ग.।

७. 'यानं च' इति क.।

८. '**अथवा**' इत्यधिकम् क.।

९. 'गतौ' इति क.।

१०. 'भर्त्सन' इति ख.घ.। "**भस धातोः 'भर्त्सन' इत्यर्थो नवीनः, 'भक्षण' इति तु प्राचीनोऽर्थः**" इति स्वामिदयानन्दसरस्वती (ऋ० भा० १।२८।७)। '**भस भक्षण-दीप्त्योः**' इति सायणोऽपि(ऋ० भा० १।२८।७)अत्र निरुक्तम् (६।३६)अप्यनुसन्धेयम्।

**भस्त्रम्**[1] चर्म, उदरं च। कर्त्ता॥

**गमेरा च ॥८५॥ ( पं० उ० ४।१७१ )**

गमेर्धातोस्त्रन् प्रत्ययो भवति, आकारश्चान्तादेशः[2]। गम्लृ गतौ भ्वा०। अहरहः क्षयं[3] गच्छतीति **गात्रम्**—शरीरम्। कर्त्ता॥

**अमिचिमिदिशसिभ्यः[4] क्त्रः[5] ॥८६॥ ( पं० उ० ४।१७२ )**

एभ्यः क्त्रः[6] प्रत्ययो भवति। अम गत्यादिषु भ्वा०। अमत्यस्मिन्नाहार इति **अन्त्रम्**[7]—कुक्ष्यन्तरम्। अधिकरणम्। चिञ् चयने स्वा०। चिनोति चीयते वा तदिति **चित्रम्**—नानाऽऽकारलेख्यम्, अद्भुतं च। कर्त्ता कर्म च[8]। ञिमिदा स्नेहने[9] दि०। मेद्यतीति **मित्रम्**—सुहृत्। कर्त्ता। शसु हिंसायां भ्वा०। शसतीति **शस्त्रम्**—प्रहरणम्। कर्त्ता[10]। शंसु गतौ। शत्रून् शंसतीति **शस्त्रम्**—मन्त्रजातम्[11]। करणं कर्म च[12]॥

**पूञो[13] ह्रस्वश्च ॥८७॥ ( पं० उ० ४।१७३ )**

---

१. 'भस्त्रा' इति क.।

२. 'आकारश्चान्त्यस्य' इति क.। ३. 'अहरहः क्षयम्' नास्ति ख. ग.।

४. '०दाशंसिभ्यः' इति च.। ५. 'क्त्रः' इति नास्ति ख. ग.।

६. 'त्रन्' इति ख. ग. ज.। अयमपपाठः एतत्सूत्रसिद्धाः सर्वेऽपि शब्दा अन्तोदात्ता एव प्रयुज्यन्ते। त्रनि तु नित्त्वादाद्युदात्तत्वं प्राप्नोति, तदनिष्टम्। यथाह दीक्षितः—'प्रत्ययस्वरेणैतेऽन्तोदात्ताः' (मनो० पृ० ८०१)। चित्रशब्दः सर्वत्रान्तोदात्तः सन्नपि 'चित्र इत्' (ऋ० ८।२१।१८) इत्येकत्राद्युदात्तो दृश्यते। तत्र स्वरव्यत्ययो द्रष्टव्यः। नारायणश्वेतवनवासिनौ 'त्रन्'प्रत्ययस्यैव कित्त्वमाहतुः। तावप्येतेनैव प्रत्युक्तौ।

७. केचन वृत्तिकारः 'आन्त्रम्' इत्युदाहरन्ति। तद्यथा—"कित्त्वादनुनासिकस्य क्विझ्झलोः' (अ० ६।४।१५) इति दीर्घः। व्याप्नोत्युदरम्–आन्त्रम्" इति नारायणः (पृ० ११५)। श्वेतवनवासी तु 'अन्त्रम्' इत्युदाहृत्य 'आन्त्रमिति छान्दसो दीर्घः' इत्याह (पृ० १८८)।

८. 'चीयत इति चित्रम्—नानाकरणमालेख्यम्। कर्म' इति ख. ग.।

९. 'स्नेहनमोचनयोः' इति ग.। १०. 'शंसत्यनेनेति ···करणम्' इति क.।

११. 'अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्' इति मीमांसकाः।

१२. शंसु गतौ ···· कर्म च' इति नास्ति क. ख.। लेखकप्रमादाद् भ्रष्टोऽयं पाठः। १३. 'पूङः' इति क.। 'पुवः' इति ज.।

पूञो[1] धातोः क्त्रः प्रत्ययो भवति ह्रस्वश्च धातोः। पूञ् पवने क्र्यै०। पुनातीति[2] पुत्रः[3]—सुतः[4]। कर्त्ता॥

स्त्री[5] ॥८८॥ (पं० उ० ४।१७४)

स्त्री इत्ययं शब्दो निपात्यते त्रप्रत्यये। ष्ट्यै स्त्यै शब्दसंघातयोः भ्वा०। स्त्यायतेस्तकारयकारलोपौ निपात्येते प्रत्ययस्य च ईत्वम्[6]। स्त्यायत्यस्यां गर्भ इति स्त्री—योषित्। अधिकरणम्॥

गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः[7] ॥८९॥ (पं० उ० ४।१७५)

---

१. 'पूङः' इति क.।

२. 'धातोः भवति। पूङ् पवने भ्वा०, पूञ् पवने क्र्यै०। पवते पुनातीति वा' इति क.।

३. अत्र निरुक्तम्—'पुत्रः पुरु त्रायते, निपरणाद्वा, पुन्नरकं ततस्त्रायत इति वा' इति (नि० २।११)। तथा चाह भगवान् मनुः—

'पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः'। इति (९।१३८)।

श्वेतवनवासिकृता वृत्तिरप्यत्रानुसन्धेया (पृ० १८८)। ४. 'सूनुः' इति क.।

५. दीक्षितोज्ज्वलदत्तौ 'स्त्यायतेर्ड्रट्' सूत्रमधीयाते (सि० कौ० पृ० ५५९। उज्ज्वलवृ० पृ० १८८)।

मनोरमातत्त्वबोधिनीकाराभ्यां 'स्त्यायतेर्ड्रट् इत्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां चोपलम्भात् ·····' (मनो० पृ० ८१०। तत्त्व० ५६६) इति यदुयुक्तं तदयुक्तम्। नहि 'संस्त्याने स्त्यायतेर्ड्रट्'—'स्त्री' इत्यत्र भाष्ये उणादिसूत्रं निर्दिष्टम्, तथा सति 'सूतेः सप् प्रसवे पुमान्' इत्युत्तरत्र 'सूतेः सप' इत्येवमुणादिसूत्रकल्पन 'पातेर्ड्म्सुन्' इति सार्वत्रिकः पाठोऽपि दत्ताञ्जलिः स्यात्। पञ्चपाद्यामपि नारायणश्वेतवनवासिभ्यां 'स्त्री' इत्येव पठ्यते तस्तात् पञ्चपाद्यामपि न सार्वत्रिकः पाठः। दशपाद्यां तु क्वचिदपि तथाविधसूत्रपाठो न दृश्यते। तस्मादन्यमुपालम्भयन्तौ स्वयं निगृहीतौ इत्यलमतिपल्लवितेन।

६. 'स्त्यायते ····· ईत्वम्' इति नास्ति ख. ग.।

७. 'त्रन्' इति क. ख. ग. च. ज.। उत्तरत्राप्येवम्। निघण्टुव्याख्यात्रा देवराजेनेदं सूत्रमसकृदुद्धृतं, तत्रापि 'त्रः' इत्येव पाठः (देव० पृ० १७, ६०, ११४)। पञ्चपाद्यां 'मनितनि' धातू न पठ्येते।

एभ्यस्त्रः[1] प्रत्ययो भवति। गुङ् अव्यक्ते शब्दे भ्वा०। गूयतेऽनेनेति[2] **गोत्रम्**—ऋषिवंशः, नाम च। कर्म। धृङ् अवस्थाने भ्वा०। ध्रियत इति **धर्त्रम्**—धर्मः, स्तम्भश्च[3]। कर्म[4]। वी गत्यादिषु अ०। वीयतेऽनेनेति **वेत्रम्**—वीरुत्। करणम्। डुपचष् पाके भ्वा०। पचतीति **पक्त्रम्**—अग्निः। कर्त्ता। वच परिभाषणे अ०, ब्रूञ् व्यक्तायां वाचि अ०। उच्यतेऽनेन ब्रवीति वा **वक्त्रम्**—आस्यम्। करणं कर्त्ता च। यम उपरमे भ्वा०। यच्छतीति **यन्त्रम्**—शरीरसाधनम्[5], पीडनं च। कर्त्ता। मन ज्ञाने दि०, मनु अवबोधने ता०। मन्यते मनुते वा **मन्त्रः**—छन्दः। कर्त्ता। तनु विस्तारे ता०। तनोति तन्यते वा तदिति **तन्त्रम्**—विस्तीर्णम्। कर्त्ता कर्म च। अथवा **तन्त्रम्**—शास्त्रसंग्रहः[6]। कुविदभाण्डं च। षद्लृ विशरणादौ भ्वा०। सीदतीति **सत्रम्**—यज्ञः, सभा च[7]। कर्त्ता। क्षद संवरणे[8] भ्वा०। क्षदतीति **क्षत्रम्**[9]—जातिः। कर्त्ता॥

## दादिभ्यश्छन्दसि[10] ॥९०॥ (पं० उ० ४।१७६)

दादिभ्यो धातुभ्यस्त्रः प्रत्ययो भवति छन्दसि[10] विषये। दाप् लवने

---

१. 'त्रन्' इति क. ख. ग. च. ज.।

२, 'गुङ् शब्दे। गूयते मेरोः प्रजानां सर्वासामिति' इति ख.। ग.पुस्तके इतोऽप्यधिको भ्रष्टः।

३. 'स्तम्भश्च' नास्ति क.।

४. 'कर्त्ता' इति क. ख.।

५. 'शरीरसन्धानम्' इति क.।

६. 'शास्त्रं संग्रहः' इति ख.।

७. 'यज्ञसदः' इति ख. ग.।

८. 'क्षद गतौ' इति क.।

९. व्युत्पत्त्यन्तरं च रघुवंशे (२।५३)—

**'क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः'** इति।

एतत्पद्यसमानार्थकं महाभारतेऽपि (शां० ५९।१२६)—

**'ब्राह्मणानां क्षतत्राणात् ततः क्षत्रिय उच्यते'** इति।

१०. यद्यप्येतत्सूत्रसिद्धा दात्रादयः शब्दा भाषायामपि प्रयुज्यन्ते तथापि स्वरार्थं छन्दोवचनम्। भाषायां ष्ट्रनो नित्त्वादाद्युदात्ताः, छन्दसि त्रप्रत्ययस्वरेणान्तोदात्ता अपि। तथा चायमपरो विशेषः—भाषायां ष्ट्रनः षित्त्वाद् ङीष्, छन्दसि 'अजाद्यतष्टाप्' (अ० ४।१।४) इति टाबपि।

दात्रपोत्रशब्दावष्टकेऽपि ष्ट्रन्प्रत्ययान्तौ सिद्ध्यतः (अ० ३।२।१८२, १८३)।

आ० । दान्त्यनेनेति **दात्रम्**—छेदनम्[1] । करणम् । पूञ् पवने क्र्‌०[2] । पूयते [ऽनेन] इति **पोत्रम्**—हलसूकरयोर्मुखाग्रम् । करणम्[3] । पा पाने भ्वौ० । पिबत्यनेनेति **पात्रम्**—भाजनम् । करणम्[4] । लूञ् छेदने क्र्‌० । लुनाति लूयते वा **लोत्रम्**—शरीरम् । कर्त्ता कर्म च[5] ॥

## भूवादिगृभ्यो णित्रन् ॥९१॥ ( पं० उ० ४।१७७ )

एभ्यो धातुभ्यो णित्रन् प्रत्ययो भवति । भू सत्तायां भ्वौ० । भवतीति[6] **भावित्रम्**—विधानम् । कर्त्ता । वद व्यक्तायां वाचि भ्वौ० ण्यन्तः । वाद्यत इति **वादित्रम्**—वाद्यं मृदङ्गपणवादिकम्[7] । कर्म । गॄ निगरणे तौ० । गोर्यत इति **गारित्रम्**—अन्नपानम्, गुरुश्च[8] । कर्म ॥

## चरेर्वृत्ते ह्रस्वश्च वा[9] ॥९२॥ ( पं० उ० ४।१७८ )

चरेर्धातोर्णित्रन् प्रत्ययो भवति वृत्ते गम्यमाने ह्रस्वश्च वा भवति । चर गत्यर्थः भ्वौ० । चरन्ति तेनानन्दिता[10] इति **चारित्रम्**, **चरित्रं** च—शीलं स्थित्यभेदो वा[11] । करणम् ॥

## अशित्रादिभ्य इत्रोत्रौ ॥९३॥ ( पं० उ० ४।१७९ )

अशि तॄ इत्येवमादिभ्यो धातुभ्यो यथासंख्यमित्रोत्रौ प्रत्ययौ भवतः । अशूङ् व्याप्तौ सौ०, अश भोजने क्र्‌० । अश्नुते अश्नाति वा तदिति[12] **अशित्रम्**—अन्नपानम् । कर्त्ता कर्म च । तॄ प्लवनतरणयोः भ्वौ० । तरन्त्यनेनेति **तरुत्रम्**—प्लवः । करणम् । वृञ् वरणे सौ० । व्रियत इति **वरुत्रम्**—अभिप्रेतम् । कर्म[13] । एवमन्येऽपि[14] ॥

---

१. 'छेदनम्' नास्ति क. ।
२. 'पूङ् पवने भ्वौ०' इति क. ।
३. 'कर्म' इति ख. ।
४. 'पिबन्त्यस्मिन्निति पात्रम्—अधिकरणम्' इति क. ।
५. 'छेदने । लूयते लोत्रम्—शरीरं कर्म' इति ख. ग. ।
६. 'भावयतीति' इति ख. ग. ।
७. 'वादित्रम्—मृदङ्गादि' इति क. ।
८. 'गुरुश्च' नास्ति क. ।
९. 'वा' नास्ति क. च. ज. ।
१०. 'तेन' इत्येव क. ।
११. 'स्थित्यभेदो वा' इति नास्ति क. ।
१२. 'तं वा' इति क. । अत्र पाठो भ्रष्ट इति प्रतिभाति ।
१३. 'कर्त्ता' इति ख. ग. ।
१४. 'एवमन्येऽपि' नास्ति क. ।

**अमेर्द्विषि[1] चित्** ॥९४॥ ( पं० उ० ४।१८० )

अमेर्धातोरित्रः[2] प्रत्ययो भवति, चित्सञ्ज्ञकः, द्विषि गम्यमाने[3]। अम गत्यादौ भ्वौ०। अमति वाक्कायमनोभिरिति[4] **अमित्रः**—शत्रुः। कर्त्ता॥

**मसेरूरन्[5]** ॥९५॥ ( पं० उ० ५।३ )

मसेर्धातोरूरन् प्रत्ययो भवति। मसी परिणामे दै०। मस्यति मस्यते वाऽसाविति[6] **मसूरः**—सस्यम्। कर्त्ता कर्म च॥

**हिंसेरीरन्नीरचौ[7]** ॥९६॥ ( पं० उ० ५।१६ )

हिंसेर्धातोरीरन् ईरच् इत्येतौ प्रत्ययौ भवतः[8]। हिसि हिंसायां रौ०। हिनस्तीति **हिंसीरः**—हिंस्रः। कर्त्ता। स्वरे विशेषः॥

**उदि दृणातेरलचौ पूर्वपदान्त्य[9]लोपश्च[10]** ॥९७॥ ( पं० उ० ५।१७ )

**अल् च अच्च अलचौ[11]**। उद्युपपदे दृणातेर्धातोरलचौ प्रत्ययौ भवतः, पूर्वपदान्त्यलोपश्च[12]। दॄ भये क्र्यौ०[13] उत्पूर्वः। उदीर्यते तद्वायुनाऽग्निसहितेनेति **उदरम्**— जठरम्, व्याधिश्च। कर्म। स्वरविशेषः॥

**जनेरर ठः** ॥९८॥ ( पं० उ० ५।३९ )

जनेर्धातोररप्रत्ययो भवति धातोश्च ठान्तादेशः[14]। जनी प्रादुर्भावे दै०।

---

१. 'द्विषति' इति ङ.। 'च' इत्यधिकं क.।

२. अत्राह श्वेतवनवासी—'स्वरितत्वादित्रप्रत्ययः केवलोऽनुवर्तते।······अमित्र इत्यन्तोदात्तं पदम्' इति (पृ० १९१)। एवमुज्ज्वलदत्तोऽपि (पृ० १९०)।

३. 'भवति द्विषि गम्यमाने चित्संज्ञः' इति क.।

४. 'मनोवाक्कायैरिति' इति ख.। 'वाक्मनःकायैरिति' इति ग.।

५. सूत्रमिदं नास्ति ज.।

६. 'असाविति' नास्ति क.।

७. 'ईरन्नीरचौ' इति ङ.।

८. 'रीरन् प्रत्ययो भवति इरच्च' इति ग.।

९. 'पूर्वपदान्त' इति क.।

१०. 'उदि दृणातेररच् पूर्वपदान्त्यलोपो धातोष्टिलोपश्च' इति च.।

११. 'अल् च अच्च अलचौ' इति नास्ति क.।

१२. 'पूर्वपदस्य चान्तलोपश्च' इति क.। 'पूर्वपदान्तस्य लोपश्च' इति ग.।

१३. 'दॄ विदारणे भ्वौ०' इत्यधिकं ग.।

१४. 'भवति ठकारश्चान्तादेशो धातोः' इति क.। 'भवति ठश्चान्तादेशः' इति ग.।

जायतेऽस्मिन्नतिशयेन[1] वातादिवैषम्याद् व्याधय इति[2] जठरम्—उदरम्। अधिकरणम् ॥

## वनिमनिभ्यां चिद् वा ॥९९॥ (पं० उ० ५।४१)

आभ्यां धातुभ्यामरप्रत्ययो भवति, चिच्च [वा], ठश्चान्तादेशः। वन षण सम्भक्तौ भ्वा०, वनु याचने ता०। वनति वनुते वा **वठरः**—वृहद्-द्रोही[3], मूर्खश्च। कर्त्ता। मन ज्ञाने दि०, मनु अवबोधने ता०। मन्यते मनुते **वा मठरः**—ज्ञानी[4], गोत्रं च। कर्त्ता। स्वरे विशेषः[5]॥

## कृदरादयश्च ॥१००॥ (पं० उ० ५।४३)

कृदरादयः[6] शब्दा निपात्यन्ते अरप्रत्यये निरुद्धाः। डुकृञ् करणे ता०। अस्यागुणत्वं निपात्यते दुगागमश्च। कुर्वन्ति तस्मिन् धान्यादिकं द्रव्यमिति[7] **कृदरः**—कुशूलः। अधिकरणम्। करोति वा तत्तदशुभमिति **कृदरम्**—सर्व-कर्मप्रवृत्तो दस्युर्जनः। मृङ् प्राणत्यागे तु०। अस्यागुणत्वं दुगागमश्च निपात्यते। म्रियतेऽनेनेति **मृदरः**—व्याधिः। करणम्[8]। मृदु क्षोदे क्र्या०। अस्यागुणत्वं निपात्यते। मृद्नातीति **मृदरः**। कर्त्ता[9]। दॄ भये क्र्या०। अस्य ह्रस्वत्वं दुगागमश्च निपात्यते। दृणातीति **दृदरः**—सर्पः[10]। कर्त्ता। **शॄ** हिंसायां क्र्या०। अस्य ह्रस्वत्वं दुगागमश्च निपात्यते। शृणातीति **शृदरः**[11] [—सूर्यः। कर्त्ता]॥

## अश्नोतेराशुकर्मणि वरट् ईच्चोपधायाः ॥१०१॥ (पं० उ० ५।६४)

अश्नोतेर्धातोर्वरट् प्रत्ययो भवति, उपधाया ईकारश्च[12], आशुकर्मण्य-भिधेये[13]। अशू व्याप्तौ स्वा०। अश्नुते सर्वं विश्वमिति **ईश्वरः**[14]—सर्वगः। कर्त्ता॥

---

१. 'अतिशयेन' नास्ति क.। २. 'जीर्यतेऽस्मिन्निति' इति ग.।
३. 'बृहद्देशः' इति क. ख.। ४. 'ज्ञाति' इति ख.।
५. 'स्वरे विशेषः' नास्ति क.। ६. 'इत्यादयः' इति क.।
७. 'वाद्यादिकं द्रवमिति' इति क.। ८. 'मृदरः। कर्त्ता' इति क.।
९. 'मृदु ·····कर्त्ता' नास्ति क.। १०. 'विषं भयं वा' इति ख.।
११. 'शॄ हिंसा ·····शृदरः' इति नास्ति ख.।
१२. 'ईकारश्चोपधायाः' इति क.। १३. 'गम्यमाने' इति क.।
१४. अत्राह श्वेतवनवासी—"टित्वात् ङीप् ईश्वरी। तथा च वैदिकः प्रयोगः—

## व्याङि घ्रातेर्जातौ कन् ॥१०२॥ ( पं० उ० ५।६८ )

व्याङि उपपदे घ्रातेर्धातोः[1] कन् प्रत्ययो भवति जातावभिधेयायाम्। घ्रा गन्धोपादाने भ्वा०। व्याजिघ्रतीति **व्याघ्रः**[3]—शार्दूलः। कर्त्ता॥

## करोतेर्द्वे च[4] ॥१०३॥ ( पं० उ० ५।४७ )

करोतेर्धातोः कन् प्रत्ययो भवति द्वे चास्य रूपे भवतः। डुकृञ् करणे ता०। करोति क्रियते वा **चक्रम्**—आयुधम्, रथाङ्गं च। कर्त्ता कर्म च॥

## हन्तेरन् घ च[5] ॥१०४॥

हन्तेरन् प्रत्ययो भवति घश्चादेशो धातोः। हन हिंसागत्योः अ०। हन्ति हन्यते वा **घरः**—गृहम्[6]। कर्त्ता कर्म च[7]॥

॥ रेफः ॥

---

'ईश्वरी पदार्थानाम् (ईश्वरीं सर्वभूतानाम्)' इति 'स्थेशभास' (अ० ३।२।१७५) इति वरचा सिद्धे स्त्रियां ङीबर्थं वरट् विधीयते। अर्थोऽपि सदृश एव। वरचि ईश्वरा इति रूपम्। तथा च भारवीये प्रयोगः—'विन्यस्तमङ्गलमहौषधिरीश्वराया स्रस्तोरगप्रतिसरेण करेण पाणिः' इति। ईश्वराया ईशनशीलायाः, न त्वीश्वरभार्यायाः" इति (पृ० २३०)।

१. 'घ्रः' इति ङ.। २. 'घ्रा इत्येतस्मात्' इति क.।

३. अत्राह श्वेतवनवासी—"अयमपि योगः शक्योऽवक्तुम्। 'पाघ्राध्माधेट्दृशः शः' (अ० ३।१।१३७) 'जिघ्रतेः संज्ञायां प्रतिषेधः' (अ० ३।१।१३७ वा०) इति वार्तिके शप्रत्ययो भावे (?)सिद्धत्वात्, व्याघ्रशब्दस्यान्तोदात्तस्य दर्शनात्, आद्युदात्तस्य क्वचिद् विद्यमानत्वात्, स्वरव्यत्ययस्य सर्वथा वक्तव्यत्वात्" इति (पृ० २३२)।

४. सूत्रमिदं नास्ति ज.।

५. सूत्रमिदं मनोरमातत्त्वबोधिनीकाराभ्यामुद्धृतम्। तथाहि—"दशपाद्यां तु सूत्रान्तरमपि 'हन्तेरन घश्च'। रन्प्रत्ययः स्याद् घश्चादेशः। हन्यते गम्यतेऽतिथिभिः घरः गृहम्।" इति (मनो० पृ० ८०८ तत्त्व० पृ० ५६५)। पञ्चपाद्यां 'हन्तेरच् घुर च' इति पठ्यते। तेन घोरशब्दः निष्पाद्यते। घोरशब्दे 'घुर भीमार्थशब्दयोः' इत्यनेनैव सिद्धे अनर्थकं सूत्रं स्यात्।

६. इतोऽग्रे—'हन्तीत्यर्थमिति घरः—नवः, घातकश्च' इत्यधिकः ख.पुस्तके।

७. सवृत्ति सूत्रमिदं नास्ति क.पुस्तके।

'कपिगडिपटिभ्यः ओलः'[2] ॥१०५॥ ( पं० उ० १।६३ )

एभ्य ओलः प्रत्ययो भवति । कपि चलने भ्वौ० । कम्प्यत इति **कपोलः**—गण्डः । कर्म । बाहुलकान्नकारस्य लोपः[3] । गडि वदनैकदेशे भ्वौ० । गण्डत[4] इति **गण्डोलः**—हर्षुलः[5] । कर्त्ता । पट गतौ भ्वौ० । पट्यत इति **पटोलः**--द्रव्यजातिः । कर्म[6] ॥

हृषेरुलच् ॥१०६॥ ( पं० उ० १।९४ )

हृषेर्धातोरुलच् प्रत्ययो भवति । हृष तुष्टौ दि० । हृष्यति यत्र तत्रेति[7]

---

१. ङ.पुस्तक इतः पूर्वं त्रीणि सूत्राण्युपलभ्यन्ते । तानि प्रसादाख्यया व्याख्यया सहितान्यधस्तात् निर्दिश्यन्ते—

भूसलिकलिमह्यनिमडिभण्डिचण्डिशण्डिगण्डिपिण्डिभ्यः किलच् ॥ (पं० उ० १।५३) ।

भविलं भुवनम् । सलति सलिलम् । कलयति कलिलम् । महयति महिला । अनित्यनेनानिलः । मडिः सौत्रः, मडिलो निन्दकः । भण्डिलो दूतः । चण्डते चण्डिलः श्वा । शण्ड्यते शण्डिला तटम् । गण्डिल भटम् । पीड्यते पिण्डते वा पिण्डिलः पिण्डः गणकश्च । [बाहुलकात्] तुण्डते तुण्डिलो मुखरः । मुण्डयति मुण्डिलोऽग्निः । कोकिलः (प्रत्ययस्य कित्त्वे कथं गुणः ?) पिकः ॥

कमेः पश्च ॥ (पं० उ० १।५४)

इलच् पश्चान्तादेशः । कम्यते कपिलो वर्णो मुनिर्वा ॥

मिथिलादयश्च ॥ (पं० उ० १।५६)

मथ्यतेऽस्यां मिथिला । इमिलः [कुटिलः पाठान्तरम्] ॥ इति (प्र० को० भा० २, पृ० ६३८) ।

२. 'ओलन्' इति ग. । 'ओलच्' इत्युज्ज्वलदत्तः । तदुभयमपि नेष्टम् । कपोलादिशब्दानां मध्योदात्तत्वस्येष्टत्वात् । तथा हि फिट्सूत्रम्—'लघावन्ते द्वयोश्च बह्वषो गुरुः' [४२] इत्यनेनाव्युत्पत्तिपक्षे मध्योदात्तस्वरस्य विधानात् ।

३. नास्त्ययं पाठः क. ग. ।

४. 'गण्डति गण्डते' इति क. ।

५. 'हर्षकः' इति ख. ।

६. 'कर्त्ता कर्म' इति ग. ।

७. 'यत्र तत्रेति' नास्ति क. ।

हर्षुलः—रमणशीलः प्रहसनशीलो वा[1]। कर्त्ता ॥

उणादयो बहुलम् [अ० ३।३।१] इति बहुलवचनादन्यत्रापि उलच् प्रत्ययः। शकि शङ्कायाम्। शङ्कतेऽस्यामिति शङ्कुला—कुमारक्रीडा। अधिकरणम्[2] ॥

## कल[3]स्तृपश्च ॥१०७॥ ( पं० उ० १।९९ )

तृपेर्धातोः कलप्रत्ययो भवति, कमेश्चानुवर्तमानात्[4]। तृप प्रीतौ दै० प्रकृत्यन्तरं ण्यन्तो वा। तृप्यति तर्पयति वा तृपला—लता। कर्त्ता। कमु कान्तौ भौ० प्रकृत्यन्तरं ण्यन्तो वा। काम्यते तत् कामयते वा कमलम्—पद्मम्। कर्त्ता कर्म च।

प्राक्प्रत्ययनिर्देशो मण्डलादिप्रसिद्ध्यर्थः। मडि च भौ०, मडि भूषायां चौ० ण्यन्तो वा। मण्ड्यते मण्डयतीति वा मण्डलम्—परिवारः। कर्त्ता कर्म च। कुडि दाहे भौ०। कुण्ड्यत इति कुण्डलम्—कर्णाभरणम्। कर्म। कुश श्लेषणे दै०। कुश्यत इति कोशलः[5]—देशः। कर्म। तुस शब्दगत्यर्थः भौ०। तोसतीति तोसलः[6]—देश एव। कर्त्ता ॥

## शपेर्वश्च ॥१०८॥ ( पं० उ० १।१०० )

---

१. 'प्रहसनशीलो वा' इति नास्ति क. ख.। ग.पुस्तकेऽपि'कर्त्ता'पदात्परं पठ्यते।

२. 'उणादयः ···· अधिकरणम्' इति नास्ति क. ख.।

अत्राह श्वेतवनवासी—'बाहुलकात् शङ्केरपीत्युक्तं भाष्ये। तेन शङ्कुला' इति (पृ० ४१)। ३. 'कल' इत्यविभक्तिकः क, ख. ग.।

४. 'चात् काम्यते कमलम्' इति प्रसादकारोऽपि (प्र० कौ० भा० २, पृ० ६३८)।

दशपादीवृत्तिकारः प्रसादकारश्च कमधातुं कुतोऽनुवर्तयत इति न ज्ञायते। पञ्चपाद्यां तु 'कमेरठः' (१।९८) इति सूत्रमव्यवहितं वर्तते। अतः पञ्चपाद्यां चादनुवृत्तिः सम्भवति। दशपाद्यां सूत्रमिदं ठकारान्तेषु (द० उ० ५।५ पृ० १७५) पठ्यते। यद्यपि प्रक्रियाकौमुदीटीकायां (भा० २, पृ० ६३८) 'कमेः पश्च' इति सूत्रान्तरं दृश्यते। तथापि चतुर्णां सूत्राणां व्यवधानात् ततोऽपि नानुवर्तयितुं शक्यते। अपि च अस्मद्दशपादीकोशेषु तदपि सूत्रं नोपलभ्यते। तस्मादस्य संगतिश्चिन्तयितव्या विज्ञैः।

५. 'कुश्यत इति कोसलम्' इति क.।

६. 'कोशलतोसल'शब्दयोर्बाहुलकाद् गुणो बोध्यः।

शपेर्धातोः कलप्रत्ययो भवति बश्चान्तादेशः। शप आक्रोशे दि०। शप्यतेऽसाविति **शबलः**—वर्णः। कर्त्ता॥[1]

## वृषादिभ्यश्चित् ॥१०९॥ (पं० उ० १।१०१)

वृष आदिर्येषां ते वृषादयः[2]। वृषादिभ्यो धातुभ्यः कलप्रत्ययो भवति चिच्च। वृषादिराकृतिगणः। वृषु सेचने भ्वा०। वर्षतीति **वृषलः**—शूद्रः। कर्त्ता। देवृ देवने भ्वा०, दिवु क्रीडादौ दि०। देवते दीव्यतीति वा **देवलः**—ऋषिः, क्रीडा वा[3]। कर्त्ता। केवृ सेचने। केव्यत इति **केवलः**[4]—कृत्स्नम्, एकं च। कर्म। पट गतौ भ्वा० प्रकृत्यन्तरं ण्यन्तो वा। पटति पाटयतीति वा **पटलम्**—घनसंघातः, अक्षिरोगश्च। कर्त्ता कर्म च। कुश इति सौत्रो धातुः वैदुष्यारोग्ययोः। कोशति कोशनं वा **कुशलो**—मेधावी, **कुशलम्**—आरोग्यं च। कर्त्ता भावश्च॥

## मृजेष्टिलोपश्च ॥११०॥ (पं० उ० १।१०२)

मृजेर्धातोः कलप्रत्ययो भवति टिलोपश्च धातोः[5]। मृजूष् शुद्धौ अ०। मृज्यतेऽसाविति **मलः**—रजः, आन्तरदोषश्च। कर्म[6]॥

## चुपेरच्चोपधायाः ॥१११॥ (पं० उ० १।१०३)

चुपेर्धातोः कलप्रत्ययो भवति अच्चोपधायाः[7]। चुप मन्दायां गतौ भ्वा०। चोपति मुहुर्मुहुरिति **चपलः**—अस्थिरचेष्टः। कर्त्ता॥

## शकिशम्योर्नित् ॥११२॥ (पं० उ० १।१०४)

आभ्यां धातुभ्यां[8] कलप्रत्ययो भवति नित्च। शक्लृ शक्तौ सौ०।

---

१. सवृत्ति सूत्रमिदं नास्ति क.पुस्तके।

२. 'वृष··· दयः' इति नास्ति ख. ग.। ३. 'क्रीडनश्च' इति क.।

४. 'केवृ गतौ भ्वा० केवलः' इति क.।

५. इतोऽग्रे क.पुस्तके—"किमिदं टीति? आह, 'अचोऽन्त्यादि टि' (अ० १।१।६४) अचां सन्निविष्टानां योऽन्त्योऽच् तदादिशब्दरूपं टिसंज्ञं भवति तस्य लोपो भवति" इत्यधिकः पाठः। ६. 'मलं बाह्योऽन्तरदोषः। कर्त्ता' इति ख. ग.।

७. अत्राह श्वेतवनवासी—'चप सान्त्वने इत्यस्मादेव कलप्रत्ययेन रूपे सिद्धे अकारविधानं स्पष्टार्थम्' इति (पृ० ४३)। ८. 'अनयोः' इति क.।

शक्यते तत् कृच्छ्रेणापि भेतुमिति[1] **शकलम्**—भिन्नं, सारं च[2]। कर्म। शम उपशमे दै० ण्यन्तः। शमयति शाम्यते[3] वा तत् प्रायश्चित्तादिभिरिति **शमलम्**—दुरितम्। कर्त्ता कर्म च॥

## द्रमिमस्योरुच्च[4] ॥११३॥ ( पं० उ० १।१०५ )

आभ्यां कलप्रत्ययो भवति, निच्च, उच्चोपधायाः। उपधाया इत्यनुवर्तते वर्षाभूत्फालन्यायेन[5]। द्रम हम्म मीमृ गतौ भ्वा०। द्रमतीति **द्रुमलम्**—जलम्। कर्त्ता। मसी परिणामे दै०। मस्यन्तेऽनेन धान्यजातय इति **मुसलम्**—प्रहरणम्। करणम्॥

## कम्बलादयश्च ॥११४॥ ( पं० उ० १।१०५ )

कम्बलादयः शब्दा निपात्यन्ते कलप्रत्यये निरुद्धाः। कम्बलादयः कम्बलप्रकाराः। कमु कान्तौ भ्वा०[6] ण्यन्तः। अस्य बुगागमो निपात्यते ह्रस्वश्च[7]। कामयते तदिति **कम्बलः**—वस्त्रमूर्णाकृतम्[8]। कर्म। अस्यैव धातोर्ण्यन्तस्यो[9]पधाया उत्वं निपात्यते। "**बहुलमन्यत्रापि संज्ञाछन्दसोः**" [द० उ० ८।४०]इति णेर्लुक्[10], लुग्लोपेन[11] वृद्धेरभावः[12]। काम्यतेऽसाविति **कोमलः**—

१. 'तदपनेतुमिति' इति क.। २. 'सारं च' नास्ति क.।

३. 'शीर्यते' इति ग.। नास्ति क. ख.।

४. 'उच्चोपधायाः' इति ङ. च.।

"अस्माद् [मुस खण्डने] एव औणादिकः कलप्रत्यय इति वदतोरात्रेयमैत्रेययोरन्येषामप्यमुं सान्तं पठतां 'भ्रमिमस्योरुच्चोपधायाः' (पं० उ० १।१०५) इति मसेर्मुसलव्युत्पत्तिरनार्षेति मतम्" इति धातुवृत्तिकारः (पृ० ३०८ का० स०)।

५. 'उपधायाः······ न्यायेन' इति नास्ति ख. ग.।

वर्षाभूः—मण्डूकः। मण्डूकप्लुतिन्यायेनेत्यर्थः।

६. 'कान्तौ शमु उपशमे यस्य उगागमो निपात्यते। शाम्यते मार्गपरिश्रान्तोऽनेनेति' इति ग.। अयं पाठोऽशुद्धोऽस्थाने चास्ति। अस्माभिः संशोध्य योग्ये स्थाने स्थापितः।

७. 'तस्य नुगागमो वश्चान्तादेशो ह्रस्वश्च निपात्यते' इति ख.। 'तस्य वुगागमो निपात्यते लश्चान्तादेशो ह्रस्वश्च निपात्यते' इति ग.।

८. 'वस्त्रम्' इत्येव ख. ग.। ९. 'अस्यैवोपधायाः' इति ख. ग.।

१०. 'कारितस्य लुक्' इति क.। कारितस्य ण्यन्तस्येत्यर्थः।

११. 'णिलोपेन' इति ग.।

१२. 'लुग्लोपेन वृद्धेरभावः' नास्ति क.। अयं पाठो भ्रष्टः प्रतिभाति।

सुकुमारः । कर्म । शमु उपशमे । अस्य बुगागमो निपात्यते । शाम्यते मार्गपरिश्रान्तोऽनेनेति **शम्बलम्**[1]—सञ्चयः, पाथेयम्[2] । [करणम्] । छो छेदने दि० । अस्य ह्रस्वत्वं निपात्यते गुगागमश्च । छयति छायते वाऽसौ यज्ञकर्मणि[3] इति **छगलः**—अजः । कर्त्ता कर्म च । पल गतौ, पाल रक्षणे चौ० । पालयति पाल्यते[4] वा **पललम्**—तिलपिष्टविकारः । कर्त्ता कर्म च । पट गतौ भौ० । अस्य दीर्घत्वं निपात्यते । पाटयतीति **पाटला**—पुष्पजातिः । कर्त्ता । एवमन्येऽपि[5] ॥

## तमिविडिविलिमृणिकुलिकपिपलिविशिपञ्चिकुणिभ्यः कालच्[6] ॥११५॥ ( पं० उ० १।११७ उज्ज्वल० )

एभ्यः कालच् प्रत्ययो भवति । तमु काङ्क्षायां दि० । ताम्यतीति **तमालः**—व्यालः, वृक्षश्च । कर्त्ता । विड इति सौत्रो धातुः ण्यन्तः । वेडयति मूषकानिति **विडालः**—मार्जारः । कर्त्ता । विल भेदने तौ० । विलतीति **विलालः**—भिदुरः[7] । कर्त्ता । मृण हिंसायां तौ० । मृणति मृण्यते वा तदिति **मृणालम्**—बिसम् । कर्त्ता कर्म च । कुल संस्त्याने बन्धुषु च भौ० । कुल्यतेऽसाविति **कुलालः**—कुम्भकारः । कर्त्ता कर्म च[8] । कप इति सौत्रो धातुः । कपतीति **कपालः**—मूर्ध्नि बन्धभेदः । कर्त्ता । पाल रक्षणे चौ० । पालयति पाल्यते वा तदिति **पलालम्**—धान्यतृणजातिः । कर्त्ता कर्म च । विश प्रवेशने तौ० । विशन्ति तस्मिन् बहवोऽनेन वा[9] **विशालम्** पृथुः । अधिकरणं

---

१. 'कर्म । शमेर्बुगागमश्च । शम्बलम्' इति ख. ग. ।

२. 'शमु····· पाथेयम्' इति नास्ति क. ।

३. 'यजमानस्य पशून् पाहि' (यजुः १।१) इति मन्त्रवचनादवैदिकीयं पशुहिंसा । विवृतश्चायं मन्त्रो भगवता व्यासेन—

'पशुहिंसा वारिता हि यजुर्वेदादिमन्त्रतः' ।
महाभा० शान्ति० ३४४।२१ कुम्भघोण सं० ।

४. 'गतौ पलति पल्यते वा' इति ख. ।

५. 'पल गतौ ···· एवमन्येऽपि' इति नास्ति क. ।

६. 'कालन्' इति ङ. । उज्ज्वलदत्तोऽपि । अत्र 'कालच्' इत्येव युक्तः प्रतिभाति । द्र०—द० उ० ८।११७ सूत्रे कुणालशब्दः । ७. 'बिडरः' इति क. ।

८. 'कर्त्ता' इति क. । 'कर्त्ता कर्म च' इति नास्ति ख. ।

९. 'विशन्ति अनेन गन् बहव इति' इति क. ।

करणं च। पचि व्यक्तीकरणे भौ०, पचि विस्तारे चौ०[1]। पञ्चते पञ्चयति वा **पञ्चालाः**—विषयः, पर्वतेश्वरयक्षः[2]। कर्त्ता। कुण शब्दोपकरणयोः तौ०, कुण गुण चामन्त्रणे चौ०। कुणति कुणयति वा **कुणालम्**—नगरम्, कटकं च[3]। कर्त्ता॥

**पतिचण्डिभ्यामालञ्[4] ॥११६॥ ( पं० उ० १।१०१ )**

आभ्यां धातुभ्यामालञ् प्रत्ययो भवति। पत्लृ गतौ भौ०। पतति तस्मिन्नुदकमिति **पातालम्**—भूमेरधः। अधिकरणम्। चडि कोपे भौ०। चण्डनशीलश्चण्डते वा **चाण्डालः**—श्वपाकः। कर्त्ता॥

**पीयुक्वणिभ्यां कालन् ह्रस्वः सम्प्रसारणं च[5] ॥११७॥ ( पं० उ० ३।७३ )**

आभ्यां कालन् प्रत्ययो भवति ह्रस्वः सम्प्रसारणं च यथासंख्यम्। पीयुरिति सौत्रो धातुः। पीयत इति **पियालम्**—शाकम्, वीरुच्च। कर्त्ता। क्वण शब्दार्थः। क्वणति क्वण्यते वा **कुणालम्**—नगरम्, कटकं च। कर्त्ता कर्म च। कुणालशब्दस्य "**तिमिविडि**" [द० उ० ८।११५] इति सिद्धे पुनः साधनं स्वरार्थम्[6]॥

**पुषः कलन्[7] किच्च[8] ॥११८॥ ( पं० उ० ४।५ )**

पुषेर्धातोः कलन्[7] प्रत्ययो भवति किच्च। पुष पुष्टौ भौ०, दै०, क्र्यै०।

---

१. 'भौ० पचि विस्तारे चौ०' इति नास्ति क.।

२. 'पर्वतेश्वरो यक्षेश्वरो वा' इति क.। ३. 'कण्ठश्च' इति ख. ग.।

४. अत्राह माधवीयधातुवृत्तिकारः—"पतिचण्डिभ्यामालन् इत्यालन्। बाहुलकाद् वृद्धिः। केचिद् वृद्ध्यर्थम् 'आलञ्' इति पठन्ति। 'तद्युक्तात्' (अ० ५।४।३६) इत्यत्र 'अण्प्रकरणे कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यश्छन्दसि' [वा०] इति चण्डालात् स्वार्थेऽण्विधानादयुक्तम्" इति (धा० वृ० पृ० १४७)।

५. 'सम्' इति नास्ति ख.। 'संप्रसारणं च' इति नास्ति ङ.। तदनुरोधादुदाहरणमपि 'क्वणालम्'। ६. 'कुणाल ... स्वरार्थम्' इति नास्ति क.।

७. 'कलश्' इति क.। नारायणश्वेतवनवासिनौ 'कलच्' इत्येवं पठतः। तदेव युक्तम्, पुष्कलशब्दस्यान्तोदात्तत्वदर्शनात् (अथर्व० १३।३।१०)। ककारस्येत्संज्ञा न भवति किद्विधानसामर्थ्यात्।

८. 'पुषेः कलन्' इति च. ज.।

पोषति पुष्यति पुष्णाति वा **पुष्कलम्**—समग्रम् । कर्त्ता ॥

## मूशक्यम्बिभ्यः[1] क्लः ॥११६॥ ( पं० उ० ४।११६)

एभ्यो धातुभ्यः क्लः प्रत्ययो भवति । मूङ् बन्धने भौ० । मवत इति **मूलम्**—प्रतिष्ठा, हेतुर्वा । कर्ता । शक्लृ शक्तौ सौ० । शक्नोति हृदयमावर्जयितुमिति **शक्लम्**—मधुरम् । कर्त्ता । अम शब्दे भौ० । अम्यते तदिति **अम्लम्**—सक्लादिसः[2] । कर्म ॥

## कुटि[3]कुषिभ्यां क्मलन्[4] ॥१२०॥ ( पं० उ० ४।१६२ )

आभ्यां क्मलन्[4] प्रत्ययो भवति । कुट कौटिल्ये तौ० । कुटचत इति **कुट्मलम्**—मुकुलम्[5] । कर्म । कुष निष्कर्षे दै० । कुष्यत इति **कुष्मलम्**—विकसितम्[6] । कर्म ॥

## वृङ्तुटितनिताडिभ्य उलच्[7] तण्डश्च[8] ॥१२१॥ ( पं० उ० ५।८ )

---

१. '०क्यम्ब्विभ्यः' इति क. । '०क्यविभ्यः' इति ङ. च. ज. । द्र०—भोजोणादिः ।

२. 'अवि······ अव्यते······अब्लम्—मुक्लादि······' इति ख. । 'अम्बि··· ···अम्ब्यते······अम्ब्लम्—चल्कादितरत्' इति क. । 'शक्लादिरसः' इति प्रसादकारः । ग.पुस्तके तु 'रसः' इत्येव पाठः ।

३. 'कुडि' इति ङ. । तदनुरोधादुदाहरणमपि 'कुड्मलम्' ।

४. 'क्मलच्' इति ग. ।     ५. 'अविशोकम्' इति क. । 'मूलम्' इति ग. ।

६. 'बिलम्' इति क. ।

७. 'उलन्' इति क. ख. ग. ।

यद्यपि 'उलच्' इत्येकस्मिन्नेव कोशे पठचते तथापि स्वरानुरोधादयमेव पाठो युक्तः । तथा हि—अथर्ववेदे(११।१।१८॥ ११।३।५॥ १२।३।१८, २६, ३०)ऽसकृदन्तोदात्तः श्रूयते । तथा च 'अन्वाख्यानानि भिद्यन्ते' (वा० प० २।१७१) इति कारिकाव्याख्याने भर्तृहरिणा 'उलच्' इत्येव पठचते (वा० प० भा २, पृ० ६०) ।

८. सूत्रमिदं भर्तृहरिणा वाक्यपदीयस्य स्वोपज्ञटीकायामुद्धृतम् । उक्तं च—'शक्यो ह्यन्येभ्योऽपि धातुभ्यः शब्दव्युत्पत्तिकर्मण्युलच् प्रत्ययो विधातुं तण्डादेशं च कर्तुमिति' इति (वा० प० भा० २, पृ० ६०) । नारायणश्वेतवनवासिभ्यां तण्डादेशो न विधीयते । 'वरुलम्, लोटुलम्, तनुलम्, तण्डुलम्' इत्यादीनि पदानि साध्यन्ते (ना० पृ० १२७, श्वेत० पृ० २१२) ।

एभ्य उलच् प्रत्ययो भवति 'तण्ड' इत्ययं चादेशो धातूनाम् । वृङ् सम्भक्तौ क्र्०,[1] लुट आलस्ये[2], तनु विस्तारे ता०, तड आघाते चौ० । व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्ते वा तण्डुलाः—संस्कृताः शालयः । कर्म ।

अथ तण्डुलशब्दो निपातित[3] इति पुनरुक्तमेवेदं सूत्रम् । नैष दोषः, स्वरविशेषार्थमिह[4] ॥

**मव्यतेर्यलोपो मश्चाप्तुट् चालः[5] ॥१२२॥ ( पं० उ० ५।५७ )**

मव्यतेर्धातोरालप्रत्ययो भवति, यलोपः[6], मश्चान्तादेशः, आप्तुट्[7] चागमः । मव्य बन्धने भ्वौ० । मव्यतीति ममाप्तालः—पतिः,[8] स्नेहो वा । कर्त्ता । अन्ये तु ब्रुवते पुत्रदारगृहादिषु यत्स्नेहबन्धनं तन्ममाप्तालमित्युच्यते ॥

**मङ्गेरलच् ॥१२३॥ ( पं० उ० ५।८१ )**

मङ्गेर्धातोरलच् प्रत्ययो भवति । मगि गत्यर्थः भ्वौ० । मङ्ग्यत इति मङ्गलम्—शुभम् । कर्म ॥

॥ लकारः[9] ॥

**प्रथेः षिवन् सम्प्रसारणं च ॥१२४॥ ( पं० उ० १।१३६ )**

प्रथेर्धातोः षिवन् प्रत्ययो भवति सम्प्रसारणं च । प्रथ प्रख्याने भ्वौ० । प्रथत इति पृथिवी—भूमिः । कर्त्ता । षित्करणं ङीषर्थम् । गौरादित्वात् [अ० ४।१।४१] सिद्धमिति चेत् न, गणे कृतस्यानित्यत्वसूचनार्थम्[10] ॥

---

१. 'उदात्तः चौ०' इति ग. ।

२. 'लोट विलोडने दै०' इति क. । ३. द० उ० १०।१५।।

४. 'पुनरुक्तत्वादनर्थकमिदं सूत्रम्, वैयाकरणानां मात्रालाघवं पुत्रजन्मेति वचनात्' इति क. ।

५. 'आयुडालः' इति ङ. । 'माप्तुद्दालः' इति ख. । 'लोपश्चाप्तुद्दालः' इति क. । 'मश्च' इति च. । अस्माभिस्तु प्रकरणानुसारं संशोधितः ।

६. 'र्थमिह । मव्यते……यलोपश्च' इति नास्ति ग. ।

७. 'आप्तुद्दागमः' इति क. । 'आयुक् चागमः' इति ग. ।

८. 'प्रीतिः' इति प्रसादकारः (प्र० कौ० भा० २, पृ० ६३९) ।

९. नास्ति क. । 'इति लकाराः' इति ख. । 'इति लकारान्ताः' इति ग. ।

१०. अत्राहोज्ज्वलदत्तः—'षित्त्वादेव ङीषि सिद्धे गौरादावपि पृथक्शब्दपाठोऽनुबन्धकार्यानित्यत्वज्ञापनार्थः । तेन दंष्ट्रेति सिद्धं भवति' इति (पृ० ५५) ।

## अशूप्रुषिप्लुषि[1]लटिकणि[2]खटिविशिभ्यः क्वन् ॥१२५॥

## (पं० उ० १।१३७)

एभ्यः क्वन् प्रत्ययो भवति। अशू व्याप्तौ सौ०। अश्नुतेऽध्वानमिति अश्वः—तुरगः। कर्त्ता। प्रुष दाहे भौ०। प्रोषतीति प्रुष्वः—जललवः। कर्त्ता। प्रुष प्लुष स्नेहनसेवनपूरणेषु क्र्यै०। प्लुष्णातीति प्लुष्वः—जललवः। कर्त्ता। लट आलस्ये[3]। लटतीति लट्वा—पक्षिजातिः। कर्त्ता। कण निमीलने भौ० प्रकृत्यन्तरं ण्यन्तो वा। कणति कणयति वा कण्वः—ऋषिः। कर्त्ता। खट काङ्क्षायाम्। खटन्ति तामिति खट्वा—शयनाधिकरणम्[4]। कर्म। विश प्रवेशने तौ०। विशन्ति तस्मिन् सर्वं, विष्टमनेन[5] सर्वमिति वा विश्वम्—कृत्स्नम्। अधिकरणं करणं च॥

## इण्शीभ्यां वन् ॥१२६॥ (पं० उ० १।१३८)

आभ्यां वन् प्रत्ययो भवति। इण् गतौ अ०। एतीति एवम्—निश्चयः, अवधारणं च[6]। कर्त्ता। शीङ् स्वप्ने अ०। शेते इति शेवः—सर्पः। कर्त्ता॥

## सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे ॥१२७॥

## (पं० उ० १।१३९)

एते शब्दा निपात्यन्ते वन्प्रत्यये निरुद्धाः,[8] अतन्त्रेऽकर्तरीत्यर्थः। सृ गतौ भौ०, जौ०। सृतमनेन विश्वमिति सर्वम्[9]—समग्रम्। करणम्। घृष्व संघाते[10] निपूर्वः। निघृष्यतेऽनेनेति निघृष्वः—वायुः, क्षुरश्च[11]। निपातनाद-

---

१. 'प्लुषि' नास्ति क. ङ. च. ज.। २. 'लटिकटिकणि' इति च. ज.।

३. 'प्रोषतीति प्रुष्वः। अधिकरणं कर्ता च। प्रुष प्लुष पूरणसेवनेषु क्र्यै०। प्रुष्णातीति प्रुष्वः जललवः। कर्त्ता। लट बाल्ये भौ०' इति क.।

४. 'शयनम्' इति क.। ५. 'सर्वविष्टमनेन' इति नास्ति ख. ग.।

६. 'एवं निश्चितः, एव अवधारणं वा' इति क.।

७. 'ह्रस्व' नास्ति च.। ८. 'वन्प्रत्यये निरुद्धाः' इति नास्ति ख. ग.।

९. 'सर्वशब्दोऽन्तोदात्तो निपातितः' इत्याह कैयटः (अ० ४।१।१)। 'अन्तोदात्तत्वं च निपात्यते' इति श्वेतवनवासी (पृ० ५३)।

१०. 'भौ० जौ० ............संघाते' इति नास्ति क.।

११. 'वायू रविश्चाशुरश्च' इति ग.।

गुणत्वम् । करणम् । रिष हिंसायाम् । रिष्यतेऽनेनेति **रिष्वः**—हिंस्रः । करणम् । निपातनादगुणत्वम्[1]। लष कान्तौ भौ० । अस्योपधाया इत्वं निपात्यतेऽगुणत्वं च[2]। लष्यतेऽसाविति **लिष्वः**—कान्तः, दयितः[3]। कर्म । शीङ् स्वप्ने । अस्य ह्रस्वत्वमगुणत्वं च निपात्यते[4]। शेते इति **शिवम्**[5]—भद्रम् । अथवा शो तनूकरणे दै० । अस्य ह्रस्वत्वं[6] निपात्यते । श्यैङ् गतौ । अस्य सम्प्रसारणम्[7]। श्यति श्यायते वा **शिवः**—शम्भुः । कर्त्ता कर्म च[8]। ह्रस शब्दार्थः भौ० । ह्रस्यते इति **ह्रस्वः**—अदीर्घप्लुतः । कर्म । पद गतौ दै० । पद्यत इति **पद्वः**—रथः[9]। कर्म । ह्वेञ् स्पर्धायां शब्दे च भौ० प्रपूर्वः । अस्यैकारवकारलोपो[10] निपात्यते । प्रहूयतेऽसाविति **प्रह्वः**—प्रणतः । कर्म । इषु इच्छायां तौ० । इष्यतेऽसाविति **इष्वः**[11]—अभिलषितः । कर्म ॥

अतन्त्र इति किम्—'**वाऽसरूपोऽस्त्रियाम्**' [अ० ३।१] इति वचनात् ण्वुल्तृचौ भवतः[12]। सरतीति **सारकः**—सर्त्ता[13]। कर्त्ता । अतन्त्र इति प्रतिषेधात् कर्तरि न भवति ॥

---

१. 'करणं रिष······गुणत्वम्' नास्ति क. ।

२. 'अगुणत्वं च' नास्ति क. ।

३. 'करणं निपातनाद्······दयितः' इति नास्ति ख. ।

४. '**गुणाभावश्च निपात्यते**' इति देवराजोऽपि (पृ० ३१८) । वस्तुतोऽगुणत्वनिपातनमयुक्तम्, ह्रस्वविधानसामर्थ्यादेव गुणो न भविष्यति ।

५. 'अन्तोदात्तत्वमपि निपात्यते, वेदेषु तथैव दर्शनात् । '**शिष्यते**'रिति यास्कः (निरु० १०।१७) ।

६. अयमपपाठः, नहि ह्रस्वत्वविधानेन इष्टसिद्धिर्भवति, उपदेशावस्थायामेवात्वविधानात् । तस्मात् 'इकारो निपात्यते' इति वक्तव्यम् ।

७. 'श्यैङ्······सम्प्रसारणम्' इति नास्ति ख. ।

८. 'शीङ् स्वप्ने अस्य····· कर्त्ता कर्म च' इत्यस्य स्थाने 'शमु उपशमे दै० । अस्योपधाया इत्वं निपात्यते पञ्चमलोपश्च । शाम्यत्यनेन कश्मलमिति शिवं भद्रं शिवो भद्रो वा । करणम्' ।इति क.पाठः ।

९. 'रथः' नास्ति क. ।

१०. 'अस्य वलोपो' इति क. ।

११. 'उणादिवृत्तौ तु इषु इच्छायामिति तौदादिकस्य निपातनमुच्यते' इति सायणः (धा० वृ० पृ० ११४)

१२. 'वासरूपो······भवतः' इति नास्ति क. ।

१३. 'सर्त्ता' नास्ति क. ।

## शेव[1]यह्वा[2]जिह्वाग्रीवाऽऽप्वामीवाः ॥१२८॥ ( पं० उ० १।१४० )

एते शब्दा निपात्यन्ते वन्प्रत्यये निरुद्धाः । शीङ् स्वप्ने आ० । अस्यान्तोदात्तत्वं निपात्यते[3] । शेतेऽत्यर्थमिति शेवः[1]—अजगरः । कर्त्ता । या प्रापणे । अस्य ह्रस्वत्वं निपात्यते हुगागमश्च[4] । यान्त्यनया[5] तांस्तानर्थानिति यह्वा—वृद्धिः । करणम् । लिह आस्वादने आ० । अस्य लकारस्य जत्वं निपात्यते गुणाभावश्च । लिहन्त्यनया रसानिति जिह्वा—रसनेन्द्रियम् । करणम् । गॄ निगरणे । अस्य ईडागमो निपात्यते गुणाभावश्च । गिरत्यनयाऽन्नपानमिति ग्रीवा—शिरोधरा । करणम् । आप्लृ व्याप्तौ सौ० । आप्नोति सर्वमिति आप्वा—वायुः । कर्त्ता । डुमिञ् प्रक्षेपणे सौ० । अस्य दीर्घत्वं निपात्यते । मीयत इति मीवा—वायुः । कर्म[6] ॥

## कॄगॄशॄदॄभ्यो वः ॥१२९॥ ( पं० उ० १।१४१ )

एभ्यो धातुभ्यो वः प्रत्ययो भवति । कॄ हिंसायां क्र्या०, कॄ विक्षेपे तौ० । कृणाति किरति वा कर्वः—आखुः, समुद्रो वा । कर्त्ता । गॄ निगरणे तौ०, गॄ शब्दे क्र्या० । गिरति गृणाति वा गर्वः—अहंकारः । कर्त्ता । शॄ हिंसायां क्र्या० । शृणात्यसुरान्, शृणाति[7] भक्तानां पापमिति वा शर्वः—ईशानः[8] । कर्त्ता । दॄ भये क्र्या० । दृणाति सर्व[9]मिति दर्वः—हिंस्रः । कर्त्ता । प्रत्ययान्तरकरणं स्वरार्थम्[10] ॥

---

१. 'शेवा' इति क. ।

२. 'यह्व' इति ङ. । ३. 'अस्यान्तोदात्तत्वं निपात्यते' इति नास्ति क. ।

४. 'अस्य ह्रस्वो निपात्यते' इति क. । 'धातोर्ह्रस्वत्वं हुगागमश्च' इति देवराजः (पृ० १३१) ।

५. अत्र मनोरमायां पाठभेद उपलभ्यते । तथा हि—"शेवयह्व दशपादीवृत्तिरित्याह 'यात्यनेनेति' । अन्ये तु यजतेर्जकारस्य हकारो निपात्यत इत्याहुः (द्र०—उज्ज्वल० पृ० ५७) । यह्वशब्दो वैदिकनिघण्टौ (३।३) महन्नामसु पठितः" इति (मनो० पृ० ७६२) । अत्र तत्त्वबोधिनी (पृ० ५२७) अपि द्रष्टव्या ।

६. 'डुमिञ् ···· कर्म' इति नास्ति क.पुस्तके । तत्र लेखकेन चैवं लिखितम्—'मीवा इति आदर्शे न साधितं लेखके दोषो न देयः' इति ।

७. 'शृणाति' नास्ति ख. ग. । ८. 'शम्भुः' इति क. ।

९. 'सर्वान्' इति ग. । १०. 'प्रत्यया ···· स्वरार्थम्' इति नास्ति क. ।

## स्रुवः कित्[1] ॥१३०॥ ( पं० उ० २।६२ )

स्रुवो धातोर्वप्रत्ययो भवति स किच्च। स्रु गतौ भौ०। स्रवन्ति तस्मात् हवींषि इति **स्रुवः**—यज्ञभाण्डम्[2]। अपादानम् ॥

## शपेर्वन् ॥१३१॥ ( पं० उ० ४।१०१ पाठा० )

शपेर्धातोर्वन् प्रत्ययो भवति। शप आक्रोशे भौ०। शपति शप्यते वा **शप्वः**—आक्रोशः। कर्त्ता कर्म च ॥

## उल्वादयश्च ॥१३२॥ ( पं० उ० ४।१०२ )

उल्वादयः शब्दा निपात्यन्ते वन्प्रत्यये निरुद्धाः। ली[3] श्लेषणे, ला आदाने अ०, उत्पूर्वः। अनयोर्धात्वोः स्वरोपसर्गान्त्यलोपो निपात्यते। उल्लीयते उल्लाति वा **उल्वम्**—बभ्रुजरायुतक्षकाः[4]। कर्त्ता। विदि अवयवे भौ०, रूप विम्बे भौ०[5], रूप रुपक्रियायां चौ०। विन्देर्दकारलोपो निपात्यते, रूपतेर्वि-आदेशो निपात्यते मुमागमश्च। विद्यते रूप्यते वा **विम्बम्**—प्रतिमा, दृश्या,[6] देहश्च। कर्म। शल श्वल आशुगमने। अस्योपधाया उत्वं निपात्यतेऽगुणत्वं च। शलति शल्यते वा **शुल्वम्**—स्त्रीपुरुषयोगः,[7] ताम्रं च[8]। कर्त्ता कर्म च ॥

॥ वकारः[9] ॥

॥ इति दशपादी-उणादिवृत्तावष्टमः पादः ॥

———

१. 'स्रवः' इति क.।
२. 'यज्ञभाण्डम्' इति नास्ति क.।
३. 'लीङ्' इति क.।
४. 'बभ्रुः' इत्येव क.।
५. 'रूप बिम्बे भौ०' नास्ति क.।
६. 'दृश्यम्' इति क.। नास्ति ग.।
७. 'स्त्रीपुंस्योगः' इति क.।
८. 'ताम्रं च' इति नास्ति क.।
९. 'इति वकारान्ताः' इति ग.।

# ॥ अथ नवमः पादः ॥

**क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम्[1] ॥१॥ (पं० उ० ५।६३)**

क्लिशेर्धातोः कन्[2] प्रत्ययो भवति, उपधाया ईकारश्चान्तादेशो लकारस्य च लोपो नाम् चागमः। क्लिश उपतापे दि०, क्लिशू विबाधने क्र्०। क्लिश्यति क्लिश्नाति वा कीनाशः—कदर्यो जनः। कर्त्ता॥

**क्लिशेरन्[3] लोपश्च लः[4] ॥२॥ (पं० उ० ५।३५)**

क्लिशेरन्[5] भवति लोपश्च लस्य[6]। क्लिश्नाति क्लिश्यते वाऽनेनेति[7] केशः[8]। कर्त्ता करणं[9] च॥

॥ शकारः[10] ॥

**अविमह्योष्टिषच् ॥३॥ (पं० उ० १।४४)**

आभ्यां धातुभ्यां टिषच् प्रत्ययो भवति। अव रक्षणादौ भ्वा०। अवतीति अविषः—राजा समुद्रश्च। कर्त्ता। अविषी—गङ्गा। मह पूजायायां

---

१. 'नाम् च' इति ङ.।

२. 'ककारः कित्कार्यार्थः' इति श्वेतवनवासी (पृ० २३०)। अयुक्तं चैतत् कित्कार्यस्याभावात्। तदाहोज्ज्वलदत्तः—'ककारानुबन्धस्य फलं न दृश्यते' इति (पृ० २१६)।

३. 'रश्' इति क.।

४. 'लोपो लः' इति ङ.। एतत्सूत्रे 'क्लिशेः, लोपश्च लः' इत्यंशस्य पूर्वसूत्रादनुवृत्तिसम्भवेऽपि पुनः पाठस्य किं प्रयोजनमिति न प्रतीमः।

५. 'क्लिश्यति क्लिश्नाति······लस्य' इति नास्ति ख. ग.।

६. 'वातेरिति' इति क.। ७. 'कचः' इत्यधिकः पाठः ख.।

८. 'कर्म' इति क.।

९. इतोऽग्रे 'कलेरशन्। कलेरशन् प्रत्ययः। कलयत्युदकमिति कलशः। घटः॥ इणस्तुन्। इणः अशन् प्रत्ययः नुमागमश्च। एतीति एतशः। ऋषिः॥' इत्यधिकः पाठ उपलभ्यते च.पुस्तके।

१०. 'इति शकारः' इति ख.। 'इति शकारान्ताः' इति ग.।

चौ० । मह्यतेऽसाविति **महिषः**—महीपतिः[1], पशुर्वा । कर्म । **महिषी**—प्रधान-स्त्री । टित्करणं ङीबर्थम्[2] ॥

## रुहेर्वृद्धिश्च ॥४॥ ( पं० उ० १।४६ )

रुहेर्धातोष्टिषच् प्रत्ययो भवति वृद्धिश्च धातोः । रुह बीजजन्मनि । रोहत्यत्यर्थमिति **रौहिषः**—तृणजातिः । कर्त्ता । **रौहिषी**—दूर्वा ॥

## तवेर्णिद् वा ॥५॥ ( पं० उ० १।४७ )

तवेर्धातोष्टिषच् प्रत्ययो भवति णित्संज्ञको वा । णित्पक्षे[3] वृद्धिः । तव इति सौत्रो धातुः[4] । तवतीति **ताविषः**, **तविषः**—स्वर्लोकः । कर्त्ता । **ताविषी, तविषी**—गङ्गा ॥

## नञि व्यथेः ॥६॥ ( पं० उ० १।४८ )

नञ्युपपदे व्यथेर्धातोष्टिषच् प्रत्ययो भवति । व्यथ भयचलनयोः[5] भौ० । न व्यथते इति **अव्यथिषः**—सूर्याग्निभूमयः । कर्त्ता ॥

## सहेः षष् लुक् च[6] ॥७॥ ( पं० उ० १।१४५ )

सहेर्धातोष्टिषच्[7] प्रत्ययो भवति, 'षष्' इत्ययं चादेशो धातोः, लुक् च प्रत्ययस्य । षह मर्षणे । सहन्त इति **षट्**—संख्या । कर्त्ता ॥

## परौ व्रजेः षः पदान्ते क्विप् दीर्घश्च ॥८॥ ( पं० उ० २।५६ )

परावुपपदे व्रजेर्धातोः क्विप् प्रत्ययो भवति, दीर्घश्च, पदान्ते वर्तमानस्य जकारस्य षकारः[8] । व्रज गतौ भौ० परिशब्द[9]पूर्वः । परिव्रजतीति[10]

---

१. 'राजा' इति क. ।
२. 'षित्करणं ङीषर्थम्' इति ख. ग. । 'टित्वात् ङीष्' इति क. ।
३. 'णित्पक्षे' इति नास्ति ख. ग. ।
४. 'तविः सौत्रो धातुर्वृद्ध्यर्थः' इति देवराजः (पृ० २१७, २६४) ।
५. 'ताडने' इति क. ।
६. 'कन्' इत्यधिकं ख. च. ज. । 'सहः षट् लुक् च क्विप्' इति ङ. ।
७. 'कन्' इति ख. ।
८. 'षकारादेशो भवति' इति क. ।
९. 'शब्द' इति नास्ति क. ।
१०. 'परित्यज्य सर्वं व्रजतीति' इति ग. ।

**परिव्राट्**—यतिः । कर्त्ता । पदान्त इति किम्—परिव्राजौ परिव्राजः[1] ॥

## कॄतॄभ्यामीषन् ॥९॥ ( पं० उ० ४।२७ )

आभ्यामीषन् प्रत्ययो भवति । कॄ विक्षेपे तौ० । कीर्यते तदिति **करीषम्**—गोमयविकारः । कर्म । तॄ प्लवनतरणयोः भ्वौ० । तरतीति **तरीषः**—समर्थः । कर्त्ता । तरन्त्यनेनेति **तरीषः**—प्लवः । करणम् ॥

## शॄपॄभ्यां कित् ॥१०॥ ( पं० उ० ४।२८ )

आभ्यामीषन् प्रत्ययो भवति किच्च । शॄ हिंसायां क्र्यौ० । शृणन्तीति **शिरीषः**—वृक्षः[2] । कर्त्ता । पॄ पालनपूरणयोः । पृणाति पूर्यते वा तेनोदरमिति **पुरीषम्**—विष्ठा[3] । कर्त्ता करणं[4] च ॥

## अर्जेर्ऋज च ॥११॥ ( पं० उ० ४।२९ )

अर्जेर्धातोरीषन् प्रत्ययो भवति किच्च ऋज इत्ययं चादेशः । अज सर्ज अर्जने भ्वौ० । अर्ज्यते तदिति **ऋजीषम्**[5]—धनम् । कर्म ॥

## अम्बरीषः[6] ॥१२॥ ( पं० उ० ४।३० )

अम्बरीष इत्ययं शब्दो निपात्यते ईषन्प्रत्यये । डुपचष् पाके भ्वौ० । अस्यामुडागमः, पकारस्य बकारः, चकारस्य रेफश्च निपात्यते[7] । पचन्त्यस्मिन्निति **अम्बरीषम्**—भ्राष्ट्रम् । अधिकरणम् । आप्नोतेर्वा अम्बादेशो रुडागमश्च । आप्यते वायुभिरिति **अम्बरीषम्**—आकाशम् । कर्म[8] ॥

## ऋनहिभ्यामुषन्[9] ॥१३॥ ( पं० उ० ४।७५ )

---

'परिपूर्वो व्रजतिरनेकार्थत्वात् त्यागे वर्तते' इति श्वेतवनवासी (पृ० ७७) ।

१. 'परिव्रजन्तीति परिव्राजः' इति ख. । २. समर्थः' इति ग. ।

३. 'विट्' इति क. । ४. 'कर्म' इति ग. ।

५. सोमस्यावशिष्टो भाग (फोक) इति याज्ञिकाः ।

६. 'अम्बरीषम्' इति च. ।

७. 'डुपचष्······निपात्यते' इत्यस्य स्थाने 'पचेः अम्बादेशः रक् चागमः' इति क.पाठः । ८. 'आप्नोतेर्वा······कर्म' इति नास्ति क. ।

९. 'उषच्' इति क. ङ. च. । सूत्रमिदं देवराजेनापि स्वनिघण्टुभाष्य उद्धृतम् (पृ० ५३, १८०) । पञ्चपाद्यां पाठभेदोऽस्ति ।

आभ्यामुषन्[1] प्रत्ययो भवति। ऋ गतौ भ्वा० जौ०। ऋच्छति ईर्यत्ति वा अरुषः—प्राणः। कर्त्ता। णह बन्धने दे०। नह्यतीति नहुषः—राजा। कर्त्ता॥

## पुरः कुषन् ॥१४॥ ( पं० उ० ४।७६ )

पॄ इत्येतस्मात् कुषन् प्रत्ययो भवति। पॄ पालनपूरणयोः क्र्या०। पृणातीति पुरुषः[2][3]—पुमान्[4]। कर्त्ता॥

## पॄकलिभ्यामुषच् ॥१५॥ ( पं० उ० ४।७८ )

आभ्यामुषच्[5] प्रत्ययो भवति। पॄ पालनपूरणयोः क्र्या०। पृणातीति परुषः—अमृदुः। कर्त्ता। कल शब्दसंख्यानयोः। कलति कल्यते वा कलुषः—अप्रसन्नः। कर्त्ता कर्म च॥

## पीयेरूषन् ॥१६॥ ( पं० उ० ४।८० )

पीयेर्धातोरूषन् प्रत्ययो भवति। पीयतिः सौत्रो धातुः। पीयत इति पीयूषम्[6]—नवदुग्धविकारः, सुधा च। कर्त्ता॥

---

वेदे नहुषशब्द आद्युदात्तः, अरुषशब्दश्चान्तोदात्त उपलभ्यते। तस्मादुभयस्मिन्नपि पाठे इतरस्मिन् स्वरव्यत्ययो द्रष्टव्यः।

१. द्र०—पूर्व पृ० टि० ६।

२. उज्ज्वलदत्तः—'पुर अग्रगमने, अतः कुषन्' इत्याह (पृ० १६१)। छलारी-टीकाकारो नरसिंहस्त्वाह—"पुर इत्यनेन 'उदोष्ठ्यपूर्वस्य' (अ० ७।१।१०२) इत्यनेन कृतोत्वस्य ॠकारान्तस्यैव ग्रहणम्, न वृत्तिकाररीत्या 'पुर अग्रगमने' इत्यस्य" इति (अ० १ पृ० ६ क.)।

अत्राह श्वेतवनवासी—'अनुकार्यानुकरणस्य भेदात्, अर्थस्य विवक्षितत्वात्, अर्थवत्त्वे प्रातिपदिकत्वेऽनुकरणस्याधातुत्वात्, अधातुरिति निषेधाभावे च पञ्चम्येकवचने उत्त्वे च पुर इति निर्देशः' इति (पृ० १५५)।

३. अत्र निरुक्तम्—'पुरुषः पुरिषादः, पुरि शयः पूरयतेर्वा, पूरयत्यन्तरपुरुषमभिप्रेत्य' इति (२।३)॥ 'पुरि वसतीति पुरुष इति नैरुक्ताः' इति श्वेतवनवासी (पृ० १५५)।

४. 'पुमान्' नास्ति क.।

५. 'उषन्' इति क. ग.। वेदे 'परुष' शब्दोऽन्तोदात्त उपलभ्यते।

६. अत्राहोज्ज्वलदत्तः—"बहुलवचनात्पक्षे गुणोऽपि। 'स्मृतं पीयूषं नवक्षीरेऽमृतेऽपि वा। सप्तरात्रप्रसूताया क्षीरं पेयूषमुच्यते' इति हारावली। 'पीयूषोऽभिनवं पयः' इत्यमरः(२।६।५४)। बाहुलकादङ्केरप्युषन्। अङ्कुषो नकुलः" इति (पृ० १६१)।

## मूङ्युवोर्लोपश्च ॥१७॥ ( पं० उ० ४।८१ नारा० )

आभ्यामूषन् प्रत्ययो भवति धातोः स्वरलोपश्च[1]। मूङ् बन्धने भ्वा०। मवते मूयते वा मूषः—सुवर्णविलापन[2]भाण्डम्। कर्त्ता कर्म च[3]। यु मिश्रणे[4] अ०। यौति यूयते वा यूषम्—व्यञ्जनम्[5]। कर्त्ता कर्म च[6]॥

## मस्जेर्नुम् च ॥१८॥ ( पं० उ० ४।८१ )

मस्जेरूषन् प्रत्ययो भवति नुम् चागमः। टुमस्जो शुद्धौ। मज्जत्यस्यामिति मञ्जूषा[7]—द्रोणी। अधिकरणम्॥

## अङ्गूषः ॥१९॥ ( पं० उ० ४।८२ )

अङ्गूष इत्ययं शब्दो[8] निपात्यते ऊषन्प्रत्यये। अगिर्गत्यर्थः। अङ्गतीति अङ्गूषः—गजबाणवेगाः[9]। कर्त्ता॥

बाहुलकादन्येऽपि[10] निपात्यन्ते। स्खल सञ्चलने भ्वा०। स्खलतेः सकारलोपो निपात्यते। स्खलति स्खल्यते वा खलूषः[11]—म्लेच्छः[12]। कर्त्ता कर्म च[13]। फल निष्पत्तौ भ्वा०। फलतीति फलूषः—वीरुत्। कर्त्ता। वृञ् वरणे, वृङ् सम्भक्तौ। व्रियत इति[14] वरूषः—भोजनम्। कर्म[15]॥

## विषेर्व्याप्तिकर्मणि कन् ॥२०॥ ( पं० उ० ५।४८ )

---

१. 'उकार०' इति ग.। 'धातुस्वर०' इति क.।
२. '०विलय०' इति ख.।
३. 'सुवर्ण......कर्म च' इति नास्ति ग.।
४. 'मिश्रणामिश्रणयोः' इति ग.।
५. 'मण्डम्' इति ग.।
६. 'यु मिश्रणे......कर्म च' इति नास्ति क.।
७. 'मञ्जूषः' इति ख.।
८. 'अयम्' इत्येव क.।
९. 'अङ्गूषः। अनक्तेर्गत्वं निपात्यते। अनक्तीति अङ्गूषः—बाणः खगश्च' इति क.।
१०. 'बहुलवचनादन्येऽपि' इति क.।
११. 'स्खलति खलूषः। अथवा खल सञ्चये भ्वा०। खलतीति खलूषः' इति क.।
१२. 'म्लेच्छजातिः' इति क.। 'गजबाणवेगाः' इति ग.।
१३. 'कर्म च' इति नास्ति क.।
१४. 'वृणोति वृणीते वा' इति क.।
१५. 'कर्त्ता' इति क.।

विषेर्धातोः कन् प्रत्ययो भवति व्याप्तिकर्मणि[1] गम्यमाने[2]। विष्लृ व्याप्तौ। वेवेष्टीति **विषम्**—प्राणहरद्रव्यम्[3]। कर्त्ता॥

॥ षकारः[4] ॥

**वृतवदिहनिकमिकषियुमुचिभ्यः सः ॥२१॥ ( पं० उ० ३।६१ )**

एभ्यः सः प्रत्ययो भवति। वृञ् वरणे क्र०। वृणातीति **वर्षम्**[5]—संवत्सरः। कर्त्ता। तॄ प्लवनतरणयोः भ्वा०। तरन्त्यनेनेति **तर्षः**[6]—प्लवः, हर्षो वा। करणम्। वद व्यक्तायां वाचि भ्वा०। वदत्यभीक्ष्णं मातरमिति[7] **वत्सः**—गोबालः, पुत्रस्य चाख्यानम्[8]। कर्त्ता। हन हिंसागत्योः अ०। हन्त्यध्वानमिति **हंसः**[9]—पक्षी। कर्त्ता। कमु कान्तौ भ्वा० प्रकृत्यन्तरं ण्यन्तो वा। कामयते काम्यते वा **कंसः**[10]—मानभाण्डम्, राजा च। कर्त्ता कर्म च। कष

---

१. अत्राह श्वेतवनवासी—"कर्मशब्दः क्रियावाची धातुवाच्यत्वेन क्रियायाः प्रत्यासत्तेः, न त्वीप्सिततमं विपर्ययात्। व्याप्तिक्रियायां वर्तमानादित्यर्थः। मनुष्यगजतुरगाः (?) शरीरं व्याप्नोतीति विषं हालाहलम्। ननु 'विष्लृ व्याप्तौ' एव पठ्यते। नैतदेवम्, चौरादिकोऽप्यस्ति 'विष विप्रयोगे' इति। अतस्तस्मान्मा भूदिति व्याप्तिकर्मणीत्युच्यते। एवमपि संज्ञाग्रहणादुणादिसूत्रे व्याप्तावेव भविष्यति। एवं तर्हि तस्यैव प्रपञ्चार्थम्। 'घञर्थे कविधानम्' (अ० ३।३।५८) इति वा इगुपधलक्षणे वा कप्रत्यये रूपे सिद्धे स्वरार्थं प्रत्ययान्तरविधानम्" इति (पृ० २२५)।

२. 'व्याप्तावर्थे' इति क.। ३. 'प्राणहरद्रव्यम्' नास्ति क.।

४. 'षकारः' इति नास्ति ख. ग.।

५. अत्राह श्वेतवनवासी—"तितुत्र (अ० ७।२।९) इति इट्प्रतिषेधः।…… यस्तु ऋतुवाची स स्त्रीलिङ्गो नित्यं बहुवचनान्तश्च। 'वर्षम्' इत्यच्प्रत्ययान्तोऽप्यस्ति। 'अज्विधौ भयादीनामुपसंख्यानं नपुंसकभावे क्तनिवृत्त्यर्थम्' (अ० ३।३।५६ वा०) इति। वर्षणमित्यपि भवति 'वृषभो वर्षणात्' [महाभाष्ये नवाह्निके] इति भाष्यकारवचनात्" इति (पृ० ११४)।

६. 'वर्सम्, तर्सम्' इति षत्वं नेष्यते भाष्ये (८।३।५९)। (द्र०—मनो० ७७८)।

७. 'मातरम्' इति नास्ति क.। ८. 'प्रियमाख्यानं च' इति क.।

९. हम्मतेर्हंसः। कः पुनराह 'हम्मतेर्हंस' इति। किं तर्हि, हन्त्यध्वानमिति' इति महाभाष्यम् (अ० ६।१।१३)।

१०. अत्राहोज्ज्वलदत्तः—"कसि गतिशासनयोरित्यस्मात् पचाद्यचि कंस इति धातुप्रदीपटीका" इति (पृ० ११८)।

हिंसायां भौ० । कष्यतेऽसौ गवादिभि[1]रिति **कक्षः**—तृणम् । कर्म । यु मिश्रणे अ० । यूयत इति **योषा**—स्त्री । कर्म । मुच्लृ मोक्षणे भौ० । मोचनं **मोक्षः**—अपवर्गः । भावः[2] ॥

## प्लुषेरच्चोपधायाः ॥२२॥ ( पं० उ० ३।६२ नारा० )

प्लुषेर्धातोः सः प्रत्ययो भवति, अच्च भवत्युपधायाः[3] । प्लुष दाहे दै० । प्लुष्यतीति **प्लक्षः**—नक्षत्रं वृक्षश्च । कर्त्ता ॥

## मनेर्दीर्घश्च ॥२३॥ ( पं० उ० ३।६२ )

मनेर्धातोः सः प्रत्ययो भवति दीर्घश्च । मन ज्ञाने दै० । मन्यते तदिति **मांसम्**—पिशितम् । कर्म ॥

## अशेर्देवने ॥२४॥ ( पं० उ० ३।६३ )

अशेर्धातोः सः प्रत्ययो भवति देवनेऽर्थे । अशू व्याप्तौ सौ०, अश भोजने क्र्या० । अश्नुते अश्नाति वा तैरर्थानिति **अक्षाः**—पाशकाः । **अक्षाणि**—इन्द्रियाणि रथचक्राणि च । कर्त्ता करणं च[4] ॥

## स्नुव्रश्चिकृत्यृषिभ्यः कित् ॥२५॥ ( पं० उ० ३।६४ )

एभ्यः सः प्रत्ययो भवति कित्संज्ञकः[5] । ष्णु प्रस्रवणे अ० । स्नौति स्नूयते वा **स्नुषा**—पुत्रयोषित्[6] । कर्त्ता कर्म च । ओव्रश्चू छेदने तौ० । वृश्चत्यातपमिति **वृक्षः**—तरुः[7] । कर्त्ता । कृती छेदने तौ० । कृन्ततीति **कृत्स्नम्**—दुःखजातम् । ऋषी गतौ तौ० । ऋषतीति **ऋक्षम्**—नक्षत्रम् । कर्त्ता ॥

## ऋषेर्जातौ ॥२६॥ ( पं० उ० ३।६५ )

ऋषेर्धातोः सः प्रत्ययो भवति कित्संज्ञो जातौ गम्यमानायाम् । ऋषी

---

१. 'गवादिभिः' इति नास्ति क. ।

२. 'भावः' नास्ति क. । ३. 'अच्चोपधायाः' इति क. ।

४. 'अशू व्याप्तौ सौ० । अश्नुतेऽनर्थमित्यक्षः—पाशः । अश्नुवन्ति तैरर्थमिति अक्षाः । कर्त्ता करणम् । अक्षाणीन्द्रियाणि रथचक्राणि वा' ('च' इति ख.) इति ख. ग. । ५. 'किच्च' इति क. ।

६. 'पुत्रजाया' इति क. । ७. 'वृश्च्यत इति वृक्षः—पादपः' इति क. ।

गतौ। ऋषतीति **ऋक्षः**[1]—क्षुद्रश्वापदः[2]। कर्त्ता[3]॥

## मासश्च ॥२७॥

मास इत्ययं शब्दो निपात्यते। मा माने। माति मीयते वा **मासः**। कर्त्ता कर्म च॥

अथवा मा इत्येतस्माद् धातोः सः प्रत्ययो भवतीत्यर्थः। स इत्यनुवर्तमाने पुनः सग्रहणं कित्त्वाभावार्थम्[4]॥

## उन्दिमिगुधिकुषिभ्यः किच्च ॥२८॥ ( पं० उ० ३।६८ उज्ज्वल० )

एभ्यः सः प्रत्ययो भवति कित्संज्ञः[5]। उन्दी क्लेदने रौ०। उनत्तीति **उत्सः**—स्रोतः। कर्त्ता। अम गत्यादिषु भौ०। अमति अम्यते वा **अंसः**—स्कन्धदेशः। कर्त्ता कर्म च। गुध रोषे क्र्यै०, गुध परिवेष्टने दै०। गुध्नाति गुध्यति गुध्यते वा **गुत्सः**—रोषः, तृणजातिश्च। कर्त्ता कर्म च। कुष निष्कर्षे क्र्यै०। कुष्णातीति **कुक्षः**—गर्दभः[6]। कर्त्ता॥

## गृधिपत्योर्दशौ[7] च ॥२९॥ ( पं० उ० ३।६९ )

आभ्यां सः प्रत्ययो भवति, किच्च, यथासंख्यं च दशावादेशावान्तादेशौ भवतः। गृधु अभिकाङ्क्षायां दै०। गृध्यतीति **गृत्सः**[8]—अभिलाषुकः।

---

१. 'पूर्वस्यैवायं प्रपञ्चः' इति श्वेतवनवासी (पृ० ११५)। 'पूर्वेण सिद्धेऽप्युक्तेः फलं चिन्त्य'मिति नारायणः (पृ० ६६)। 'पूर्वसूत्रेण सिद्धे जातौ दृष्टमिदं प्रपञ्चार्थम्' इत्युज्ज्वलदत्तः (पृ० ११९)।

२. 'वानरः' इति नारायणः (पृ० ६६)। 'भल्लूकः' इत्युज्ज्वलदत्तः (पृ० ११९)।

३. सूत्रमिदं सवृत्ति नास्ति क.पुस्तके।

४. 'मा इत्येतस्मात् सप्रत्ययः। मा माने आ०, माङ् माने जो०। माति मिमीते मीयते वाऽनेन संवत्सर इति मासः। कालपरिमाणम्। कर्त्ता करणं च। पुनः सप्रत्ययकरणमीत्वाभावार्थम्। अथवा मास इति निपात्यते' इति क. पाठः।

वस्तुतस्तूत्तरसूत्रे किद्ग्रहणं ज्ञापकं कितोऽनुवृत्तेः। तस्मात् निपातनपक्ष एव साधुः।

५. 'कित्' इति क.।

६. 'गर्दभः' नास्ति क.।

७. 'दषौ' इति ग. घ. ज.।

८. अत्राहोज्ज्वलदत्तः—'गृधेरादिचतुर्थनिवृत्त्यर्थो दकारो विधीयते' इति (पृ० १२०)।

कर्त्ता। पतलृ गतौ भौ०। पततीति **पक्षः**[1]—मासार्धः, अङ्ग ह सहायश्च[2]। कर्त्ता[3]॥

## अर्चिशुचिहुसृपिच्छादिच्छृदिभ्य इसिः ॥३०॥ (पं० उ० २।१०६)

एभ्यो धातुभ्य इसिः प्रत्ययो भवति। अर्च पूजायां भौ०। अर्चति अर्च्यते वा **अर्चिः**—हेतिः[4]। कर्त्ता कर्म च। शुच शोके भौ०। शोचति शुच्यते वा **शोचिः**—शोकः। कर्त्ता कर्म च। हु दानादनयोः जौ०। हूयत इति **हविः**—मन्त्रपूतमग्निहवनम्। कर्म। सृप्लृ गतौ भौ०। सर्पतीति **सर्पिः**—घृतम्। कर्त्ता। छद अपवारणे चौ०। छादयदीति **छदिः**—चर्म, आवरणं च। कर्त्ता। छृदिर् दीप्तिदेवनयोः रौ० ण्यन्तः। छर्दयतीति **छर्दिः**—वमिः[5] व्याधिः। कर्त्ता॥

## बृंहेर्नलोपश्च ॥३१॥ (पं० उ० २।११०)

बृंहेर्धातोरिसिः प्रत्ययो भवति नलोपश्च। बृहि वृद्धौ भौ०। बृंहति बृंह्यते वा **बर्हिः**—वेद्यास्तरणम्। कर्त्ता कर्म च॥

## द्युतेरिसिन्निजादेश्च जः ॥३२॥ (पं० उ० २।१११)

द्युतेर्धातोरिसिन् प्रत्ययो भवति आदेश्च जकारादेशः। द्युत दीप्तौ भौ०। द्योतत इति **ज्योतिः**—दीप्तिः, ग्रहनक्षत्राग्नयः[6]। कर्त्ता॥

## वसौ रुचेः संज्ञायाम् ॥३३॥ (पं० उ० २।११२)

वसावुपपदे रुचेर्धातोरिसिन् प्रत्ययो भवति संज्ञायां गम्यमानायाम्। रुच दीप्तौ भौ० वसुपूर्वः। वसुभ्यो[7] रोचते, वसवोऽस्मिन् रोचन्त[8] इति वा

---

१. उज्ज्वलदत्तस्त्वाह—'सविधौ पचिग्रहणेनैव सिद्ध इह ककारग्रहणं वैचित्र्यार्थम्' इति (पृ० १२०)।

२. 'अां ·····श्च' इति ख. पाठः। अत्र क.ख.योः कश्चित् पाठस्त्रुटित इति प्रतिभाति। ग.पुस्तके तु नास्ति।

३. इतोऽग्रे 'षकारसहितः सकारः' इति ख.। 'षकारसकारसहितः' इति क.। ग.पुस्तके स्थानमत्र रिक्तं वर्तते। वस्तुतस्त्वयुक्तोऽयं पाठः, सकारान्तानामपरिसमाप्तेः। प्रक्रियाकौमुदीटीकायां चात्र नोपलभ्यते। ४. 'ज्वाला' इति क.।

५. 'वमिः' नास्ति क.। ६. 'ज्योतिः—ग्रहनक्षत्रादयः' इति ख. ग.।

७. 'वसूनाम्' इति ख. ग.। ८. 'वसवोऽस्मिन् रोचन्त' नास्ति क.।

**वसुरोचिः**[1]—क्रतुः। कर्त्ता अधिकरणं च॥

## स्तुवः कित्[2] ॥३४॥

स्तौतेर्धातोरिसिन् प्रत्ययो भवति कित्संज्ञकः[3]। ष्टुञ् स्तुतौ अ०। स्तौति स्तूयन्तेऽस्मिन् देवा इति वा **स्तुविः**—स्तोता, यज्ञश्च। कर्त्ता अधिकरण च॥

## सहेर्धश्च[4] ॥३५॥ (पं० उ० २।११४)

सहेरिसिन् प्रत्ययो भवति धश्चान्तादेशः। षह मर्षणे भौ०। सहत इति **सधिः**—भूमिः। कर्त्ता॥

## पिबतेस्थुक् च ॥३६॥ (पं० उ० २।११५)

पिबतेरिसिन् प्रत्ययो भवति थुक् चागमः। पा पाने भौ०। पिबति पीयते वा **पाथिः**—आदित्यः[5]। कर्त्ता कर्म च॥

## जनेरुसिः ॥३७॥ (पं० उ० २।११६)

जनेर्धातोरुसिः प्रत्ययो भवति। जनी प्रादुर्भावे दै०[6]। जायत इति **जनुः**—जन्म। कर्त्ता॥

## मनेर्धश्छन्दसि ॥३८॥ (पं० उ० २।११७)

मनेर्धातोरुसिः प्रत्ययो भवति छन्दसि विषते धश्चान्तादेशः। मन ज्ञाने दै०, मनु अवबोधने ता०। मन्यते मनुते वा **मधुः**—पवित्रम्। कर्त्ता॥

## अर्त्तिपृवपियजिधनितनि[7]तपिभ्यो नित् ॥३९॥ (पं० उ० २।११८)

---

१. अत्राहोज्ज्वलदत्तः—'बाहुलकात् केवलादपि रुचेरिसिन्। रोचिर्ज्वलिति धातुप्रदीपिका' इति (पृ० ९७)।

२. पञ्चपाद्यां 'भुवः कित्' (पं० उ० २।११३) इति पठित्वा 'भुविः' इति पदं व्युत्पाद्यते।

३. 'किच्च' इति क.।

४. 'सहो धश्च' इति ङ.। 'सहो घ च' इति क.।

५. 'पानं च' इत्यधिकं क.।

६. 'जन जनने' इति ख. ग.।

७. 'तनिधनि' इति ङ. ज.। 'तनि' इति नास्ति क.। 'तनुः'शब्दो न साध्यते क.ख.पुस्तकयोः।

एभ्यो धातुभ्य उसिः प्रत्ययो भवति छन्दसि विषये,[१] नित्संज्ञकः। ऋ गतौ। ऋच्छत्यर्यते वा अरुः—आदित्यः, प्राणो वा। कर्त्ता कर्म च। पॄ पालनपूरणयोः क्र्यॆ०। पृणाति पूर्यते वा परुः—समुद्रः[२]। कर्त्ता कर्म च। डुवप बीजतन्तुसन्ताने भ्वा०। उप्यते प्राक्कर्मभिरिति वपुः—शरीरम्[४]। कर्म। यज देवपूजादौ भ्वा०। इज्यतेऽनेनेति[५] यजुः—वेदः। करणम्[६]। धन धान्ये जौ०। दधन्तीति धनुः—शरासनम्। कर्त्ता[७]। तनु विस्तारे। तनोतीति तनुः—शरीरम्। कर्त्ता[८]। तप सन्तापे भ्वा०। तपतीति तपुः—सूर्याग्नि-शक्राः[९]। कर्त्ता॥

छन्दसीति केचिन्नानुवर्त्तयन्ति[१०]॥

## एतेर्णिच्च ॥४०॥ ( पं० उ० २।१२० )

एतेरुसिः प्रत्ययो भवति णिच्च। इण् गतौ अ०। एतीति आयुः—जीवनम्। कर्त्ता॥

## चक्षेः शिच्च ॥४१॥ ( पं० उ० २।१२१ )

चक्षेर्धातोरुसिः प्रत्ययो भवति स शिच्च। चक्षिङ् व्यक्तायां वाचि अ०। चष्टे रूपमिति चक्षुः—लोचनम्। कर्त्ता॥

शित्करणं सार्वधातुकार्थम्[११]॥

## बहुलमन्यत्रापि ॥४२॥ ( पं० उ० २।१२२ )

बहुलमन्यस्माद् धातोरुसिः प्रत्ययो भवति। तेन संपूर्वात् चक्षिङः ख्याञादेशो वा, आकारलोपश्च स्यान्नः। संचष्टे इति संचक्षुः, परिचष्टे इति

१. 'छन्दसि विषये' इति नास्ति क.।
२. 'राजा, समुद्रश्च' इति क.। ३. 'प्राक्कर्मभिः' नास्ति ख. ग.।
४. 'तेजः, रूपं च' इति क.। ५. 'इज्यन्तेऽनेन देवता इति' इति क.।
६. 'इज्यत इति यजुः—छन्दोनाम। कर्म' इति ख. ग.।
७. 'धान्ये। धनति धन्यते वा······कर्त्ता कर्म च' इति क.।
८. 'तनु····· कर्त्ता' इति नास्ति क. ख.।
९. 'सूर्याग्नी शक्रश्च' इति क.।
१०. 'छन्दसीति····· यन्ति' इति नास्ति क.।
११. 'शित्····· कार्थम्' इति नास्ति क.।

**परिचक्षुः, संख्युः, परिख्युः** । अशित्त्वात् ख्याञादेशः, शित्त्वा[1]च्चाकारलोपः ॥ बाहुलकाल्ल्युट् । **विचक्षणः, व्यतिसंचक्षाः, नृचक्षः** इति । कर्त्ता[2] ॥

## दमेर्डोस् ॥४३॥ ( पं० उ० २।७० )

दमेधातोर्डोस्[3] प्रत्ययो भवति । दमु उपशमे दे० प्रकृत्यन्तरं ण्यन्तो वा । दाम्यति दमयति वा **दोः**—बाहुः । कर्त्ता ॥

---

१. शित्त्वे सति **'सार्वधातुकमपित्'** (अ० १।२।५) इति ङिद्वदतिदेशो भवति । ततश्चाकारलोपः ।

२. अत्र सूत्रवृत्तौ क.पुस्तके पाठभेदः—

'बहुलमन्यत्रापि धातोः सोपसर्गादपि चक्षिङ उसिप्रत्ययो विहितः स बहुलं शिद् भवति । बहुलग्रहणं यथेष्टसिद्ध्यर्थम् । तेन क्वचिच्छित्त्वं, क्वचिदशित्त्वं, क्वचित्समावेशः । क्वचित् संचष्ट इति संचक्षुः, परिचष्ट इति परिचक्षुः, अवचष्ट इति अवचक्षुः, अनुचक्षुः । अशित्त्वात् ख्याञादेशः—संख्युः, बाहुलकादाकारलोपः । समावेशन—संचख्युः, अनुचख्युः । अशित्त्वात् ख्याञादेशः शित्त्वाद्द्विकरणः, तस्य छान्दसः श्लुः । कर्त्ता ॥'

वस्तुतस्तु दशपादीवृत्तेरुभावपि पाठावयुक्तौ । अन्यत्र इति सप्तम्यास्त्रल् विधीयते, तेन 'उसिः' प्रत्ययादन्यत्र ल्युडादौ शिद्वद्भावो विधेयः । नारायणश्वेतवनवासिनावित्थमेव व्याचक्षाते । तद्यथा—

'अन्यत्रापि उसिप्रत्ययादन्येष्वपि प्रत्ययेषु चक्षेः बहुलं शिद्‌भवति । विचक्षणः । न भवति आख्यानम्' इति श्वेतवनवासी (पृ० ९५) ।

'चक्षेः शित्त्वमन्यत्रापि । तेनास्यानुदात्तत्वाद् युचि ख्याञभावः । विचक्षणः' इति नारायणः (पृ० ५४) ।

वार्त्तिककारस्तु 'वर्जने प्रतिषेधः, असनयोश्च' इत्याभ्यां वार्त्तिकाभ्यां 'अवसंचक्ष्याः, परिसंचक्ष्याः, नृचक्षाः, विचक्षणः' इत्यादिषु ख्याञादेशं प्रतिषेधति (द्र० महाभाष्ये २।४।५४) ।

३. क्वचित् पञ्चपाद्यां 'डोसिः' पठ्यते तदयुक्तम् । प्रयोजनाभावादेव सस्येत्संज्ञा न भविष्यति । सित्त्वस्य पदसंज्ञायामुपयोगः । तस्य च धातुष्वभाव एव तस्मात् सकारपरित्राणाय इकारानुबन्धनमयुक्तम् । तदुक्तं नारायणेन—

"सित्त्वं खलु पदत्वार्थं तस्य धातुष्वसंभवात् ।
वैफल्यात् सस्य नेत्संज्ञा दाम्यत्यरिरनेन दोः ॥" इति (पृ० ४५) ।

## अत्यविचमितमिरभिलभिनभिपनिपतिभ्योऽसच् ॥४४॥

## ( पं० उ० ३।१११ )

एभ्योऽसच् प्रत्ययो भवति । अत सातत्यगमने भौ० । अतत्यत्यर्थमिति **अतसः**—वायुः, आत्मा च । कर्त्ता । अव रक्षणादौ भौ० । अवतीति **अवसः**—भानुः, राजा च । [कर्त्ता] । चमु अदने भौ० । चमति अस्मिन्निति **चमसः**—सोमपानभाण्डम् । अधिकरणम् । तमु काङ्क्षायां दै० । ताम्यतीति **तमसः**—अन्धकारः । कर्त्ता । रभ राभस्ये भौ० । रभत इति **रभसः**—अगम्भीरः[1] । कर्त्ता । डुलभष् प्राप्तौ । लभत इति **लभसः**—याचकः । कर्त्ता । णभ हिंसायां भौ० क्र्° । नभति नभ्नाति वा **नभसः**—आकाशः । [कर्त्ता] । पन च भौ० । पनायत इति **पनसः**—फलवृक्षः[2] । कर्त्ता । पत्लृ गतौ भौ० । पतत्यत्यर्थमिति **पतसः**—पतङ्गः[3] । कर्त्ता ॥

## वियस्तुट् च ॥४५॥ ( पं० उ० ३।११२ )

वियो धातोरसच् प्रत्ययो भवति तुट् चागमः । वी[4] गत्यादौ । वीयत इति **वेतसः**—काष्ठजातिः । कर्म ॥

## वयो णित् ॥४६॥ ( पं० उ० ३।११३ )

वयो धातोरसच् प्रत्ययो भवति णित्संज्ञकः । वय गतौ भौ० । वयत इति **वायसः**—काकः । कर्त्ता ॥

## वहियुभ्यां नित्[5] ॥४७॥ ( पं० उ० ३।११४ )

आभ्यां धातुभ्यामसच् प्रत्ययो भवति णिच्च नित्संज्ञकः । वह प्रापणे

---

१. 'गम्भीर' इति ख. । 'रभन्त्यस्मिन्निति रभसः, रभत इति रभसः गम्भीरः' इति ग. २. 'फलविशेषः' इति ग. । 'फलम्' इति क. ख. ।

३. 'आदित्यः, शलभो वा' इति क. ।

४. अत्राह तत्त्वबोधिनीकारः—"दशपादीवृत्तौ तु 'वियस्तुट् च' इति पठित्वा 'वी गतिप्रजनकान्त्यादिषु' इति धातुरुदाहृतः" इति (तत्त्व० पृ० ५४५) । एवं प्रौढमनोरमाकारोऽपि (मनो० पृ० ७८४) ।

५. 'चित्' इति क. ख. ग. ज. । 'असच्'प्रत्ययस्य चित्त्वादेव सिद्धे पुनश्चित्करणं व्यर्थमिति हेतोरपपाठोऽयं प्रतिभाति ।

भौ०। वहतीति **वाहसः**—अनड्वान्, शकटश्च। कर्त्ता। यु मिश्रणे आ०। यूयतेऽसाविति **यावसः**—घासः, अन्नं वा। कर्म॥

## पातेर्डुम्सुन्[1] ॥४८॥ ( पं० उ० ४।१८३ )

पातेर्धातोर्डुमसुन् प्रत्ययो भवति। पा रक्षणे[2]। पातीति **पुमान्**—नरः। कर्त्ता॥

## असुन्[3] ॥४९॥ ( पं० उ० ४।१८४ )

सर्वधातुभ्योऽसुन् प्रत्ययो भवति। इण् गतौ आ०। ईयत इति **अयः**—लोहः। कर्म। वय गतौ। वयते गच्छति[4] तदाशु इति **वयः**—शरीरावस्था। कर्त्ता। तप संतापे भौ०। तपति शरीरमिति **तपः**—कायक्लेशात्मकः शुद्धाचारः[5]। कर्त्ता। तिज निशाने भौ०। तितिक्षत इति **तेजः**—दीप्तिः। कर्त्ता। वर्च दीप्तौ भौ०। वर्चत इति **वर्चः**—तेजः, विष्ठा च। कर्त्ता॥

## पिबतेरिच[6] ॥५०॥ ( पं० उ० ४।१९५ )

पिबतेर्धातोरसुन् प्रत्ययो भवति, इकारश्चान्तादेशः। पा पाने भौ०। पीयत इति **पयः**—अम्भः, क्षीरं च। कर्म॥

## अशेर्धने[7] युट् च ॥५१॥ ( पं० उ० ४।१९६ )

---

१. 'पातेर्डुंसिच्' इति श्वेतवनवासी। "पुंसोऽसुङ् (अ० ७।१।८९) इत्यत्र न्यासरक्षिताभ्यां 'पुनातेर्मुक्सुक्निन्ह्रस्वश्चे'ति सूत्रं पठित्वा पुमान् साधितः" इत्युज्ज्वलदत्तः (पृ० १९१)। सूत्रमिदं नास्ति क.। २. 'पा पाने आ०' इति क.।

३. "दशपाद्यादिषु 'असुन्' इत्येव सूत्रम्" इति दीक्षितः (मनो० पृ० ८०२)। एवं तत्त्वबोधिन्यामपि (पृ० ५९०)। 'सर्वेभ्योऽसुन्' इति क.।

४. 'गच्छति' इति नास्ति क.। ५. 'शुभाचारः' इति क.।

६. '०रिच्च' इति ख. ग. ज.। '०री च' इति क. पञ्चपाद्यां च। दीर्घादेशविधानमनर्थकं ह्रस्वादेशे गुणे च कृते इष्टप्रयोगसिद्धेः। अपि च द्विमात्रिकविधानसामर्थ्याद् गुणोऽपि बाध्येत। तपरकरणमप्ययुक्तं, भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषणात्, तथा च तपरप्रयोजनाभावे तत्सामर्थ्याद् गुणोऽपि बाध्येत। तस्मादुभावपि पाठावयुक्ताविति प्रतीमः। '०रि च' इति पाठे सौत्रत्वाद् विभक्तेर्लुग् बोध्यः।

७. 'देवने' इति ङ.। 'देवने स्तुतौ' इत्युज्ज्वलदीक्षितौ।

अशेर्धातोरसुन् प्रत्ययो भवति धने गम्यमाने[1] युट् चागमः। अशू व्याप्तौ सौ०, अश भोजने क्र्या०। अश्नुते अश्नाति वाऽशुभाचारमिति[2] यशः—गुणकीर्तनं लोके। कर्त्तरि[3]॥

## उब्जेर्बले बलोपश्च ॥५२॥ (पं० उ० ४।१९७)

उब्जेर्धातोरसुन् प्रत्ययो भवति बले गम्यमाने बलोपश्च। उब्ज आर्जवे तौ०। उब्जतीति ओजः—बलम्। कर्त्तरि[4]॥

## श्वयतेः[5]सम्प्रसारणं च ॥५३॥ (पं० उ० ४।१९८)

श्वयतेर्धातोरसुन् प्रत्ययो भवति सम्प्रसारणं च। टुओश्वि गतिवृद्ध्योः भौ०। श्वयति सन्त्यक्तः प्राणैरिति शवः[6]—मृतशरीरम्। कर्त्तरि[6]॥

---

१. 'धने गम्यमाने' नास्ति क.। २. 'तदिति' इति क.।
३. 'कर्म च' इत्यधिकं क.। ४. 'उब्जन्ति तेनेति······करणम्' इति क.।
५. 'श्वेः' इति क.।

६. अत्राह निरुक्तकारो यास्कः—'अथापि प्रकृतय एवैकेषु भाष्यन्ते, विकृतय एकेषु। शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते।······विकारमस्यार्येषु भाषन्ते शव इति' इति (निरु० २।२)।

एवं भगवान् पतञ्जलिरप्याह—'शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति। विकार एनमार्या भाषन्ते शव इति' इति (महा० १।१।१ आ०)।

एतेन यास्कपतञ्जलिमते शवतेर्शव इति सुस्पष्टम्।

श्वेतवनवासी त्वाह—'शवतेर्गत्यर्थादसुनि रूपे सिद्धेऽर्थानुगमाभावात् पुनर्वचनम्। संज्ञाशब्देष्वप्यर्थानुगमादेव व्युत्पत्तिरङ्गीकार्या। यत्र सर्वात्मनार्थानुगमो नास्ति, तत्रासौ नाश्रीयते यथा तैलपायिकादौ' इति (पृ० १९६)।

योऽत्रार्थानुगमाभावरूपो हेतुरुक्तः स त्वयुक्तः। 'अर्थनित्यः परीक्षेत'(निरु०२।१)इति हि नैरुक्तानां समयः। तत्रार्थानुगमाभावेऽपि शवतेर्निवक्ष्यति यास्क इति तु महदाश्चर्यम्। अपि च श्वयतेर्निर्वचनेऽपि नैवार्थानुगमो दृश्यते। तस्मात् 'संज्ञाशब्देषु हि व्युत्पत्तेरनियमः' (श्वे० उणा० पृ० ३३) इत्यन्यत्रोक्तो हेतुरत्रापि व्यपदेष्टव्यः।

६. 'श्वयते इति शिवः—रुद्रः। कर्त्ता' इति ग.। 'शूयते············कर्म' इति क.।

## श्रयतेः स्वाङ्गे शिरः[1] किच्च ॥५४॥ (पं० उ० ४।१९९)

श्रयतेर्धातोरसुन् प्रत्ययो भवति स्वाङ्गे गम्यमाने शिर[1] इत्ययमादेशः किच्च। श्रिञ् सेवायां भ्वा०। श्रयतेऽस्मिन् शरीरमिति शिरः—उत्तमाङ्गम्। अधिकरणम्[2]॥

## अर्त्तेरुच्च ॥५५॥ (पं० उ० ४।२००)

अर्त्तेर्धातोरसुन् प्रत्ययो भवति स्वाङ्गे गम्यमाने, उच्चास्यादेशः, किच्च। ऋ गतिप्रापणयोः भ्वा०। अर्यते तद् रहसि योषिद्भि[3]रिति उरः—वक्षः। 'उरण् रपरः' (अ० १।१।५१) इति रपरत्वम्। कर्म॥

## व्याधौ शुट् च[4] ॥५६॥ (पं० उ० ४।२०१)

अर्त्तेर्धातोरसुन् प्रत्ययो भवति व्याधौ गम्यमानायाम्, शुट् चागमः। ऋ गतौ भ्वा०। अर्यन्ते तानि प्राणिभिरिति अर्शांसि—रोगः। कर्म॥

## उदके नुट् च[6] ॥५७॥ (पं० उ० ४।२०२)

उदकेऽभिधेयेऽर्त्तेर्धातोरसुन् प्रत्ययो भवति नुट् चागमः। ऋ गतौ भ्वा०। अर्यते तत् पिपासुभिरिति अर्णः—उदकम्। कर्म॥

## इण आगसि ॥५८॥ (पं० उ० ४।२०३)

इणो धातोरसुन् प्रत्ययो भवति आगसि गम्यमाने नुट् चागमः। इण् गतौ भ्वा०। एति सकलिलै[5]रिति एनः—पापम्। कर्त्ता॥

## रिचेर्धने घिच्च ॥५९॥ (पं० उ० ४।२०४)

रिचेर्धातोरसुन् प्रत्ययो भवति धने गम्यमाने[6] घिच्च। रिचिर् विरेचने

---

१. 'शिर्' इति क.।
२. 'श्रितं तस्मिन्............करणम्। भूतकालः' इति क.।
३. 'दयिताभिः' इति क.।
४. 'च' नास्ति क.।
५. 'सकलैः' इति ग.। 'सवालितेन' इति क.।
६. 'अभिधेये' इति क.।

रौ०। रिच्यते तदिति रेकः[1]—धनम्। कर्म[2]। घित्त्वात् कुत्वम्[3]॥

चायतेरन्ने ह्रस्वश्च वा[4] ॥६०॥ (पं० उ० ४।२०५)

चायतेर्धातोरसुन् प्रत्ययो भवति, अन्नेऽभिधेये[5], ह्रस्वश्च वा, नुम्[6] चागमः। चायृ पूजानिशामनयोः भ्वौ०। चाय्यते तदिति चणः[7], चाणः—अन्नम्। बाहुलकाण्णत्वम्। कर्म॥

---

१. अत्राह तत्वबोधिनीकारः—"इह दशपादीवृत्तौ नुटं नानुवर्त्य 'रेकः रेकसी' इत्युदाहृतम्। तन्न। उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात्, मण्डूकप्लुतौ मानाभावात्, लक्ष्यविसंवादाच्च। उज्ज्वलदत्तेन तु 'रिचेर्धने चित् किच्चे'ति पठित्वा नुट् चानुवर्त्य कित्वाद् गुणाभावे नुटश्चुत्वेन ञकारे 'रिञ्च'मिति साधितम्। तल्लोकवेदयोरप्रसिद्धत्वादुपेक्ष्यम्। 'नित्यं रेक्णो अमर्त्यः' (ऋ० ८।४।१८) 'परिषद्यं ह्यरणस्य रेक्णः' (ऋ० ७।४।७) 'रेक्णस्वस्त्यमिया वाममेति' (ऋ० १०।६३।१६) इत्यादिमन्त्रेषु रेक्ण इति शब्दस्य प्रसिद्धत्वात्। वैदिकनिघण्टौ च सुवर्णपर्यायेषु तथा पाठात्। वेदभाष्ये तु प्रकृतसूत्रेणैव तस्य साधितत्वाच्च। रेक्ण इति प्रयोग एव साधीयान् इति दिक्" इति (तत्त्व० पृ० ५६०, ५६१)। एवं भट्टोजिदीक्षितोऽपि (मनो० पृ० ८०३)।

उज्ज्वलदत्तोणादिवृत्तौ तु साम्प्रतमन्यथा पाठ उपलभ्यते। तद्यथा—'रिचेर्धने घित् किच्च। रिचिर् अतो धने वाच्येऽसुन्, स च घित् किच्च स्यात्, प्रत्ययस्य नुट्। रिक्णः–सुवर्णम्' इति (उज्ज्वल० पृ० १९७)।

दशपाद्याः ककोशे 'रेक्णः' इति पाठ उपलभ्यते परं स मूलपाठो न प्रतीयते दीक्षिततत्त्वबोधिनीकाराभ्यामुद्धृतपाठेन विरोधात्, प्रक्रियाकौमुदीटीकायामपि 'रेकः' इत्येवोदाहृतत्वाच्च (प्र० कौ० टी० भा० २, पृ० ६४३)।

२. 'रिणक्ति रिच्यते वा रिक्णः—धनम्। कर्ता कर्म च' इति क.।

३. 'चजोः कु घिण्ण्यतोः' [अ० ७।३।५२] इति भावः। 'घित्त्वात् कुत्वम्' इति नास्ति ख. ग.। ४. 'वा' इति नास्ति ङ.।

५. 'गम्यमाने' इति क.।

६. 'नुट्' इति युक्तः पाठः। 'नुम् चागमः' इति नास्ति ख. ग.।

७. अत्राह भट्टोजिदीक्षितः—" 'चनो दधिष्व पचत' (ऋ० १०।११६।८) 'सुते दधिष्व नश्चनः' (ऋ० १।३।६) इत्यादि मन्त्रेषु चनः शब्दः प्रसिद्धः। ऐतेन 'चणोऽन्नम्' इत्युदाहृत्य 'बाहुलकाण्णत्वम्' इति वदन्तो दशपादीवृत्तिकारास्तदनुगाः प्रसादकारादयश्च परास्ताः" इति (मनो पृ० ८०३)। एवं तत्त्वबोधिनीकारोऽपि (तत्त्व० • ६१)।

## वृङ्[1]शीङ्भ्यां रूपस्वाङ्गयोः पुट् च ॥६१॥ ( पं० उ० ४।२०६ )

आभ्यां धातुभ्यामसुन् प्रत्ययो भवति, रूपस्वाङ्गयोरभिधेययोः,[2] पुट् चागमः। वृङ् सम्भक्तौ। व्रियते तदिति **वर्पः**—रूपम्। कर्म। शीङ् स्वप्ने आ०। शेते इति **शेपः**—मेढ्रः। कर्त्ता॥

## स्रुरीभ्यां[3] तुट् च ॥६२॥ ( पं० उ० ४।२०७ )

आभ्यां धातुभ्यामसुन् प्रत्ययो भवति तुट् चागमः। स्रु गतौ भ्वा०। स्रवतीति **स्रोतः**—प्रस्रवणम्। कर्त्ता। रीङ् प्रस्रवणे दि०। रीयत इति **रेतः**—शुक्रम्। कर्त्ता॥

## पातेर्बले जुट् च ॥६३॥ ( पं० उ० ४।२०८ )

पातेर्धातोरसुन् प्रत्ययो भवति बलेऽभिधेये जुट् चागमः। पा रक्षणे अ०। पातीति **पाजः**—अग्निः[4]। कर्त्ता॥

## उदके थुट्[5] च ॥६४॥ ( पं० उ० ४।२०९ )

पातेरसुन् प्रत्ययो भवति, उदकेऽभिधेये[6] थुट् चागमः। पा रक्षणे। पाति जीवं[7] **पाथः**—उदकम्। कर्त्ता॥

## अन्ने च ॥६५॥ ( पं० उ० ४।२१० )

अन्नेऽभिधेये पातेरसुन् प्रत्ययो भवति थुट् चागमः। पाति जीव[8]मिति **पाथः**—अन्नम्। कर्त्ता॥

## अदेर्नुम् धौ च ॥६६॥ ( पं० उ० ४।२११ )

---

'चणश्चाणश्चान्नम्, बाहुलकाण्णत्वम्। णत्वं नेच्छन्त्येके' इति हेमचन्द्रः (हैमोणादौ० पृ० १५३, हैमधातुपा० पृ० ११५)।

१. 'धृङ्' इति क. एवं वृत्तावपि धृङ् सम्भक्तौ भ्वा०। 'ध्रियते तदिति धर्पः' इति पाठः। २. 'रूपस्वाङ्गयोरर्थयोः' इति क.।

३. 'स्रुरीङ्भ्यां' इति ज.।

४. 'बलम्' इति युक्तं स्यात्, बलेऽभिधेये प्रत्ययविधानात्। निघण्टौ (२।१०) 'पाज' इति बलनामसु पठितम्। ५. 'थुक्' इति ज.।

६. 'उदकेऽभिधेये पातेरसुन्...' इति क.। ७. 'जीवितम्' इति ख. ग.।

८. 'जीवम्' इति नास्ति ख. ग.।

अदेर्धातोरसुन् प्रत्ययो भवति नुम् धौ चास्यागमादेशौ भवतोऽन्नेऽभिधेये। अद भक्षणे अ०। अत्तीति अन्धः—अन्नम्। कर्त्ता[1]॥

स्कन्देश्च स्वाङ्गे ॥६७॥ (पं० उ० ४।२१२)

स्कन्देर्धातोरसुन् प्रत्ययो भवति स्वाङ्गेऽभिधेये धश्चान्तादेशः। स्कन्दिर् गतिशोषणयोः भ्वा०। स्कन्दतीति स्कन्धः—शरीराङ्गम्। कर्त्ता॥

आपः कर्माख्यायां ह्रस्वश्च नुट् च वा ॥६८॥ (पं० उ० ४।२१३)

आपो धातोरसुन् प्रत्ययो भवति कर्माख्यायाम्,[2] ह्रस्वश्च धातोः, नुट् च वा भवति। आप्लृ व्याप्तौ स्वा०। आप्नुवन्ति तदिति अप्नः, अपः—व्यवसितः[3]। कर्म॥

रूपे जुट् च ॥६९॥ (पं० उ० ४।२१४)

रूपेऽभिधेये आपो धातोरसुन् प्रत्ययो भवति, जुट् चागमः, ह्रस्वश्च धातोः। आप्लृ व्याप्तौ। आप्यते तत् शुभेनेति अब्जः—रूपम्[4]। कर्म॥

उदके नुम् भौ च ॥७०॥ (पं० उ० ४।२१५)

उदकेऽभिधेये आपो धातोरसुन् प्रत्ययो भवति, नुम् भौ चास्यागमादेशौ भवतः, ह्रस्वश्च धातोः। आप्लृ व्याप्तौ। आप्नोति सर्वमिति अम्भः—तोयम्[5]। कर्त्ता॥

नहेर्दिवि भश्च[6] ॥७१॥ (पं० उ० ४।२१६)

नहेर्धातोरसुन् प्रत्ययो भवति[7], दिवि गम्यमानायाम्, भश्चान्तादेशः। णह बन्धने दि०। नह्यते तन्मेघैरिति नभः—आकाशम्[8]। कर्म॥

---

१. 'अद्यते तदिति…… कर्म' इति क.।

२. 'गम्यमाने' इत्यधिकं क.। ३. 'अध्यवसायः' इति क.।

४. 'शुभैरित्यब्जः—अजेयं रूपम्' इति क.।

५. 'आप्नोति स्थलमिति अम्भः—उदकम्' इति क.।

६. 'भश्चित्' इति ग.। 'भवश्चित्' इति ख.। 'भश्च चित्' इति ज.। पञ्चपाद्यामपि 'चित्'पदं नास्ति। नभःशब्दस्याद्युदात्तत्वदर्शनात् 'चिद्'वचनमनर्थकम्।

७. 'चिच्च' इत्यधिकम् ग.।

८. अत्राह भैरवमिश्रः—

### इण आग अपराधे ॥७२॥ ( पं० उ० ४।२१७ )

इणो धातोरसुन् प्रत्ययो भवति आग इत्ययं चादेशः, अपराधे गम्यमाने। इण् गतौ आ०। एत्यनेन वाच्यतामिति **आगः**—अपराधः। करणम्। इण् गतावित्यस्यैतत्[1] ॥

### अमेर्हुक् च ॥७३॥ ( पं० उ० ४।२१८ )

अमेर्धातोरसुन् प्रत्ययो भवति हुक् चागमः, अपराध गम्यमाने[2]। अम गत्यादिषु भौ०। अमतीति **अंहः**—अपराधः, पापः, घोरश्च[3]। कर्ता ॥

### रमेर्देशे हश्च ॥७४॥ ( पं० उ० ४।२१९, २२० )

रमेर्धातोरसुन् प्रत्ययो भवति देशे गम्यमाने[4], हश्चान्तादेशः। रमु क्रीडायां भौ०। रमन्तेऽस्मिन्निति **रहः**—विविक्तो देशः। अधिकरणम् ॥

### अञ्ज्यजियुजिभृजां कुश्च ॥७५॥ ( पं० उ० ४।२२१ )

एभ्यो धातुभ्योऽसुन् प्रत्ययो भवति, कवर्गश्चैषामन्तादेशः। अञ्जु व्यक्तिम्रक्षणादौ रौ०। अनक्तीति **अङ्गः**—क्षेम। कर्ता[5]। अज गतौ भौ०। अजतीति **अगः**—पर्वतः, वृक्षश्च[6]। कर्ता। युजिर् योगे रौ०। युनक्ति युज्यते वा तदिति **योगः**—मनः[7]। कर्ता कर्म च। भृजी जर्जने भौ०। भृज्यते तदिति **भर्गः**—हविः, हरश्च[8]। कर्म ॥

---

'नभो व्योम्नि नभो मेघे श्रावणे च पतद्गृहे।
घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृतः ॥

पतद्गृह इत्यस्य पततः कफादेर्गृह इत्यर्थः। पीकदानीति लोके' इति (ल० शब्दे० टी० भा० २, पृ० ८१४)।

१. 'इण्......तत्' इति नास्ति क.।

२. 'अपरावे गम्यमाने' इति ख. ग.।

३. 'पापः घोरश्च' नास्ति क.।

४. 'अभिधेये' इति क.।

५. 'अनक्ति अज्यते वा तदिति अङ्गः—क्षत्रियनाम, व्यक्तिश्च। कर्ता कर्म च' इति क.।

६. 'अगः—क्षमम्' इति क.।

७. 'योगश्चित्तवृत्तिनिरोधः' इति पातञ्जलाः (यो० द० १।२)।

८. 'हरश्च' नास्ति क.।

## भूरञ्जिभ्यां कित् ॥७६॥ ( पं० उ० ४।२२२ )

आभ्यां धातुभ्यामसुन् प्रत्ययो भवति किच्च । भू सत्तायाम् । भवतीति भुवः—अन्तरिक्षम् । कर्त्ता । रञ्ज रागे भौ० । रजति तेनेति रजः—अशुभम्, रेणुश्च । करणम् ॥

## वसेर्णित्[2] ॥७७॥ ( पं० उ० ४।२२३ )

वसेर्धातोरसुन् प्रत्ययो भवति णिच्च । वस आच्छादने आ० । वस्ते शरीरमिति वासः—वसनम् । कर्त्ता ॥

## चन्देरादेश्चच्छः ॥७८॥ ( पं० उ० ४।२२४ )

चन्देरसुन् प्रत्ययो भवति, आदेश्चच्छः । चदि आह्लादने दीप्तौ च । चन्दयतीति छन्दः—वेदः[3] । कर्त्ता ॥

## पचिवचिभ्यां सुट् च ॥७९॥ ( पं० उ० ४।२२५ )

आभ्यां धातुभ्यामसुन् प्रत्ययो भवति सुट् चागमः । डुपचष् पाके भौ० । पचन्ति तेनेति पक्षः—इन्धनम् । करणम् । वच परिभाषणे आ० । वक्तयनेनेति[4] वक्षः—उरः । करणम् ॥

## वहिहाधाञ्भ्यश्छन्दसि ॥८०॥ ( पं० उ० ४।२२६ )

एभ्यो धातुभ्योऽसुन् प्रत्ययो भवति छन्दसि विषये सुट्[5] चागमः । वह

---

१. अत्राह नागेशः—"'शरञ्जिभ्याम्' इति पाठ इति 'अनिदिताम्' (अ० ६।४।२४) इति सूत्रे हरदत्तः । 'पूरञ्जिभ्याम्' इति कैयटः" इति (ल० शब्दे० भा० २, पृ० ८१४) । २. 'वस्तेर्णित्' इति क. ।

३. 'चन्दत इति छन्दः—ऋग्यजुःसामानि' इति क. ।

४. 'वक्ति तेनेति' इति क. । 'वक्ष्यतेऽनेनेति' इति ख. ग. । 'उच्यतेऽनेनेति' इति (प्र० कौ० टी० भा० २, पृ० ६४४) ।

५. अत्राह भट्टोजिदीक्षितः—"वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् । तेन वहेरुपधावृद्धिः । इतरयोः 'आतोर्युक्' (अ० ७।३।३३) इति युक् । 'शोणा घृष्णू नृवाहसा' (ऋ० १।६।२) 'श्रोता हवं गृणतः स्तोमवाहाः' (ऋ० ६।२३।४) 'विश्वो विहायाः' (ऋ०१।१२८।६) 'वाजम्भरो विहायाः' (ऋ०४।११।४) 'देवो न यः पृथिवीं

प्रापणे भ्वा० । उह्यते तदिति वक्षः—उरः, दासो वा[1] । कर्म । ओहाक् त्यागे जौ० प्रपूर्वः । प्रहाणं प्रहासः—हर्षः । भावः[2] । डुधाञ् धारणपोषणयोः जौ० । दधाति धीयते वा धासः—शरणं, धाम च[3] । कर्त्ता कर्म च । अथवा धासः—प्रेक्ष्यकरः[4] ॥

## इण आसिः ॥८१॥ ( पं० उ० ४।२२७ )

इणो धातोरासिः प्रत्ययो भवति छन्दसि विषये । इण् गतौ आ० । एतीति अयाः—कालः, आदित्यो वा । [कर्त्ता] ॥

## मिथुनेऽसिः पूर्ववच्च सर्वम् ॥८२॥ ( पं० उ० ४।२२८ )

मिथुने गम्यमाने धातुभ्योऽसिः प्रत्ययो भवति[5], पूर्ववच्च सर्वम् । यत्रोपसर्गोपपदाभ्यां धातोः क्रियासम्बन्धस्तन्मिथुनम्[6], तस्मिन् मिथुने गम्यमाने । पूर्वसूत्रैर्यानि युट् तुट् चागमादीनि कार्याणि क्रियन्ते तानीह सर्वाणि भव-

---

विश्वधायाः' (ऋ० १।७३।३) 'अधारयत् पृथिवीं विश्वधायसम्' (ऋ० २।१७।५) 'धर्णसि भूरिधायसम्' (ऋ०२।२६।३) इत्यादि" इति (सि० कौ०पृ० ५६२)। प्रौढमनोरमाऽप्यत्रानुसन्धेया (पृ० ८०५) ।

१. 'दासो वा' नास्ति क. ।

२. 'जौ० । जहाति हीयते वा हासः—पक्षः । कर्त्ता कर्म च' इति क. ।

३. 'शरः' इति क. ।

४. 'अथवा ······ करः' इति नास्ति क. ।

५. 'छन्दसि विषये, इण् गतौ' इत्यसम्बद्धोऽधिकः पाठः ग.पुस्तके ।

६. अत्र मिथुनशब्दार्थे विप्रवदन्ते वृत्तिकाराः । तद्यथा—

'यत्रोपसर्गो धातुक्रियया युक्तस्तन्मिथुनम्' इत्युज्ज्वलदत्तः (पृ० २०२) ।

'उत्सर्गविशिष्टो धातुर्मिथुनम्' इति भट्टोजिदीक्षितः (सि० कौ० पृ० ५६२) ।

'धातूपपदयोगो मिथुनम्' इति नागेशः (उद्योते० अ० ६।१।१७ ॥ ल० शब्दे० भा० २, पृ० ८१४) ।

'मिथुने स्त्रियां पुंसि च गम्यमाने' इति श्वेतवनवासी (पृ० २०४) ।

'पुंस्त्रीलिङ्गयोः धात्वोः ·····

एवं व्याख्या क्वचिद् वृत्तौ यशआद्याश्च पुंस्त्रियोः ।
न दृष्टा इति भीतिर्नः को वा शब्दान्तमीक्षते ॥'

इति नारायणः (पृ० १२३) ।

अत्र 'शॄ मिथुने मनिन्' (द० उ० ६।८०) इति सूत्रस्था टिप्पणी द्रष्टव्या (पृ० २५६, २५७) ।

न्तोति पूर्ववत्[1]। अशू व्याप्तौ सौ०, अश भोजने क्रै० सुपूर्वः। शोभनमश्नुतेऽश्नाति वा **सुयशाः**। 'अशेर्धने युट् च' [द० उ० ६।५१] इति युडागमः। स्रु गतौ सुपूर्वः। शोभनं स्रवतीति **सुस्रोताः**। 'स्रुरीभ्यां तुट् च' [द० उ० ६।६२]।[2] वर्च दीप्तौ भौ० सुपूर्वः। सुष्ठु वर्चत इति **सुवर्चाः**। तप सन्तापे भौ० [सुपूर्वः]। सुष्ठु तपतीति **सुतपाः**। अश भौजने क्रै० नागशब्दपूर्वः। नाग इवाश्नाति[3] **नागयशाः**। कर्त्तारः सर्व एवैते। एवमन्येऽपि ज्ञातव्याः[4]॥

## नञ्याहन[5] एह च ॥८३॥ ( पं० उ० ४।२२९ )

नञ्युपपदे आङ्पूर्वाद्धन्तेरसिः प्रत्ययो भवति, आङ्पूर्वस्य हन्तेरेह इत्ययं चादेशः[6]। हन हिंसागत्योः आ० नञाङ्पूर्वः। न आहते इति **अनेहाः**—चन्द्रः[7], कालश्च। कर्त्ता॥

## विधाञो वेध च ॥८४॥ ( पं० उ० ४।२३० )

विपूर्वाद्धाञोऽसिः प्रत्ययो भवति वेध इत्ययं चादेशः सोपसर्गस्य। डुधाञ् धारणपोषणयोः जौ०। विदधाति प्रजा[8] इति **वेधाः**—विधाता। कर्त्ता॥

## विधतेर्वेध वा[9] ॥८५॥

विधतेर्धातोरसिः प्रत्ययो भवति वेध इत्ययं चादेशो वा। विध विधाने तौ०। विधतीति **वेधाः**, **विधाः**—विधाता। कर्त्ता[10]॥

## नुवो धुट् च ॥८६॥ ( पं० उ० ४।२३१ )

---

१. 'यत्रोप······पूर्ववत्' अयं पाठः ख.ग.पुस्तकयोः 'कर्त्तारः सर्व एवैते' इत्यतोऽनन्तरमुपलभ्यते। २. 'इति तुट्। कर्त्ता।' इत्यधिकं क.।

३. 'नागयूसुरीभ्यां याः नागा धनं यस्येति' इति ग.।

४. 'एव······तव्याः' इति नास्ति ख. ग.। ५. 'नेहनः' इति क.।

६. 'भवति एह इत्ययं चादेशो हनः' इति क.।

७. 'इन्द्रः' इति क.। 'कालश्च' इति नास्ति क.।

८. 'प्रधानम्' इति क.। अत्र प्रधानपदेन प्रकृतिर्विवक्षिता।

९. नास्ति सूत्रं ङ.। 'विधतेर्वा' इति ज.।

१०. 'विद्धतेर्वा॥ विद्धतेर्धातोरसिः प्रत्ययो भवति विध इत्ययं चादेशः। विद्धतीति वेधाः विधाता। कर्त्ता। स्वरे विशेषः' इति ख.। विधः विधत्तेर्धातोः······स्वरे विशेषः' इति ग. (क्लिष्टं खलु)। अत्र शुद्धपाठोऽन्वेषणीयः।

नुवो धातोरसिः प्रत्ययो भवति धुट् चागमः । णु स्तवने । नौति[1] इति **नोधाः**—ऋत्विक्[2] । कर्त्ता ॥

## गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च[3] ॥८७॥ ( पं० उ० ४।२३२ )

गतिश्च कारकं च ते गतिकारके, तयोः गतिकारकयोरप्युपपदयोर्धातोरसिः प्रत्ययो भवति, पूर्वपदप्रकृतिस्वरत्वं च[4] । गतौ खल्वपि—शोभनमश्नुतेऽश्नाति वा **सुयशाः**[5], **सुस्रोताः**, **सुतपाः**[6] । कारके खल्वपि—महांस्तपतीति **महातपः**, **बृहद्यशाः**, **शुद्धयशाः** । एवमन्येऽपि द्रष्टव्याः ॥

## चन्द्रे मो डित् ॥८८॥ ( पं० उ० ४।२३३ )

चन्द्रे उपपदे मा इत्येतस्माद् धातो[7]रसिः प्रत्ययो भवति डिच्च । माङ् माने शब्दे च जौ० चन्द्रपूर्वः । चन्द्रं मिमीते चन्द्रेण वा मीयते इति **चन्द्रमाः**[8]—शशी । कर्त्ता कर्म च[9] ॥

## वयसि धात्रः ॥८९॥ ( पं० उ० ४।२३४ )

वयस्युपपदे धात्रो धातोरसिः प्रत्ययो भवति डिच्च । डुधाञ् धारणपोषणयोः जौ० । वयो दधातीति **वयोधाः**—प्राणी, चन्द्रश्च । कर्त्ता ॥

---

१. 'णु स्तुतौ भ्वा०, णु स्तवे । नूयत' इति क. ।

२. 'ऋषिः' इति क. ।

३. सूत्रमिदं नास्ति च. ।

४. 'गतिकारकोपपदात् कृत्' (अ० ६।२।१३९) इत्यस्यायमपवादः ।

५. 'गतिषु सुयशाः' इति ख. ग. ।

६. 'इत्येवमादि' इत्यधिकं क. ।

७. 'माङ्धातोः' इति क. ।

८. अत्राह श्वेतवनवासी—"पूर्वपदप्रकृतिस्वरत्वं च । चन्द्रमाः—सोमः । चन्द्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः । केचिद् दासीभारादिषु (अ० ६।२।४२ तु० महाभा०) चन्द्रमसं पठन्ति । केचित् 'चन्द्रे मो डिन्निच्च' इति पठन्ति तेषां चन्द्रमाः शब्द आद्युदात्तः" इति (पृ० २०६) ।

आद्युदात्तश्चन्द्रमाशब्दस्त्वस्माभिर्न क्वचिद्दृष्टः ।

'बाहुलकात् केवलादपि मोऽसिः मीयन्तेऽनेनेति माः, मासौ, मासः । पूर्णो माः तस्येयं पौर्णमासी' इत्युज्ज्वलदत्तः (पृ० २०३) ।

९. 'जौ० । चन्द्रं मिमीते मीयते वा चन्द्रमाः—शशी । कर्त्ता' इति ग. ।

## पयसि च[1] ॥६०॥ ( पं० उ० ४।२३५ )

पयस्युपपदे धाञो धातोरसिः प्रत्ययो भवति डिच्च। डुधाञ्[2] [पयस्-शब्दपूर्वः]। पयो दधातीति पयोधाः—समुद्रः[3]। कर्त्ता॥

## पुरसि च ॥६१॥ ( पं० उ० ४।२३६ )

पुरस्युपपदे धाञो धातोरसिः प्रत्ययो भवति डिच्च। डुधाञ् पुरस्शब्द-पूर्वः[4]। पुरो दधातीति पुरोधाः—उपाध्यायः। कर्त्ता॥

## पुरूरवाः ॥६२॥ ( पं० उ० ४।२३७ )

पुरूरवा इत्ययं शब्दो निपात्यतेऽसिप्रत्यये निरुद्धः। रु शब्दे ग्रा० पुरु-शब्दपूर्वः। पुरुशब्दस्य दीर्घत्वं निपात्यते। पुरुरूयते स्वयशः[5] सर्वत्रेति[6] पुरू-रवाः—राजा[7]। कर्म[8]॥

## चक्षेर्बहुलं शिच्च ॥६३॥ ( पं० उ० ४।२३८ )

चक्षेर्धातोरसिः प्रत्ययो भवति शिच्च बहुलम्[9]। चक्षिङ् व्यक्तायां वाचि ग्रा० ग्राङ्पूर्वः। ग्राचष्ट इति ग्राचक्षाः—वाग्मी। कर्त्ता। ग्राचष्ट इति ग्राख्याः, प्राचष्ट इति प्राख्याः[10]—बृहस्पतिः[11]॥

## वसेः कित्[12] ॥६४॥ ( पं० उ० ४।२३९ )

वसेर्धातोरसिः प्रत्ययो भवति किच्च। वस निवासे भ्वा०। वसति[13] तस्यामिति उषाः—रात्रिः[14]। अधिकरणम्॥

---

१. 'पयसि धाञः' इति क.।

२. 'डुधाञ् धारण ····· डुधाञ्' इति नास्ति क.।

३. 'पयोधरः स्तनो वा' इति क.। ४. 'डुधाञ्······पूर्वः' इति नास्ति क.।

५. 'यस्य यशः' इति क.।

६. तु० प्र० कौ० टी० भा० २, पृ० ६४४।

७. 'नाम राजा' इति क.। ८. 'कर्म' इति नास्ति क.।

९. 'बहुलं शिद् भवति' इति क.।

१०. 'प्रा·····प्राख्याः' इति नास्ति क.। ११. 'कर्त्ता' इत्यधिकं क.।

१२. हरदत्तभट्टोजिदीक्षिततत्त्वबोधिनीकारैरिदं सूत्रमुद्धृतम् (क्रमशः—पद० ७।४।४८ पृ० ८६०॥ मनो० पृ० ८०५॥ तत्त्व० पृ० ५६२)।

१३. 'उषन्ति' इति क.।

१४. अत्र निरुक्तम्—'उषाः ······ काल' इति (२।१८)।

## दमेरूनसिः[1] ॥९५॥ ( पं० उ० ४।२४० )

दमेर्धातोरूनसिः प्रत्ययो भवति । दमु उपशमे दै० । दाम्यतीति दमूनाः—देवः, उपदेशः, अन्तश्च[2] । कर्त्ता ॥

## अङ्गिराः ॥९६॥ ( पं० उ० ४।२४१ )

अङ्गिरा इत्ययं[3] शब्दो निपात्यतेऽसिप्रत्यये निरुद्धः । सृ गतौ भ्वौ०[4] । अङ्गारशब्दोपपदे धातुलोपो निपात्यते, उपपदान्तलोपः, उपधेत्वं च । अङ्गारेभ्यः सृत इति अङ्गिराः—ऋषिः । कर्त्ता । भूतकालः ॥

## अप्सराः ॥९७॥ ( पं० उ० ४।२४१ )

अप्सरा इत्ययं शब्दो निपात्यतेऽसिप्रत्यये निरुद्धः । सृ गतौ भ्वौ० अप्-शब्दपूर्वः । अद्भ्यः[5] सृता इति अप्सराः—स्वर्गयोषित् । कर्त्ता । भूतकालः ॥

## विदिभुजिभ्यां विश्वे ॥९८॥ ( पं० उ० ४।२४२ )

आभ्यां धातुभ्यामसिः प्रत्ययो भवति विश्वशब्द उपपदे[6] । विद ज्ञाने[7] अ०, विद्लृ लाभे तौ०, विद विचारणे रौ०, विद सत्तायां दै० । विश्वं वेत्ति, विन्दति, विन्ते वियते वा विश्ववेदाः—हुताशनः । कर्त्ता । भुज पालनाभ्यवहारयोः रौ० । विश्वं भुङ्क्ते इति[8] विश्वभोजाः—अग्निः, लोकपालश्च । कर्त्ता ॥

---

१. 'ऊनसिः' इति ख. ग. । एवं वृत्तावुदाहरणे च ह्रस्व एव ।

मनोरमायां (८०५) तत्त्वबोधिन्यां (पृ० ५६२) च दीर्घपाठ एव दशपादीनाम्नोद्धृतः । पञ्चपाद्यां क्वचिद् ह्रस्वः पठ्यते । दमुनाः, दमूना इत्युभयथाऽपि दृश्यते । तत्र ह्रस्वपाठे 'अन्येषामपि दृश्यते' (अ० ६।३।१३७) इति दीर्घः । दीर्घपाठे बाहुलकात् पक्षे ह्रस्वो बोध्यः ।

२. 'दमुनाः—अग्निः, उपसर्गान्तश्च' इति ख. ग. ।

३. 'अङ्गिरा इति' नास्ति क. ।

४. अयं पाठः 'उपधेत्वं च' इत्यतोऽनन्तरः ख. ग. ।

५. 'असिप्रत्यये सर्त्तेर्धातोरप्शब्द उपपदे । सृ गतौ । अद्भ्यः' इति ख. ग. ।

६. 'आभ्यां धातुभ्यां विश्व उपपदेऽसिः प्रत्ययो भवति' इति क. ।

७. 'दै०' इत्यधिकं क. । ८. 'भुङ्क्ते भुनक्ति वा' इति क. ।

## वशेः कनसिः ॥९९॥ ( पं० उ० ४।२४३ )

वशेर्धातोः कनसिः प्रत्ययो भवति । वश कान्तौ अ० । वष्टि उश्यते वा उशनाः—शुक्रः । कर्त्ता कर्म च । कित्त्वात्सम्प्रसारणं 'ग्रहिज्या' [अ० ६।१।१६] इत्यादिना[1] ॥

## अमेरसन्[2] ॥१००॥ (पं० उ० ५।२०)

अमेर्धातोरसन्[2] प्रत्ययो भवति । अम गत्यादौ भ्वा० । अमतीति अमसः—व्याधिः । कर्त्ता ॥

## अपि सर्त्तेरसुन् ॥१०१॥

अप्युपपदे सर्त्तेर्धातोरसुन् प्रत्ययो भवति । सृ गतौ भ्वा० अप्शब्दपूर्वः । अद्भ्यः सृता इति अप्सरसः—देवयोषितः । कर्त्ता । भूतकालः ॥

## कृञः पासञ्[3] ॥१०२॥ (पं० उ० ५।५६ नारा०)

कृञो धातोः पासञ् प्रत्ययो भवति । डुकृञ् करणे ता० । क्रियत इति कार्पासः—वीरुत् । यतो वस्त्रं निर्वर्त्यते । कर्म ॥

## दंसेष्टटनौ न आ च ॥१०३॥ (पं० उ० ५।९)

दंसेर्धातोष्टटनौ प्रत्ययौ भवतो नकारस्य चाकारः । दसि दंशने दर्शने च[4] चौ० । दंस्यत इति दासः । स्वरे विशेषः । अत्यन्तप्रेष्यकर्मकरो[5] जनः । कर्म ॥

## दाशतेश्च ॥१०४॥ (पं० उ० ५।१०)

दाशतेर्धातोष्टटनौ प्रत्ययौ भवतः । दाशृ दाने भ्वा० । दाशन्ति तस्मै

---

१. 'कित्त्वात्……इत्यादिना' नास्ति ख. ग. ।

२. 'असः' इति ख. ङ. । 'असिः' इति ग. । 'रमेरसः' इति ज. ।

अमसशब्दः 'अत्यविचमि' (पं० उ० ३।१११) इत्यादिनापि व्युत्पादितः । इह पुनर्व्युत्पादनं स्वरभेदादिति श्वेतवनवासी (पृ० २१६) ।

३. 'पासः' इति क. । एवं वृत्तावुदाहरणे च 'पासः', 'कर्पासः' इति वर्तते ।

४. 'दसि दसने' इति क. ।   ५. 'अन्यत्र प्रेष्यकारो' इति ख. ग. ।

जना वेतनं जलं कान्तारं तितीर्षव[1] इति दाशः—निषादः, शाकुनिजातिः। दाशी—निषादी। सम्प्रदानम्॥

॥ सकारः[2] ॥

## गुहेः कन् ॥१०५॥ (पं० उ० ५।४६)

गुहेर्धातोः कन् प्रत्ययो भवति। गुहू संवरणे भ्वा०। गूहतीति[3] गुहः[4]—कुमारः। कर्त्ता॥

## सिचेः संज्ञायां[5] कन्नु हौ च ॥१०६॥ ( पं० उ० ५।६७ )

सिचेर्धातोः कन् प्रत्ययो भवति, नुम्हौ चागमादेशौ भवतः, संज्ञायां गम्यमानायाम्। षिच क्षरणे तौ०। सिञ्चतीति सिंहः—केसरी। कर्त्ता॥

## वहेः क्विबनसो डश्च[6] ॥१०७॥

अनस उत्तरस्य वहेर्धातोः क्विप् प्रत्ययो भवति अनसो डश्चान्तादेशः। वह प्रापणे भ्वा०[7]। अनो वहतीति अनड्वान्—वृषभः। कर्त्ता॥

॥ हकारः[8] ॥

॥ इति दशपादी-उणादिवृत्तौ नवमः पादः[9] ॥

---

१. 'वेतनजलकर्त्तारतितीर्षवः' इति क.। 'वेतनं जलं कान्तारं तीर्थं वेति' इति ख. ग.। अस्माभिस्तु संशोध्य लिखितः। २. 'इति सकारान्ताः' इति ग.।

३. 'गूहत इति' इति क.।

४. 'इगुपधज्ञाप्रीकिरः कः' (अ० ३।१।१३५) इति के रूपे सिद्धे स्वरार्थं वचनम्।

५. 'संज्ञायां' नास्ति ज.।

६. सूत्रमिदं क्षीरस्वामिनाऽमरटीकायामुद्धृतम् (अ० टी० २।६।६०)। अन्यत्र किञ्चित् पाठान्तरमुपलभ्यते। तद्यथा—'अनसि वहेः क्विबनसो डश्च' इति सर्वानन्द-भानुजिद्दीक्षितौ (अ० टी० २।६।६०); 'अनसि वहेः क्विब् डश्चानसः' इति जिनेन्द्र-हरदत्तौ (न्यास भा० २, पृ० २६८। पद० भा० २, पृ० ५०३)।

७. 'अनःशब्दपूर्वः' इत्यधिकं क.। ८. 'इति हकारान्ताः' इति ग.।

९. 'इत्युज्ज्वलदत्तविरचितायामुणादिवृत्तौ नवमः पादः समाप्तः' इति ग.।

# ॥ अथ दशमः पादः ॥

## स्थाचतिमृजेराल'वालजा'लीयरः' ॥१॥ (पं० उ० १।१०६)

स्था चते मृजूष् इत्येतेभ्यो धातुभ्यो[४] यथासंख्यमाल[१] वालज्[२] आलीयर्[३] इत्येते प्रत्यया भवन्ति। रेफः 'उपोत्तमं रिति' [अ० ६।१।२१७] इत्येतदर्थः[५]। ष्ठा गतिनिवृत्तौ भौ०। तिष्ठति तस्मिन्नोदनादि द्रव्यमिति **स्थालम्**—भाजनविशेषः[६]। अधिकरणम्। चते चदे याचने भौ०। चत्यते[७] तदिति **चात्वालम्**[८]। बहुलवचनाद्दीर्घः[९]। यज्ञभाण्डम्। कर्म[१०]। मृजूष् शुद्धौ आ०। मार्ष्टि अशुभं रक्षांसि चेति **मार्जालीयः**—अग्निः। कर्त्ता॥

बहुलवचनादन्यतोऽप्याल प्रत्ययो भवति। चष भक्षणे[११] भौ०। चषन्ति तस्मिन्निति **चषालः**—यज्ञभाजनम्[१२]। अधिकरणम्॥

## क्विब्वचिप्रच्छिश्रिद्रुस्रुकटप्रुज्वां[१३] दीर्घोऽप्रसारणं च ॥२॥ (पं० उ० २।५७)

एभ्यो धातुभ्यः क्विप् प्रत्ययो भवति दीर्घत्वं च भवत्यप्रसारणं[१४] चैषाम्। वच परिभाषणे आ०, ब्रूञ् व्यक्तायां वाचि [आ०]। वक्ति ब्रवीति

---

१. 'आलञ्' इति ग.। 'आलज्' इति ङ.। २. 'वालञ्' इति क.।

३. 'अलीयचः' इति ङ.। 'आलीयनः' इति क.। अत एवोपरिष्टात् 'रेफः…तदर्थः' इति न पठ्यते।

४. 'स्था……धातुभ्यः' इत्यस्य स्थाने 'एभ्यः' इत्येव क.।

५. 'रेफः……तदर्थः' इति नास्ति क.। ६. 'भाजनविकारः' इति ख.।

७. 'चत्यन्ते' इति ख. ग.। ८. 'चत्वालम्' इति क.।

९. 'बहुलवचनाद्दीर्घः' नास्ति क.।

१०. 'यज्ञभाजनम्। कर्त्ता' इति ख. ग.। ११. 'तर्पणे' इति क.।

१२. 'यज्ञभाण्डम्' इति क.। १३. '०प्रच्छ्यायतस्तुकटप्रुजुश्रीणाम्' इति ग.।

१४. 'भवति दीर्घोऽप्रसारणम्' इति क.।

वा **वाक्**—वाणी। कर्त्ता। प्रछ ज्ञीप्सायां तौ०। पृच्छतीति **प्राट्**—प्रश्नकुशलो[1] विद्वान्। कर्त्ता। श्रिञ् सेवायां भौ०। श्रीयतेऽसौ पुण्यकृद्भिरिति **श्रीः**—लक्ष्मीः। कर्म। द्रु गतौ भौ०। द्रवति द्रूयते वा **द्रूः**—शल्यकः, हिरण्यं [च]। कर्त्ता कर्म च। स्रु स्रवणे[2] भौ०। स्रवति स्रूयते वा **स्रूः**—कामरूपः। कर्त्ता कर्म च। प्रुङ्[3] गतौ भौ० कटशब्दपूर्वः। कटं प्रवत इति **कटप्रूः**—नदीतरङ्गः[4]। कर्त्ता। जुङ् गतौ भौ०। जवत इति **जूः**—पिशाचः। कर्त्ता॥

प्राक्प्रत्ययनिर्देश इष्टसंग्रहार्थः[5]। पद गतौ दै० सम्पूर्वः। सम्पद्यत इति **सम्पत्**—सम्पत्तिः। कर्त्ता। **विपत्**[6]। एवमन्येऽपि॥

## हुवः श्लुवच्च ॥३॥ (पं० उ० २।६०)

हु इत्येतस्माद्धातोः क्विप्[7] प्रत्ययो भवति श्लुवच्चास्य कार्यं भवति दीर्घश्च। हु दानादनयोः जौ०। हूयतेऽनयेति **जुहूः**—यज्ञोपकरणम्[8]। करणम्॥

## सृयुवचिभ्योऽन्युजागूजक्नुचः[9] ॥४॥ (पं० उ० ३।७७)

एभ्यो धातुभ्यो यथासंख्यमन्युच् आगूच् अक्नुच्[10] इत्येते प्रत्यया भवन्ति। सृ गतौ भौ० जौ०। धावति सर्सर्ति वा **सरण्युः**—मेघो वायुश्च। कर्त्ता। यु मिश्रणे आ०। यूयत इति **यवागूः**—भोजनविशेषः[11] पेयो वा। कर्म। वच परिभाषणे, ब्रूञ् व्यक्तायां वाचि। वक्ति ब्रवीति वा **वचक्नुः**[12]—वाग्मी। कर्त्ता॥

---

१. 'प्रश्नकुशलः' नास्ति क.। २. 'गतौ' इति क.।

३. 'कर्त्ता कर्म च। स्रु गतौ आयतपूर्वः। आयतं स्तौतीति आयतस्तूः। प्रुङ्' इति ख. ग.।

४. 'नदीतीरम्' इति क.। हैमधातु० पारा० १।५९८ अयमेव पाठः।

५. द्रष्टव्या देवराजकृता निघण्टुटीका पृ० १३। ४१। १९२। २७२। ३९०। ४३४। ४७२॥ ६. 'सम्पूर्वः। सम्पत्तिः सम्पत्। विपत्तिः विपत्' इति क.।

७. 'हुवः क्विप्' इति क.। ८. 'उत्तरा स्रुक्' इति क.।

९. '०क्नवः' इति क.। १०. 'अक्नु' इति क.।

११. 'धान्यजातिः' इति क. ख.।

१२. तु०—'वाचक्नव्युपरराम' श० १४।६।६।१॥

## शकेरुनोन्तोन्त्युनयः ॥५॥ (पं० उ० ३।४८)

शकेर्धातोरुन, उन्त, उन्ति, उनि एते प्रत्यया भवन्ति। शक्लृ शक्तौ सौ०। शक्नोति नभो गन्तुमिति **शकुनः**, **शकुन्तः**, **शकुन्तिः**, **शकुनिः**। एतानि पक्षिनामानि। कर्त्ता॥

## इणस्तशस्तशसुनौ ॥६॥ (पं० उ० ३।१४३)

इणो धातोस्तशस्तशसुन् इत्येतौ प्रत्ययौ भवतः। इण् गतौ श्रा०। एतीति **एतशाः**। स्वरे विशेषः। वाय्वग्न्यर्कसोमाध्वर्य्विन्द्राः। कर्त्ता[1]॥

## उल्मुकदर्विहोमिनः ॥७॥ (पं० उ० ३।८०)

एते शब्दा निपात्यन्ते कप्रत्यये[2]। उष दाहे भौ०, दह भस्मीकरणे वा भौ० उत्पूर्वः। ओषतेः प्रत्ययस्योकारादित्वं निपात्यते मुट् च[3], धातोरन्त्यस्य लत्वमगुणत्वं च; दहतेः प्रत्ययस्योकारादित्वं मुट् चागमो[4] निपात्यते धातुलोप उपसर्गान्त्यस्य लत्वं च। ओषति उद्दहति वा **उल्मुकम्**—अर्धदग्धं काष्ठम्, अलातं च। कर्त्ता। दृ भये क्र्यौ०। अस्य धातोः प्रत्ययस्य वि-आदेशो निपात्यते[5]। दृणाति दीर्यते वाऽनयेति **दर्विः**—साधनभाण्डम्। कर्म करणं च[6]। हु दानादनयोः जौ०। अस्य प्रत्ययस्य मिन् आदेशो निपात्यते[7]। जुहोतीति **होमी**—ऋत्विक्। कर्त्ता॥

## विसाविहौ ॥८॥ (पं० उ० ४।३७)

एतौ शब्दौ निपात्येते। षो अन्तकर्मणि विपूर्वः। स्यतेर्डाप्रत्ययो निपात्यते। विष्यतीति[8] **विसा**[9]—बुद्धिः। कर्त्ता। ओहाक् त्यागे जौ० विपूर्वः। अस्यापि डाप्रत्ययो निपात्यते। विजहातीति **विहा**[9]—स्वर्गः। कर्त्ता॥

---

१. 'एतीत्येतशः। एतशाः—वाय्वग्न्यर्काः। कर्त्ता। एतशाः—सोमः, अध्वर्युः, इन्द्रो वा' इति क.।

२. 'यथेष्टप्रत्यये' इति क.।

३. 'ओषतेरुक्प्रत्ययो निपात्यते मुञ्चागमः' इति क.।

४. 'दहतेरुक्प्रत्ययो मुञ्चागमः' इति क.।

५. 'अस्य धातोः क्विन् प्रत्ययो निपात्यते धातोर्गुणश्च' इति क.।

६. 'करणम्' इत्येव क.।

७. 'अस्य मिन्प्रत्ययो निपात्यते बहुलवचनान्नकारस्य लोपो न भवति' इति क.।

८. 'विसा विहा इतीमौ निपात्येते। विपूर्वात् स्यतेर्डाप्रत्ययो निपात्यते। षोऽन्तकर्मणि दि० विपूर्वः। विस्यतीति' इति क.।

९. 'स्वभावाद् (विसा, विहा) अनयोरव्ययत्वम्' इत्युज्ज्वलदत्तः (पृ० १५२)।

## शीङो धुग्लग्वलन्वालनः ॥९॥ ( पं० उ० ४।४० )

शीङो धातोर्धुक्, लक्[1], वलन्, वालन् इत्येते प्रत्यया भवन्ति। शीङ् स्वप्ने आ०। शेरतेऽस्मिन् जना मत्ताः सन्त इति **शीधुः**—मदिरा। अधिकरणम्। शेते तिष्ठति तत्साधुकर्मणीति **शीलम्**[2]—धर्मसमाधिः। कर्त्ता। शेरतेऽस्मिन् जना इति[3] **शेवलम्**—जलमलम्। अधिकरणम्। शेत इति **शेवालम्**—जलमलम्। कर्त्ता॥

## खर्जिपिञ्जादिभ्य ऊरोलचौ ॥१०॥ ( पं० उ० ४।९६ )

**खर्जा**दिभ्यः पिञ्जादिभ्यश्च धातुभ्यः[4] ऊर, ऊलच् इत्येतौ प्रत्ययौ भवतः। खर्ज व्यथने भौ०। खर्जतीति **खर्जूरः**—वृक्षजातिः। कर्त्ता। कर्ज व्यथने भौ०[5]। कर्जतीति **कर्जूरः**—मलिनः। कर्त्ता। कृपू सामर्थ्ये भौ०। कल्पत इति **कर्पूरः**—सुगन्धद्रव्यम्। कर्त्ता। तुजि पिजि वजि लुजि हिंसा-बलादाननिकेतनेषु। पिञ्जयतीति **पिञ्जूलः**—दर्भसमवायः। [कर्त्ता]। हन हिंसागत्योः आ०। हन्ति हन्यतेऽनेन वेति **बधूलः**—घातकः[6], पशुर्वा। बाहुलकाद् बधादेशः। कर्त्ता कर्म च[7]॥

## मृडः कीकन्कङ्कणौ[8] ॥११॥ ( पं० उ० ४।२५ )

मृडः कीकन्कङ्कण[9] इत्येतौ प्रत्ययौ भवतः। मृड सुखे क्र्या०। मृड्नाति मृड्यते वा **मृडीकम्, मृडङ्कणः**—सन्धानस्पर्शनिश्चयसर्पविषाणि[10]। कर्त्ता कर्म च॥

---

१. 'लन्' इति क.।

२. 'शेरतेऽनेन जना इति शीधु मद्यम्। करणम्। शेते तदसाधु कर्मणीति शीला' इति क.।

३. 'तस्मिन् जलमिति' इति क.।

४. 'यथासंख्यम्' इति क.।

५. 'अव्यक्ते शब्दे' इति ख. ग.।

६. 'धातुकः' इति ग.।

७. 'कर्त्ता कर्म च। पशुर्वा बाहुलकाद् बधादेशः' इति क. ख. ग.।

८. 'कोकंश्चङ्कणो' इति क.। 'कीकच्कङ्कणो' इति ग.।

९. 'कोकन् चङ्कण' इति क.।

१०. 'वा मृडोकम्—मुखम्। मृडङ्कणः—संवाहकः, स्पर्शविषयश्च' इति क.। 'संधानं स्पर्शनिश्चयः सर्पो विषं च' इति ख.।

**ऋतन्यञ्जिवन्यञ्ज्यर्पिमाद्य[1]त्यङ्गिकुयुकृशिभ्यश्चत्नि[2]यतुजलि[3] जिष्णु[4]जिष्ठजनि[5]स्यन्निथिन्नि[6]पन्नषो[7]षानुक[8] ॥१२॥ (पं० उ० ४।२)**

एभ्यो धातुभ्यो यथासंख्यं चत्न्या[9]दयः प्रत्यया भवन्ति । ऋ गतौ भौ० जौ० । अत्नि[2]प्रत्ययः । ऋच्छत्यर्यते वा **अरत्निः**—बाहुमध्यमः, समं च[9] । कर्त्ता कर्म च । तनु विस्तारे ता० । अस्य यतु[10]प्रत्ययः । तनोतीति **तन्यतुः**—वायुः, सूर्यश्च । कर्त्ता[11] । अञ्जू व्यक्तिम्रक्षणादौ रौ० । अस्य अलि[12]प्रत्ययः । अनक्ति अज्यते वाऽनेनेति **अञ्जलिः**—करद्वयसम्पुटः । कर्त्ता करणं च । वनु याचने ता०, वन षण सम्भक्तौ भौ० । अनयोरिष्णुच्प्रत्ययो भवति । वनोति वनति वा **वनिष्णुः**—अपानोपरिस्थानम् । कर्त्ता । अञ्जू व्यक्तिम्रक्षणादौ रौ० । अस्य इष्ठ[13]प्रत्ययः । अनक्ति अज्यते वा **अञ्जिष्ठः**—गति[14]रग्निश्च । कर्त्ता कर्म च । ऋ गतौ भौ० ण्यन्तः । अस्य अनि[15]प्रत्ययः । अर्पयत्यर्प्यते वा **अर्पणिः**[16]—आर्द्रमांसम्[17] । कर्त्ता कर्म च । मदी हर्षे दै० । अस्य स्यन्प्रत्ययः[18] । माद्यत्युदकं प्राप्येति **मत्स्यः**—मीनः । कर्त्ता । अत सातत्यगमने भौ० । अस्य

---

१. 'माद्यत्य' इति ग. ।

२. 'अत्नि' इति ख. ग. घ. । 'कत्निच्' इति ङ. । 'अत्निच्' इति मनोरमा-तत्त्वबोधिन्योरुद्धृतः पाठः (मनो० ७८६ तत्त्व० ५४७) ।

३. '०यत्वली०' इति ख. ग. ज. ।

४. '०जलीष्णु' इति ख. ग. । '०जलिष्ठु०' इति ङ. ।

५. '०जिष्ठानि०' इति ग. ज. । '०जिष्ठनिशन्' इति क. ।

६. 'थिन्नि' इति नास्ति ख. ग. ङ. ज. । ७. 'षन्नसन्नूष' इति ङ. ।

८. 'स्यनिथिनुल्यषाषानुकाः' इति क. ।

९. 'बाहुः, बाहुमध्यमसमं च' इति ख. 'बाहुमध्यमश्च' इति क. ।

१०. 'यतुच्' इति युक्तः पाठः । तन्यतुपदस्यान्तोदात्तत्वदर्शनात् ।

११. 'तनोति तन्यते वा तनोतुः—वायुः सूर्यश्च । कर्त्ता कर्म च' इति क. ।

१२. 'अलिच्' इति क.। अयमेव युक्तः पाठः, अञ्जलिपदस्यान्तोदात्तत्वदर्शनात् ।

१३. 'इष्ठच्' इति युक्तः पाठः स्यात् । १४. 'भानुः' इति क. ।

१५. 'इषन्' इति क. । १६. 'अर्पिशम्' इति क. । 'अर्पिसः' इति ग. ।

१७. 'अर्वमासाग्रम्' इति ग. । 'अर्वमासम्' इति ख. ।

१८. 'माद्यतेः स्यन्' इति ख. ग.

इथिन् प्रत्ययः । अतन्ति तं प्रयान्तं साधव इति **अतिथिः**[1]—अनित्यस्थितिः । कर्म[2] । अगि गत्यर्थः । अस्य **इषन्**[3]प्रत्ययः । अङ्गत्यनेनेति **अङ्गिषः**[4] । करणम् । कु शब्दे आ०, कुङ् शब्दे भौ० । अस्य अषप्रत्ययः । कौति कवते कूयते वा **कवषः**—क्रोधनः, शब्दकारश्च[5] । कर्त्ता कर्म च । यु मिश्रणे आ० । अस्य उष[6]प्रत्ययः । यौति यूयते वा **यवुषः**—अणुजातिः[7] । कर्त्ता कर्म च । कृश तनूकरणादौ दै० । अस्य[8] आनुक्प्रत्ययः । कृश्यत इति **कृशानुः**[9]—अग्निः । कर्म[10] ॥

## स्पृशेः श्वणशुनौ पृ च ॥१३॥ ( पं० उ० ४।११३ )

स्पृशेर्धातोः श्वण शुन इत्येतौ[11] प्रत्ययौ भवतः, पृ इत्ययं चादेशः । स्पृश संस्पर्शने तौ० । स्पृशति स्पृश्यते वा तदिति **पार्श्वम्, पर्शुः**[12]—शरीराङ्ग पार्श्वगतमस्थि । कर्त्ता कर्म च ॥

## कुसेरूलोम्भोण्वोमेदेताः[13] कित् ॥१४॥ ( पं० उ० ५।२१ )

कुसेर्धातो **रूल** उम्भ **उण्व**[14] उम इद इत[15] इत्येते प्रत्यया भवन्ति किच्च । कुस श्लेषणे दै० । कुस्यतीति **कुसूलः, कुसुम्भः, कुसुण्वः**[16], **कुसुमम्, कुसिदः, कुसितः**[17]—एतानि कुसुमनामानि[18] । कर्त्ता ॥

---

१. शब्दोऽयं पूर्वत्र (पृ० १९) अपि व्युत्पादितः ।

२. 'अत सातत्य······कर्म' इति नास्ति ख. ग. ङ. ।

३. 'उलि' इति क. ।

४. 'अङ्गयतेऽनयेति अंगुलिः—करशाखा' इति क. ।

५. 'इन्द्रश्च' इति ग. ।

६. 'आप' इति क. ।

७. 'यवाषः—कण्ठजातिः' इति क. ।

८. 'अस्यागुणः' इति ख. ग. । प्रत्ययस्य कित्त्वेन सिद्धेऽनर्थकोयं पाठः ।

९. द्र०—यजुर्भाष्यविवरणम् ( ५।२७, ३२ ) । कृशाननिति प्राणयतीति कृशानुरित्यपि व्युत्पत्त्यन्तरम् ।

१०. 'कृश्यति धूममिति कृशानुः—दहनः कर्त्ता' इति क. ।

११. 'श्वण्शुनौ' इति क. ।

१२. 'पर्शु' नास्ति क. ।

१३. '०ण्वोत्वोमेदेताः' इति क. ।

१४. 'उत्व' इत्यधिकं क. ।

१५. 'ईद, ईत' इति ख. ग. । 'ईद, इत' इति ङ. ।

१६. 'कुसुत्वः' इत्यधिकं क. ।

१७. 'कुसीदः, कुसीतः' इति ख. ग. । 'कुसीदः, कुसितः' इति प्र० को० टी० ।

१८. 'पुष्पनामानि' इति क. ।

**जनिदाच्युसृवृमदिशमिनमिभृञ्भ्य इत्वन्त्वक्तन्[1] निक्शक्-छढखक्टाटचः[3] ॥१५॥ ( पं० उ० ४।११४ )**

एतेभ्यो धातुभ्यो यथासंख्यमित्वन् त्व क्तन् निक् शक् छ ढ ख क्ट अटच् इत्येते प्रत्यया भवन्ति । जनी प्रादुर्भावे दै०, जन जनने जौ० । जायन्ते जजन्ति जन्यते वा[4] **जनित्वः**—लोकः । जनयतीति वा **जनित्वः**—पिता[5] । कर्त्ता कर्म च । डुदाञ् दाने जौ० । ददातीति **दात्वः**—यज्वा । कर्त्ता । च्युङ् गतौ भौ० । च्यवत इति **च्योक्तः**[6]—अण्डजः, क्षीणपुण्यश्च । कर्त्ता । सृ गतौ भौ० जौ० । धावति सिसर्त्ति वा **सृणिः**—अङ्कुशः, आदित्यः, अनिलं च । कर्त्ता । वृञ् वरणे सौ० । वृणोति व्रियते वा **वृशः**—आर्द्रकम्, मूलकं च[7] । कर्त्ता कर्म च । मदी हर्षे दै० । माद्यतीति **मच्छः**—मत्तः पुरुषः[8] । **मच्छा**—स्त्री । कर्त्ता । शमु उपशमे दै० । शान्तमस्येन्द्रियमशुभैः कर्मभिरिति **शण्ढः**—नपुंसकः । अतीतकालः । शमु उपशमे दै० । शाम्यतीति **शङ्खः**—जलजः[10] । कर्त्ता । णमु प्रह्वत्वे शब्दे च भौ० । नमतीति **नटः**—चारणः । कर्त्ता । डुभृञ् धारणपोषणयोः, जौ० । बिभर्त्तीति **भरटः**—कपोलः[11], भृतकश्च । कर्त्ता ॥

**अन्येभ्योऽपि दृश्यन्ते ॥१६॥ ( पं० उ० ४।११५ )**

अन्येभ्योऽपि धातुभ्य इत्वादयः प्रत्यया दृश्यन्ते । पा पाने भौ० । पीयत इति **पेत्वम्**[12]—पानम् । कर्म । मा माने अ०, माङ् माने शब्दे च जौ० । मीयत इति **मेत्वम्**—मेयद्रव्यम् । कर्म[13] । ओप्यायी वृद्धौ भौ० । प्यायत इति **प्यात्वम्**[14]—समुद्रः, चन्द्रमाश्च । कर्त्ता । लूञ् छेदने क्रै० । लवनं लूनिः धान्यानां वर्तते । भावः[15] । डुकृञ् करणे ता० । क्रियत इति **कृशः**[16]—तनुः ।

---

१. 'मदिशमिगमिनमि' इति ङ. । २. 'त्वन्' इति ग. । 'त्नण्' इति ङ. ।
३. 'शक्स्यखाकटश्च' इति ङ. । ४. 'दै० । जन्यते जायते वा' इति क. ।
५. 'जनय०······पिता' इति नास्ति ख. ग. । ६. 'च्योत्वः' इति ग. ।
७. 'आर्द्रमलीकोका' इति क. । ८. 'उत्तमपुरुषः' इति क. ।
९. 'स्पर्शेन्द्रियम्' इति क. । १०. 'जनकः' इति ख. ग. ।
११. 'पटोलः' इति क. । १२. 'पीत्वन्' इति क. ।
१३. 'माति मिमीते मीयते वा मेत्वम्—प्रमेयद्रव्यम् । कर्त्ता कर्म च' इति क. ।
१४. 'प्यानः' इति क. । १५. 'भावः' नास्ति क. ।
१६. 'कृशतीति कृशः । 'इगुपधज्ञाप्रीकिरः कः' (अ० ३।१।१३५) इति व्युत्पत्त्यन्तरम् ।

कर्म । डुभृञ् धारणपोषणयोः जौ० । बिभर्ति भ्रियते वा **भृशम्** अत्यर्थम् । कर्त्ता कर्म च । अत सातत्यगमने भौ० । अतत्येतदिति **अच्छम्**—आसनम्[१] । कर्म । एवमन्येऽपि ॥

**सानसिधर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ॥१७॥** ( पं० उ० ४।११७ )

एते शब्दा निपात्यन्ते यथेष्टप्रत्यये निरूढाः[२] । सनतेः सनोतेर्वा असिः प्रत्ययः, उपधादीर्घत्वं च निपात्यते । सनति सनोति सन्यते[३] वा **सानसिः**—स्नेहः, हिरण्यं वा । कर्त्ता कर्म च । धृञोऽसिः प्रत्ययो नुमागमश्च निपात्यते । ध्रियते धारयति वा **धर्णसिः**—लोकपालः[४] । कर्त्ता कर्म च[५] । पॄ पालन-पूरणयोः क्र्यौ० । अस्यासिः प्रत्ययो नुमागमश्च निपात्यते । पृणातीति **पर्णसिः**—आभरणक्रिया । कर्त्ता । तड ताडने[६] चौ० । अस्योलप्रत्ययो नुमागमश्च निपात्यते ह्रस्वश्च[७] । ताडयत इति **तण्डुलः**—व्रीहिसारः[८] । कर्म । अकि लक्षणे भौ० । अस्योशन् प्रत्ययो निपात्यते । अङ्क्यतेऽनेनेति **अङ्कुशः**—प्रतोदः[९] । करणम् । चष भक्षणे भौ० । अस्यालप्रत्ययो निपात्यते । चषन्ति तस्मिन्निति **चषालम्**—यज्ञभाण्डम् । अधिकरणम् । इण् गतौ अा० । अस्य वलच्[१०] प्रत्ययो लुगागमश्च निपात्यते गुणाभावश्च[११] । अथवा इल स्वप्ने तौ० । अस्य[१२] वलच्प्रत्ययो निपात्यते [ऽगुणत्वं च] । एति इलति वा **इल्वलः**

---

१. 'प्रसन्नम्' इति क. ।

२. 'निरुद्धाः' इति क. ।

३. 'सन्यते' नास्ति क. ।

४. अत्राह दीक्षितः—"दशपाद्यां तु 'सानसिधर्णसि' इति पठित्वा 'धृञो नुक् च । धर्णसिर्लोकपालः' इति व्याख्यातम् । युक्तं चैतत् 'धर्णसिं भूरिधायसम्' (ऋ० ६।२६।३) इत्यादि दर्शनात्" इति (मनो० पृ० ७६४) । एवं तत्त्वबोधिन्याम् (पृ० ५५४) अपि ।

५. 'कर्त्ता । धृ धारणे अस्यासिप्रत्ययो नुमागमो निपात्यते । ध्रियत इति धर्णसिः—लोकपालः ।' इति क. ।

६. 'आघाते' इति ख. ।

७. 'निपात्यते ह्रस्वश्च' इति नास्ति ख. ग. ।

८. 'व्रीहिमज्जा' इति क. ।

९. 'गजप्रतोदः' इति क. ।

१०. 'अधिकरणम् । एतेर्वलच्' इति ख. ग. ।

११. 'निपात्यते गुणाभावश्च' इति नास्ति ख. ग. ।

१२. 'इलतेर्वा' इति ख. ग. ।

—असुरश्च। कर्त्ता[1]। पा पाने भौ०। अस्य[2] वलच्प्रत्ययो लुगागमो ह्रस्वत्वं च निपात्यते। पिबन्ति तस्मिन्निति **पल्वलम्**—सरः। अधिकरणम्। धिष शब्दे जौ०। अस्य यक्प्रत्ययो नुमागमश्च[3] निपात्यते। दिधीष्टीति[4] **धिष्ण्यम्**—गृहं, ज्योतिश्च। कर्त्ता[5]। शल गतौ भौ०। अस्य यक् प्रत्ययो निपात्यते। शलतीति **शल्यम्**—शरीरान्तर्गतं शस्त्रम्, राजा च। कर्त्ता॥

## आः समिण्निकषिभ्याम् ॥१८॥ ( पं० उ० ४।१८१ )

आभ्या[6]माप्रत्ययो भवति। इण् गतौ आ० सम्पूर्वः[7]। समेति **समया**—समीपम्[8]। कर्त्ता। कष हिंसार्थः भौ० निपूर्वः। निकषतीति **निकषा**—अभ्यासूया। निकषणं वा **निकषा**[9]। कर्त्ता भावश्च॥

## लोष्टपलितौ ॥१९॥ ( पं० उ० ३।८७ )

एतौ शब्दौ निपात्येते क्तप्रत्यये। रुष रोषे। अस्यादेर्लत्वं गुणश्च निपात्यते[10]। रोषतीति **लोष्टम्**—मृत्संघातः। कर्त्ता। त्रिफला विशरणे भौ०। अस्यादेः पकारादेश इट् चागमो निपात्यते। फलत्यनेनेति **पलितम्**—केशविकारः। करणम्॥

## अवद्यावमा[11]वरेफाः कुत्सिते ॥२०॥ ( पं० उ० ५।६० )

---

१. 'गुणाभावश्च। एति इति इल्वलः। अथवा इल स्वप्ने भौ०। अस्य वलच् प्रत्ययो निपात्यते' इति क.।

२. 'कर्त्ता। पिबतेर्वलच्' इति ख. ग.।

३. नुमागमे नैतत् सिद्ध्यति मित्त्वादचः परः स्यात्। नुमागमो नुडागमो वा युक्तः पाठः स्यात्।

४. 'दिधेष्टि' इति शुद्धं रूपम्।

५. 'अधिकरणम्। धिषतेर्युक् प्रत्ययो नुमागमश्च। दिधिभ्यां दीव्यतेर्वा षोऽन्तादेशो नुमागमश्च यत्प्रत्यये निपात्यते। दस्यदः धिष्ण्यम्—गृहं नक्षत्रम्। कर्त्ता' इति ख. ग.।

६. 'समिण् निकष इत्येताभ्यां धातुभ्याम्' इति क.।

७. 'इणः सम्पूर्वस्य' इति ख. ग.।

८. 'अभ्यासः' इति क.।

९. 'निकषति निकषणं वा निकषा—अभ्यासः' इति क.।

१०. 'रुष हिंसायां भौ०। अस्य रेफस्य लत्वं निपात्यते गुणश्च' इति क.।

११. 'माधमा' इति ङ.।

अवद्य अवम अर्वन् रेफ इत्येते शब्दा निपात्यन्ते यथेष्टप्रत्यये कुत्सितेऽर्थे निरूढलोपागमवर्णविकाराः । वद[1] व्यक्तायां वाचि भ्वौ० नञ्पूर्वः । अस्य यत्प्रत्ययो निपात्यते । न वदन्ति तत्साधव इति **अवद्यम्**—असारम्[2] । कर्म । टुवम उद्गिरणे भ्वौ० नञ्पूर्वः । अस्याकारप्रत्ययो निपात्यते । न वमन्ति[3] तत्पुरुषा इति **अवमम्**—जघन्यम् । कर्म[4] । ऋ गतौ भ्वौ० नञ्पूर्वः । अस्य वनिप्रत्ययो निपात्यते । अर्यतेऽसाविति **अर्वा**[5]—हयः[6] । कर्म । रिफ हिंसार्थः [तौ०][7] । अस्याकारप्रत्ययो निपात्यते । रिफति रिफ्यते[8] वा **रेफः**—रकारः[9] । कर्त्ता कर्म च । सर्व एते कुत्सितार्थाः ॥

## लीङ्रीङोर्ह्रस्वश्च पुट् तरौ श्लेषकुत्सनयो ॥२१॥ (पं० उ० ५।६२)

आभ्यां धातुभ्यां यथासंख्यं तरौ प्रत्ययौ भवतः पुट् चागमः, ह्रस्वश्चैतयोः[10] । लीङ् श्लेषणे[11] दै० । लीयत इति **लिप्तम्**—श्लिष्टम् । कर्त्ता[12] । रीङ् गतौ[13] [दै०] । रीयत इति **रिप्रम्**—कुत्सितम् । कर्त्ता[14] ॥

## स्थः स्तोऽम्बजवकौ च[15] ॥२२॥ ( पं० उ० ४।१०३ )

---

१. 'ऽर्थे अभिधेये निरूढाः । वद' इति क. । २. 'दोषः' इति क. ।

३. 'तत् साधवः ' ·· न वमन्ति' इति नास्ति ख. ।

४. 'कर्त्ता' इति ख. ग. ।

५. पूर्वमपि (पृ० १५१) व्युत्पादितः,

**'अवद्यावमार्वरेफाः कुत्सिते इत्यत्तैः कनिन्प्रत्ययोऽर्त्रादेशश्च निपात्यते'** इति (तै० सं० भट्टभा० भा० भा० १, पृ० ३१६) । ६. 'अश्वः' इति क. ।

७. 'ऋफ इति सौत्रो धातुः' इति ख. ग. ।

८. 'निपात्यते । राफा इत्ययं चादेशः । रेफति रिफ्यते' इति क. । 'ऋफति ऋफ्यते वा' इति ख. ग. ।

९. बहुलवचनात् क्वचित् 'रादिफः' (३।३।१०८ वा०) इति न प्रवर्तते । यथा 'रकारादीनि नामानि रामत्रस्तस्य रावणः' (रामा० ३।३९।१७) इति ।

१०. 'लीङ् रीङ् इत्येतयोः धात्वोर्यथासंख्यं तश्च रश्च तरौ प्रत्ययौ भवतः पुट् चागमः ह्रस्वश्च श्लेषकुत्सनयोरर्थयोः' इति क. ।

११. 'श्लेषणकुत्सनयोः' इति ग. । १२. 'श्लेशः । कर्म' इति क. ।

१३. 'स्रवणे' इति क. । 'श्रवणे' इति युक्तः पाठः स्यात् ।

१४. 'कर्म' इति क. । १५. 'स्थः स्थ चाम्बजवकौ' इति ङ. ।

 


स्था इत्येतस्माद् धातो[1]रम्बच् अबक इत्येतौ प्रत्ययौ भवतः, स्त इत्ययं चादेशो धातोः। ष्ठा गतिनिवृत्तौ भ्वा०। तिष्ठतीति **स्तम्बः—समवायः। स्तबकः—अङ्कुरः**[2]। कर्त्ता॥

॥ इति दशपादी—उणादिवृत्तौ प्रकीर्णनामा दशमः पादः[3] ॥

॥ इति दशपादी-उणादिवृत्तिः समाप्ता ॥

———

१. 'स्थो धातोः' इति क.।

२. 'स्तम्बः—अङ्कुरसमुदायः। तिष्ठतीति स्तबकः—पुष्पापीडः' इति क.।

३. 'इत्युज्ज्वलदत्तविरचितायामुणादिवृत्तौ प्रकीर्णपादो नाम दशमः पादः। इत्युणादिवृत्तिः समाप्ता। बनारस लाइट छापेखाने में गोपीनाथ पाठक ने छापा' इति ग.।

## दशपादी-उणादिवृत्तौ स्मृता आचार्याः

अन्ये २२४।

एके ३७, १६३, १९५।

केचित् १३५, २३९।

## दशपादी-उणादिवृत्तौ ग्रन्थान्तरोद्धृताः पाठाः[1]

| उद्धरणम् | पृष्ठम् | आकरग्रन्थः |
|---|---|---|
| क्वचित् प्रवृत्तिः क्वचिद० | १०७ | ? |
| जीवेग्नौ भास्करे चैव | ११७ | ? |
| घमः काञ्चनस्येव राशिः | ८१ | ? |
| घुटां तृतीयश्चतुर्थेषु | १४४ | कातन्त्र ३।८।८ |
| प्रत्यक्षे च परोक्षे च | १४३ | ? |
| महीपालवचः श्रुत्वा | १९२ | म० भा० ७।२।२३ |
| यमानिलेन्द्रचन्द्रार्क० | २० | ? |
| वाग्दिग्भूरश्मिवज्रेषु | ७६ | ? |
| वान्ति पर्णशुषो वाताः | १९१ | ? |
| विष्णौ शाखामृगे शक्रे | २० | ? |
| लुग्लोपे न प्रत्ययकृतम् | ६४ | कातन्त्र ३।८।२९ |
| शशाङ्के भास्करे चैव | ११६ | ? |

१. पाणिनीयाष्टकोद्धृतानि सूत्राणि नात्र निर्दिष्टानि।

# दशपादी-उणादि-सूत्राणाम्

## अकारादिक्रमेण सूचीपत्रम्

॥ इति दशपाद्युणादिसूत्राणां सूचीपत्रं समाप्तम् ॥

# दशपाद्युणादिस्थप्रत्ययानां सूचीपत्रम्

# दशपादीवृत्त्युदाहरणानां सूचीपत्रम्

३८

**॥ इति दशपादोवृत्तेरुदाहरणानि समाप्तानि ॥**

---

# संशोधन-पत्रम्

मुद्रणकाले उपरिष्ठाः स्वर-मात्रा अनुस्वारो रेफश्च प्रायेण लुप्यन्ते। एवमधस्तना अपि स्वर-मात्रास्त्रुटयन्ति। अयं दोषो मुद्रणकाले केष्वेव पृष्ठेषु भवति, न सर्वत्रेति कृत्वा तादृश्योऽशुद्धयोऽत्र न निर्दिष्टाः।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| उपो०-१५ | २६ | पृ० ३४५ | पृ० २२१ |
| २१ | ७ | कृमि० | क्रमि० |
| २५ | २७ | 'रुडायलुकौ' | 'रुड्लुकौ' |
| २६ | ८ | प्रह्लयते | प्रह्लियते |
| ,, | १५ | त्तोदात्तः | चोदात्तः |
| २७ | ६ | ओणः | कोणः |
| ३८ | ६ | ॥ ६४ ॥ | ॥ ६३ ॥ |
| ५० | १५ | २६२] | २७८] |
| ५२ | ११ | ॥ १३५ ॥ | ॥ १२५ ॥ |
| ६० | १५ | षूङ्ः | षूङः |
| ७६ | ११ | ०रश्मिज्त्रेषु | ०रश्मिवज्त्रेषु |
| ८१ | १५ | चृश्चि० | वृश्चि० |
| ८२ | ११ | ॥ १४ ॥ | ॥ १५ ॥ |
| ११० | ६ | ०हृत्र्विभ्य | ०हृत्रविभ्य |
| १११ | १४ | द्दक्षि० | द्रुदक्षि० |
| १३४ | १ | धातुभ्यामितच् | धातुभ्यामतच् |
| ,, | १५ | नन्दन्ता | नन्दन्ती |
| १५१ | ६-७ | मृद्वा मृद्वरी | मद्वा मद्वरी |
| १८५ | ६ | ॥ २५ ॥ | ॥ २८ ॥ |
| १८६ | २ | कटि० | कठि० |
| २२३ | ११ | ०ताडिम्य | ०ताडिभ्यः |
| २३६ | ७ | ०कृषिभ्यः | कुषिभ्यः |

---

# रामलाल कपूर ट्रस्ट द्वारा

## [प्रकाशित वा प्रसारित प्रामाणिक ग्रन्थ]

१. तैत्तिरीय संहिता—मूलमात्र, मन्त्रसूची सहित । ५०-००

२. तैत्तिरीय संहिता-पदपाठः—५० वर्ष से दुर्लभ ग्रन्थ का पुनः प्रकाशन, बढ़िया सुन्दर जिल्द १००-०० ।

३. ऋग्वेदादिभाष्य-भूमिका—पं० युधिष्ठिर मीमांसक द्वारा सम्पादित एवं टिप्पणियों से युक्त । सजिल्द ३०-००, सुनहरी जिल्द ३५-०० ।

४. माध्यन्दिन (यजुर्वेद) पदपाठ—शुद्ध संस्करण । ४०-००

५. गोपथ ब्राह्मण (मूल)—सम्पादक श्री डा० विजयपाल जी विद्यावारिधि । सबसे अधिक शुद्ध और सुन्दर संस्करण । मूल्य ५०-००

६. कात्यायनीय ऋक्सर्वानुक्रमणी—(ऋग्वेदीया) षड्गुरुशिष्य विरचित संस्कृत टीका सहित । टीका का पूरा पाठ प्रथम बार छापा गया है । विस्तृत भूमिका और अनेक परिशिष्टों से युक्त । मूल्य १००-००

७. ऋग्वेदानुक्रमणी—वेङ्कट माधवकृत । इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया है । व्याख्याकार—डा० विजयपाल जी विद्यावारिधि । उत्तम संस्करण ३५-००; साधारण २५-००

८. वैदिक-साहित्य-सौदामिनी—स्व० श्री पं० वागीश्वर वेदालङ्कार । काव्यप्रकाश साहित्यदर्पण आदि के समान वैदिक साहित्य पर शास्त्रीय विवेचनात्मक-ग्रन्थ । साधारण जिल्द ४५-००, बढ़िया जिल्द ५०-०० ।

९. वैदिक-छन्दोमीमांसा—यु० मी० । नया संस्करण २५-००

१०. वैदिक-स्वर-मीमांसा—यु० मी० । नया संस्करण ३०-००

११. वैदिक-जीवन—श्री विश्वनाथ जी विद्यामार्तण्ड ।
अजिल्द १२-००, सजिल्द १६-००

१२. बौधायन-श्रौत-सूत्रम् ( दर्शपूर्णमास-प्रकरण )—भवस्वामी तथा सायणभाष्य सहित । मूल्य ४५-०० । आधान-प्रकरण—सुबोधिनी वृत्ति सहित ४०-००

१३. दर्शपूर्णमास- पद्धति— पं० भीमसेन कृत, भाषार्थ सहित। २५-००

१४. कात्यायनगृह्यसूत्रम्—(मूलमात्र) प्रथम बार छापा है। २५-००

१५. श्रौतपदार्थ-निर्वचनम्—(संस्कृत) अग्न्याधान से अग्निष्टोम पर्यन्त आध्वर्यव पदार्थों का विवरणात्मक ग्रन्थ। सजिल्द ४०-००

१६. शिक्षासूत्राणि—आपिशल-पाणिनीय-चान्द्रशिक्षा-सूत्र। मूल्य ७-००

१७. निरुक्त-श्लोकवार्त्तिकम्—केरलदेशीय नीलकण्ठ गार्ग्य विरचित। एक मात्र मलयालम लिपि में ताडपत्र पर लिखित दुर्लभ प्रति के आधार पर मुद्रित। सम्पादक—डा० विजयपाल विद्यावारिधि। १२५-००

१८. निरुक्त-समुच्चय—आचार्य वररुचि विरचित (संस्कृत)। २०-००

१९. अष्टाध्यायी (मूल)—शुद्ध संस्करण ४-००

२०. अष्टाध्यायी-भाष्य—श्री पं० ब्रह्मदत्त जिज्ञासु कृत। प्रथम भाग ५०-००, द्वितीय भाग ३०-००, तृतीय भाग ३५-००। पूरा सैट ११५-००।

२१. धातुपाठ—धात्वादिसूचीसहित, सुन्दर शुद्ध संस्करण। मूल्य ३-५०

२२. क्षीरतरङ्गिणी—क्षीरस्वामी कृत धातुपाठ की व्याख्या। ६०-००

२३. धातुप्रदीप—मैत्रेयरक्षित विरचित धातुपाठ की व्याख्या। ४०-००

२४. महाभाष्य—हिन्दी व्याख्या—( द्वितीय अध्याय पर्यन्त ) यु० मी० भाग—I ६०-००, भाग—II अप्राप्य, भाग—III ३०-००।

२५. उणादिकोष—ऋ० द० स० कृत व्याख्या तथा पं० यु० मी० कृत टिप्पणियों, एवं ११ सूचियों सहित। अजिल्द १५-००, सजिल्द २०-००

२६. दशपादी-उणादि-वृत्ति संग्रह (प्रथम भाग)—माणिक्यदेव विरचित वृत्ति। ४०-००। द्वितीय भाग तीन वृत्तियों सहित छप रहा है।

२७. दैवम् पुरुषकारवार्त्तिकोपेतम्—लीलाशुकमुनि कृत। १२-००

२८. भागवृत्तिसंकलनम्—अष्टाध्यायी की प्राचीन वृत्ति। ८-००

२९. काशकृत्स्न-धातु-व्याख्यानम्—संस्कृतरूपान्तर। यु० मी० २०-००

३०. अष्टाध्यायीशुक्लयजुःप्रातिशाख्ययोर्मतविमर्शः—डा० विजयपाल विरचित पी० एच० डी० का महत्त्वपूर्ण शोध-प्रबन्ध (संस्कृत)। ५०-००

३१. विष्णुसहस्रनाम-स्तोत्रम् ( सत्यभाष्य-सहितम् )—पं० सत्यदेव वासिष्ठ कृत आध्यात्मिक वैदिक भाष्य। ४ भाग मूल्य ८०-००

३२. शुक्रनीतिसार—हिन्दी व्याख्या सहित । ५०-००

३३. विदुर-नीति—पदार्थ और व्याख्या सहित । ४०-००

३४. संस्कृत व्याकरणशास्त्र का इतिहास—युधिष्ठिर मीमांसक कृत नया परिष्कृत परिवर्धित संस्करण । तीनों भागों का मूल्य १२५-००

३५. मीमांसा-शाबर-भाष्य—आर्षमतविमर्शिनी हिन्दी व्याख्या सहित । व्याख्याकार—युधिष्ठिर मीमांसक । मूल्य प्रथम भाग ५०-०० । द्वितीय भाग ४०-०० तृतीय भाग ५०-०० । चतुर्थभाग ४०-०० । पञ्चम भाग ५०-०० । ( षष्ठाध्याय पर्यन्त) ।

३६. नाडीतत्त्वदर्शनम्—श्री पं० सत्यदेव जी वासिष्ठ । मूल्य ३५-००

३७. ऋषि दयानन्द सरस्वती के ग्रन्थों का इतिहास—लेखक—युधिष्ठिर मीमांसक । नया परिशोधित परिवर्धित संस्करण । ४०-००



## नवीन प्रकाशन

३८. मीमांसा-शाबर-भाष्यम् (मूलमात्र)—मीमांसाभाष्य में उद्धृत वचनों के पते बड़े प्रयत्न से ढूंढ कर दिये हैं । आरम्भ में शास्त्रावतार, वेद-श्रुति-आम्नाय-संज्ञा-मीमांसा, और श्रौत-यज्ञ-मीमांसा (संस्कृत) सहित । अन्त में ५ विविध परिशिष्ट सहित । प्रथम भाग मूल्य ६०-००

३९. श्रौतयज्ञ-मीमांसा—संस्कृत और हिन्दी में इसमें श्रौतयज्ञों की विस्तृत विवेचना की है । मूल्य २५-००

४०. प्रपञ्च-हृदयम्, प्रस्थान-भेदश्च (संस्कृत)—प्रपञ्चहृदय के कर्त्ता का नाम अज्ञात है । इसमें वैदिकवाङ्मय के अनेक ऐसे ग्रन्थों का वर्णन है, जिनका अन्यत्र उल्लेख नहीं मिलता । ज्ञान और योग के विषय में भी विस्तार से वर्णन किया है, जो मुमुक्षुजनों के लिये परम उपयोगी है । प्रस्थान-भेद के कर्त्ता मधुसूदन सरस्वती है । इसमें विभिन्न दर्शनों के मतों का सरल और संक्षेप से वर्णन किया है । ये दोनों ग्रन्थ चिरकाल से अप्राप्य थे । मूल्य २०-००

पुस्तक प्राप्ति-स्थान—

**रामलाल कपूर ट्रस्ट, बहालगढ़ (सोनीपत-हरयाणा) १३१०२१**

**रामलाल कपूर एण्ड संस, २५६६ नई सड़क, देहली**

